KÂVYAMÂLÂ.



# THE S'RINGÂRATILAKA BHÂNA

OF

# RÂMABHADRA DÎKSHITA.

S.10001

EDITED BY

PANDIT S'IVADATTA

Head Professor and Superintendent, Sanskrit Department, Oriental College, Lahore.

AND

KÂS'ÎNÂTH PÂNDURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJI.

PROPRIETOR OF JAVAJI DADAJI'S "NIRNAYA-SAGARA" PRESS.

BOMBAY.

1894.

*Price 6 Annas*

काव्यमाला. ४४.

श्रीरामभद्रदीक्षितविरचितं

# शृङ्गारतिलकम् ।



जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसादद्वारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशिनाथ-
शर्मणा च संशोधितम् ।



तच्च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९४





मूल्यं ६ आणकाः ।

# रामभद्रदीक्षितः ।

कौण्डिन्यगोत्रोद्भवः श्रीरामभद्रमखीन्द्रोऽयं कविर्दक्षिणदेशेषु कुम्भघोणनगरात्सप्तक्रोशमात्रदूरवर्तिनि कण्डरमाणिक्याख्याग्रहारे चतुर्वेदयज्वनो वंशे श्रीयज्ञरामदीक्षितात्समुत्पन्नः. बृहच्चरणजातीयोऽयं विप्रकुलमणिः. द्राविडी चास्य जन्मभाषा. उपगतमनेन बाल्ये वयसि श्रीमदप्पयदीक्षितसोदर्याचादीक्षितपौत्रस्य श्रीनीलकण्ठविजयाख्यचम्पूकाव्यस्य निर्मातुः श्रीनीलकण्ठमखिनः सकाशात्काव्यनाटकसालंकारलक्षणग्रन्थादिषु नितरां पाण्डित्यम्. अधीता च सम्यङ्निरवद्या पदविद्या श्रीमतश्चोक्कनाथमखीन्द्रात्. ऊढा च तदीया ज्येष्ठा कन्या. अभ्यस्ता चाध्यात्मिकी विद्या श्रीबालकृष्णभगवत्पादेभ्यः. पुनरयं सतीर्थ्यो महादेवकवेरद्भुतदर्पणाख्यस्य दृश्यकाव्यस्य निर्मातुः. श्रीमान्नीलकण्ठमखी च स्वकृतनीलकण्ठविजयाख्यचम्पूकाव्यस्य 'अष्टत्रिंशदुपस्कृतसप्तशताधिकचतुःसहस्रेषु । कल्यब्देषु गतेषु ग्रथितः किल नीलकण्ठविजयोऽयम् ॥' इति कालनिर्णयं कृतवान्. अतस्तदीयशिष्यश्चायं रामभद्रकविर्बहुशस्तदानीमेवाभूदिति वक्तुं शक्यते. किं च तञ्जनगराधिपतिः शहजः कावेरीतीरे कुम्भघोणनगरस्य क्रोशद्वयमात्रपरिसरवर्तिनि तिरुविशनल्लूराख्यस्थले शहजीराजपुरमिति स्वनाम्नाग्रहारमेकं निर्माय तत्रतत्र प्रदेशेभ्यः पण्डितानानाय्य सबहुमानं तत्र निवेश्य वृत्त्यर्थं तत्रैव पर्याप्तामुर्वरां प्रायच्छत्. तत्र प्रतिगृहीतृषु मुख्यतमाः—(१) श्रीरामभद्रमखीन्द्रः, (२) श्रीभास्करयज्वा, (३) श्रीवेङ्कटकृष्णयज्वा, (४) श्रीमहादेवकविः, (५) तिप्पाध्वरी, अन्ये च. सर्वेऽपि कवय एकग्रामवासिनश्च. विद्वद्राजः शहजिः कलेः ४७८४ संवत्सरादारभ्य ४८११ वत्सरावधि[1] सप्तविंशतिं वत्सरान्राज्यमकरोत्.

श्रीरामभद्रमखीन्द्रेण कृता उपलभ्यमानाश्च ग्रन्थाः—(१) अष्टप्रासः, (२) चापस्तवः, (३) जानकीपरिणयम्, (४) पतञ्जलिचरिताख्यं काव्यम्, (५) पर्यायोक्तिनिष्यन्दः, (६) प्रसादस्तवः, (७) बाणस्तवः, (८) विश्वगर्भस्तवः, (९) शृङ्गारतिलकम्. तदीयस्तूणीरस्तवो नोपलभ्यते.

अत्र शृङ्गारतिलकाख्यभाणनिर्माणे कारणं कविना स्वेनैवोच्यते—'प्रार्थितो निजशिष्येण रघुनाथेन धीमता । शृङ्गारतिलकं नाम भाणं विरचयाम्यहम् ॥' इति. आसीत्काञ्चीपुरे अम्मालय्यङ्गारापरनामधेयो वरदाचार्य इति कश्चन वैष्णवब्राह्मणः कविः. तेन वसन्ततिलकं नाम भाणो व्यरचि. तस्य ग्रन्थस्य अम्माभाण इत्येव प्रसिद्धिरासीत्. द्राविडभाषायां योषितः सबहुमानं 'अम्मा' इत्युच्यन्ते, पुमांसश्च 'अय्या' इति. अतः सर्वेऽपि विशेषतस्तच्छिष्याः श्रीरामभद्रमखीन्द्रं 'अय्या'[2] इत्येव वदन्तोऽभवन्. यदा तच्छिष्यैरश्रावि वरदाचार्येण अम्माभाणो निरमायीति तदा अय्याभाणोऽपि निर्मातव्य इति श्रीरामभद्रमखीन्द्रं ते प्रार्थयामासुः. अतस्तेनायं विरचितः. अस्य भाणस्य अय्याभाण इति च प्रसिद्धिः.

---

१. १६८४-१७११ खिस्ताब्दे. २. आर्यशब्दस्य विकृतिरियम्.

केनचन नाद्यापि शृङ्गारतिलकमिदं प्राकाश्यं नीतम्. तञ्जावरवासिभिः टी. एस्. कुप्पूस्वामीशास्त्रिभिः प्रेषितेन तालपत्रलिखितपुस्तकत्रयाधारेण, त्रिचनापल्लीवर्तिभिः एस्. सुब्रह्मण्यशास्त्रिभिः प्रेषितेन देवनागरीलिपिलिखितस्य पुस्तकस्य चाधारेण मुद्रितमिदं पुस्तकम्. तत्रैकं तालपत्रलिखितं पुस्तकं पञ्चपञ्चाशत्पत्रपरिमितं क्वचित्क्वचिज्जीर्णं पूर्णं च. प्रतिपृष्ठं सप्ताष्ट वा पङ्क्तयो वर्तन्ते. पुस्तकमेनदितः ६८ संवत्सरेभ्यः पूर्वं लिखितमिति भाति. यतः पुस्तकस्यान्तिमपृष्ठे 'पार्थिवसंवत्सरस्य वृषभमासे हस्तनक्षत्रे वृश्चिकलग्ने शृङ्गारतिलकं लिखितमासीत्' इति दृश्यते. अन्यत्तालपत्रपुस्तकं द्विसप्ततिपत्रपरिमितं बहुशो शुद्धमसंपूर्णं च. षोडशसंवत्सरेभ्यः पूर्वं तिरुविशनल्लूर्साम्बशिवशास्त्रिणा लिखितम्. तत्र ग्रन्थे दशाधिकशततमश्लोकावधि वर्तते. उभयोरपि पुस्तकयोः क्वचित्को वाक्यभ्रंशो दृश्यते. अपरं च तृतीयं तालपत्रपुस्तकं तञ्जावरवर्तिराजगृहस्थितपुस्तकप्रतिरूपकम्. प्रायशः शुद्धम्, पूर्णं च. पुस्तकत्रयमपि ग्रन्थाक्षरैरेव लिखितम्. यैर्महाशयैरेतानि पुस्तकानि काव्यमालार्थमस्मभ्यं दत्तानि तेषामुपकारगौरवं बिभृमः.

---

# काव्यमाला ।



श्रीरामभद्रदीक्षितविरचितः

## शृङ्गारतिलकभाणः ।

पाणिग्रहावसर एव दृढोपगूढा रागस्पृशा रघुपतेर्नयनाञ्चलेन ।
लज्जावशान्नववधूरिव संकुचन्ती दृष्टिर्महीदुहितुरस्तु विभूतये वः ॥१॥

अपि च ।

उन्मृष्टं कुचसीम्नि पत्रमकरं दृष्ट्वा हठालिङ्गना-
त्कोपो मास्तु पुनर्लिखाम्यहमिति स्मेरे रघूणां वरे ।
रोषेणारुणितस्त्रपातरलितः प्रेम्णा च विस्तारितो
दत्तो मैथिलकन्यया दिशतु वः क्षेमं कटाक्षाङ्कुरः ॥ २ ॥

(नान्द्यन्ते)

**सूत्रधारः**—(सादरमञ्जलिं बद्ध्वा ।)

भ्रमद्भ्रूवल्लीकं भृशतरलितापाङ्गवलनं
समुद्यत्सीत्कारं पुलकितकपोलस्थलयुगम् ।
करौ व्याधून्वत्याः कनकवलयध्वानमुखरौ
मुदे वस्तद्भूयान्मुखकमलपानं मृगदृशः ॥ ३ ॥

(इति पुष्पाञ्जलिं विकीर्य नेपथ्याभिमुखमवलोक्य ।) मारिष, इतस्तावत् ।

(प्रविश्य)

**पारिपार्श्वकः**—भाव, एषोऽस्मि ।

**सूत्रधारः**—अत्र किल वृत्रारिसमाराधितचरणारविन्दस्य विचित्रीकृतचतुःषष्टिविधविहारधौरेयस्य सुन्दरेशनाम्नो भगवतश्चन्द्रकलावतंसस्य नित्यनिवासेन निखिलनगरातिशायिसौभाग्यधुरंधरे मधुरापुरे मीनाक्षीपरिणयमहोत्सवदिदृक्षया समागतैर्वैदेशिकैरादिष्टोऽस्मि सामाजिकैः ।

**पारिपार्श्वकः**—कथमिव।

**सूत्रधारः**—अयि मधुरानगरवास्तव्य भरतकुलचूडामणे, रमणीयरूपकप्रयोगेषु निपुण इति श्रुतोऽसि। तदधुना सरसकविनिबद्धं हृद्यं किमपि नूतनं रूपकमभिनीय चरितार्थय चक्षुष्मत्त्वमस्माकमिति। (सहर्षम्।)

तदद्य चिरलब्धायाः सदस्यानन्दलक्षणम्।
अस्मन्नटनविद्यायाः फलमेवोपतिष्ठते॥ ४॥

**पारिपार्श्वकः**—विप्रतिषिद्धमेतद्यदुक्तं सरसकविनिबद्धत्वं रूपकस्य नूतनत्वं च। न खल्विदानीं निबद्धारः सरसकवयः।

**सूत्रधारः**—(स्मरणमभिनीय।) मा मैवम्।

गिरिक्षुभितनिःस्वनत्कलशसिन्धुगर्भस्थली-
निरर्गलविनिर्गलन्नवसुधारसस्रोतसा।
भुजाभुजिरणक्षमो भवति यस्य सूक्तिक्रमः
स एष सरसः कविर्जयति रामभद्रः सुधीः॥ ५॥

**पारिपार्श्वकः**—भाव, कः पुनरेष न जानामि।

**सूत्रधारः**—किमेतमपि जगद्विदितं न जानासि।

यश्चतुर्वेदयज्वेन्द्रवंशवारिधिकौस्तुभः।
यस्य कण्डरमाणिक्यग्रामो भवति जन्मभूः॥ ६॥

**पारिपार्श्वकः**—(साशिरःकम्पम्।) आः, स्मरामि। स एवायं यस्मै किल निखिलविद्वज्जनश्लाघनीयवैदुष्यशालिनो वदावदशिष्यसहस्रविभाव्यमाननिजप्रभावाः श्रौतधर्मा इव मूर्तिमन्तस्तत्रभवन्तश्चोक्कनाथमखिप्रवरा वितीर्णवन्तोऽपि प्रथमामात्मकन्यामन्यामिव पुनरपि स्नेहेन निरवद्यां वितरन्ति पदविद्याम्।

**सूत्रधारः**—तेनैव सरसकविना प्रणीतं शृङ्गारतिलकं नाम रमणीयं भाणं प्रयुञ्जानाः सामाजिकहृदमनुरञ्जयामः।

**पारिपार्श्वकः**—कथमस्य रघुवीरचरणारविन्दस्मरणनिरन्तरप्रवणचेतसो भाणनिर्माणेऽपि प्रवृत्तं हृदयम्।

**सूत्रधारः**—उक्तमत्र तेनैव— .

'प्रार्थितो निजशिष्येण रघुनाथेन धीमता ॥
शृङ्गारतिलकं नाम भाणं विरचयाम्यहम्' ॥ ७ ॥

इति ।

**पारिपार्श्वकः**—पुनरपि तत्र किंचिदाशङ्कते मे हृदयम् ।

**सूत्रधारः**—किं तत् ।

**पारिपार्श्वकः**—तस्य परिचितभूयिष्ठनिष्ठुरकैय्यटवचनसंपर्ककर्कशवाक्यक्रमस्य कथं सरसपदसंदर्भेऽपि प्रागल्भ्यमिति ।

**सूत्रधारः**—यत्किंचिदेतत् । किं न पश्यसि समन्ततोऽपि दुष्कविभिरुपहतस्य सरसकविताकन्दलस्य पुनरुज्जीवनाय धरण्यां गूढमवतीर्णां चतुर्मुखवरवर्णिनीमात्मरूपेत्यसाधारणेन सर्वतन्त्राणि स्वातन्त्र्येण विवृण्वतां नीलकण्ठमखिनां सदसि सकृत्प्रविष्टस्यापि समुल्लसति सरसपदसंदर्भवैदग्धी । अस्य पुनः कवेस्तदीयशिष्यस्य विशिष्य तद्भजनानुरक्तस्य किमु वक्तव्यम् । किंच सर्वमपि सुघटितमस्मद्भाग्यवशात् । तथाहि ।

उन्मीलन्नवमल्लिकापरिमलोदग्राः कवेरुक्तयो
भान्त्येतेऽपि रसज्ञपण्डितकविप्रायाश्च सामाजिकाः ।
ख्यातो नृत्तकलासु नः परिचयः किंचायमालक्ष्यते
कालः कोकिलकाहलीकलकलारम्भप्रियंभावुकः ॥ ८ ॥

तन्निर्वर्तय पात्रमविलम्बेन ।

**पारिपार्श्वकः**—यदाज्ञापयति भावः । (इति निष्क्रान्तः ।)

**सूत्रधारः**—(सर्वतो विलोक्य ।) तर्कयामि समन्ततो वसन्तसमयमेकान्तरमणीयम् । यतः ।

क्वचिद्विकचचम्पकस्तबकगन्धबन्धुः क्वचि-
द्विकासिनवमल्लिकाकुसुमसौरभालंकृतः ।
क्वचिद्द्रुमघुमायितो दलितबालचूताङ्कुर-
स्फुरत्परिमलैरसौ मलयमारुतः स्पन्दते ॥ ९ ॥

अपि च ।

संधारयन्ति तरवो मदनस्य बाणा-
न्गन्धाचलोऽपि रथमस्य परिष्करोति ।
उन्मीलति प्रियतमादृढविप्रयोग-
जन्मा च संप्रति विलासिजनप्रलापः ॥ १० ॥

(नेपथ्ये ।)

आलोलनीविवसनं दृढमाकलय्य
संयम्य कुन्तलभरं श्लथमाल्यबन्धम् ।
व्युष्टा निशेति रभसादवधूय सा मां
यातैव हन्त तरुणी किमितः करोमि ॥ ११ ॥

**सूत्रधारः**—(आकर्ण्य । नेपथ्यमवलोक्य ।) किं प्रविष्ट एव रङ्गमण्डपं हेमाङ्गीवियुक्तस्य भुजङ्गशेखरस्य भूमिकामादाय तत्तदनुगुणवेषभाषणाद्यभिनयविचक्षणो मम पैतृष्वसेयः कमलेक्षणः । तथाहि । पुरत एष

सामिस्रस्तं प्रवालारुणमपि शिरसा बिभ्रदुष्णीषभेदं
कस्तूरीचित्रिताङ्कं दधदलिकतलं कारितश्मश्रुरेखः ।
कक्ष्याबद्धावलग्नः कनकमयतुलाकोटिरम्यैकपादो
निद्राभङ्गारुणाक्षः प्रलपति किमपि ग्रामणीः कामुकानाम् ॥ १२ ॥

तदहमनन्तरकरणीयाय सज्जीभवामि । (इति निष्क्रान्तः ।)

प्रस्तावना ।

(ततः प्रविशत्यचिरोपनतनायिकाविरहविधुरो निष्कुटवनं गतो भुजङ्गशेखरः ।)

**भुजङ्गशेखरः**—('आलोलनीविवसनम्' (११ श्लोकः) इति पुनस्तदेव पठित्वा स्मरणमभिनीय ।) उक्तं तया तदानीमतिकातरया—

'अम्भोजकाननमहोत्सवलक्षणानि
शीतांशुकान्तिशिथिलीकृतिसूचकानि ।
आविर्भवन्ति मिथुनश्रुतिदुःसहानि
कुक्कूरुतानि चरणायुधकण्ठनालात् ॥ १३ ॥

तदधुना यावदतिप्रभाता न भवति निशा तावदितो गच्छामि' इति ।
(सखेदम् ।) अहो कथं पुनरासादितं दैवहतकेन ।

कालाद्बहोरपि परस्पररागबन्धे
दृष्टेऽप्यलंम्भि न समागमयोग्यकालः ।
किंत्वद्य लब्ध इव यावदमुष्य ताव-
त्प्रायुङ्क्त कुक्कुटरुतं विधिरन्तरायम् ॥ १४ ॥

अथवा किमर्थमकाण्डे मया विधिरुपालभ्यते । स हि कथंचिदपि निष्कुटवने संघटितवानावाम् । स एव पुनरुपालब्धव्यो यः किल

उरसि मम पतन्त्याः श्रान्तिभूम्ना रतान्ते
मधुरमधरबिम्बं यावदास्वादनाय ।
कुवलयनयनाया नोपगृह्णामि ताव-
त्परुषतरमकूजत्पातकी ताम्रचूडः ॥ १५ ॥

(पुनर्विचिन्त्य सोच्छ्वासम् ।)

अमुष्मिन्मन्दारस्तबकसुभगे निष्कुटवने
समुन्मीलद्दूर्वादलमृदुनि नीपद्रुमतले ।
तया साकं मञ्चे बहुगुणितमञ्चेलरचिते
रतारम्भो भावी पुनरपि किमिन्दीवरदृशा ॥ १६ ॥

कृतं कृतमलभ्यगोचरया चिन्तया । को नु तावतो मम भागधेयस्य संभवः । इदं पुनरप्यहमाशासे ।

मन्दस्मिताङ्कुरविकस्वरगण्डभागं
मन्दाक्षसंकुचितमञ्जुलदृग्विलासम् ।
बिम्बाधरारुणपरिष्कृतमानताङ्गी
वक्त्राम्बुजं पुनरपि प्रकटीकरोतु ॥ १७ ॥

(विचिन्त्य ।) का पुनरेतस्य प्रसक्तिरपि ।

यदद्य देवरो बालां बाभ्रव्यः पतिमन्दिरम् ।
व्याघ्रो निवासकान्तारं हरिणीमिव नेष्यति ॥ १८ ॥

अतः सर्वथा पुनरिदानीं

सा तुङ्गस्तनभरखिन्नमध्यभागा
नो द्रष्टुं सकृदपि लभ्यते नतभ्रूः ।

(सास्रगद्गदम् ।)

किं वक्ष्ये मुहुरयमप्यकाण्डवैरी
मर्माणि प्रहरति मार्गणैरनङ्गः ॥ १९ ॥

(कथंचिदपि शिरस्यञ्जलिं बद्ध्वा ।)

कुटिलायतनीलकुन्तलां कुचभारावनमत्कृशोदरीम् ।
मृगशावविलोचनां पुरो मम भूयोऽपि विधे विधेहि ताम् ॥ २० ॥

(सहर्षम् ।) स्पन्दत इवैष दक्षिणो भुजदण्डः । तन्मन्ये फलिष्यति मे मनोरथः । (इति चक्षुषी उन्मृज्य सर्वतो विलोक्य ।) किमियं प्रभातप्राया रजनी संवृत्ता । यदिदानीं

दरदलदम्बुजविगलन्मकरन्दकणानुषङ्गेन ।
अलिभिर्निरुद्धगमनः परितोऽपि स्पन्दते पवनः ॥ २१ ॥

अपि च ।

चक्रद्वन्द्वं चटुलनलिनीनालडोलाधिरूढं
गाढाश्लिष्टं त्यजति रजनीजातविश्लेषदुःखम् ।
नक्तं भुक्त्वा नवकुमुदिनीं विश्रमार्थी विभाते
गुञ्जागेहं विकचकमलं गाहते चञ्चरीकः ॥ २२ ॥

तदितो यावन्न प्रचरन्ति जनास्तावदेव शयनाय कल्पितं चेलं दक्षिणतो नीपद्रुमस्य निक्षिप्तमसिमपि गृहीत्वा बहिरेव निष्कुटवनान्निर्गमिष्यामि। (इति निर्गमनं नाटयित्वा पञ्चषट्पदानि गत्वा पुरो विलोक्य ।)

एष प्रस्खलितन्यस्तपादः संभ्रान्तलोचनः ।
कम्पमानोऽभ्येति कृतमूर्धावगुण्ठनः ॥ २३ ॥

(निपुणं निर्वर्ण्य । स्वगतम् ।) कथमसौ मत्प्रियसखो मन्दारको भीत भीत इवागच्छति । भवतु । पृच्छामि । (प्रकाशम् ।) सखे मन्दारक, कुतश्चित्कुतो धावसि । किं पाणिना मुखमसकृत्पिदधानः सगद्गदं ब्रवीषि—'वयस्य,

मा शब्दं कुरु । मा शब्दं कुरु । चित्रसेनो हन्तुमन्वेषयति माम्' इति । सखे, मा भैषीः । नन्वेष संनिहित एव प्रियसखस्ते खड्गपाणिर्भुजङ्गशेखरः । तदधुना चित्रसेनो राजन्यः संनह्यतु शतेन वा योधैः सहस्रेण वा । पश्चात्कृत्वा भवन्तमहमेक एव

हस्ताग्रभ्रमितकठोरखड्गधारानिर्भिन्नप्रतिभटगात्रनिःसरद्भिः ।
प्रत्यग्रैरिव हरिचन्दनद्रवैः स्यामालिम्पुं रणधरणीमसृक्प्रवाहैः ॥ २४ ॥

किं ब्रवीषि—'यद्येवमकुतोभयोऽसि' इति । कुतस्त्वयि विद्वेषो राजन्यस्य चित्रसेनस्य । किं ब्रवीषि—'निजप्रेयस्यां वासन्त्यामनुरक्तः' इति । अहो साहसिन्, किं राजन्यदारेष्वपि व्याप्रियसे । अपि शक्नोषि कालभुजंगफणान्मणिमादातुम् । किं न जानासि मानधना विशेषेण क्षत्त्रजातिरिति । किं ब्रवीषि—'सत्यमित्थं जानन्नपि प्रमुषितचेतनः प्रसवायुधेन संवृत्तोऽस्मि' इति । सत्यमेवेदम् ।

कथमपि किल दृष्टे कामिनीलोकमात्रे
परवशयति यूनां मानसं पञ्चबाणः ।
तदुपरि यदि साक्षात्सैव दृश्येत तन्वी
तव कथमिव न स्याच्चेतनायाः प्रमोषः ॥ २५ ॥

कथय सखे, किं तदनुरागस्य पलायनमात्रं फलमासीदुत किंचिदन्यदपि । किं ब्रवीषि—

'आरूढं शयनं तया सह कृताश्चाटूक्तयः सस्पृहं
प्रस्विन्नेन ततः करेण कथमप्यङ्गाभिमर्शः कृतः ।
आश्लिष्टो दृढमुन्नतः कुचतटोऽप्यस्याश्चकोरीदृशः'

इति । (स्वगतम् ।)

असौ धन्यो यूनां यदुरसि विशाले मृगदृशः
स्तनाभ्यां संक्रान्तो दृढतरपरीरम्भसमये ।
द्विधा वृत्ताकारो मलयजरसोऽयं मम दृशो-
र्वधूटीवक्षोजद्वितयपरिणाहं कथयति ॥ २७ ॥

(प्रकाशम् ।) सखे, किमेतावति लब्धेऽपि कुतस्ते खेदोऽपि । किं ब्रवीषि—

'किंतूपक्रम एव विघ्नितमभूद्बिम्बाधरास्वादनम्' ॥ २६ ॥

इति। हन्त हन्त, को वा प्रादुर्भावसमय एव नवनीतस्य भग्नवान्दधिस्थालीम्। किं ब्रवीषि—'कः पुनरन्यो भविष्यति राजग्रहान्निशीथे निजगृहमागतं चित्रसेनहतकमन्तरेण' इति। अहो प्रमादः। तदा किं कृतं भवता। किं ब्रवीषि—'सोऽपि मम दर्शनमात्रेण वार्धकिनेयमन्दारहतक, किमत्रापि धूर्तवृत्तिरिति खड्गमुद्यम्य त्वरितमभ्यधावत्। अहमपि तात्कालिकप्रतिभयान्निर्वाप्य दीपं निलीय कवाटमूले निष्क्रम्य च शनैः शय्यागृहान्निशीथे तदीयनिष्कुटवनपथेन पलायमानः सर्वामपि शर्वरीं परिभ्रमन्दिष्ट्या प्राणरक्षकं वयस्यमद्राक्षम्' इति। साधु मन्दारक, साधु। पुरःसरोऽसि भुजङ्गानां दुष्करेण राजन्यकुलप्रवेशेन। किं ब्रवीषि—'कस्मात्त्वम्' इति। कामन्तकस्य निष्कुटवनात्। किं ब्रवीषि—'कया तत्र संकेतितम्' इति। (दीर्घमुष्णं च निःश्वस्य। स्वगतम्।) किमस्मै निवेद्यतामुत्पन्नविनष्टमनोरथनिर्विण्णेन मया। भवतु। इदं तावत्। (प्रकाशम्।) न कयाचिदपि। किं ब्रवीषि—'किमुच्यते न कयाचिदपीति। किं ममापि गोप्यमस्ति। तत्त्वमेव कथय' इति। तर्हि शृणु। कथयामि। (इति कर्णे एवमिवेत्यभिनीय।) किं ब्रवीषि—'दुःसहस्ते तस्या विरहः। यतः।

अङ्गानि पाण्डुरकृशान्यलसा च दृष्टिः
पादार्पणं च भुवि मन्थरमन्थरं ते।
उन्मीलति श्वसितमूष्मलमायतं च
मन्ये तदुन्मिषति मन्मथदोःप्रतापः ॥ २८ ॥

अलमितः परं सा पतिगृहं गमिष्यतीति विषादेन। संध्यासमय एव तया सह योजयामि तत्रभवन्तम्' इति। एवं भवतु यदि तावत्कालमहं जीविष्यामि। किं ब्रवीषि—'अनया रथ्यया गच्छावः' इति। तर्हि तथा कुर्वः। सखे, पश्य पश्य। अस्यां किल रथ्यायाम्

आ हर्म्याग्रादपि विसृमरैरन्धकारैरधस्ता-
न्नीलोत्पीडस्तिमितसलिलस्तर्क्यते नूतनोऽब्धिः।
किंचेदानीमुपरि रुचयः प्रस्थितस्यास्तमिन्दोः
फेनच्छायां भवनशिखरप्रान्तलग्ना वहन्ति ॥ २९ ॥

किं ब्रवीषि—'न किंचिदपि ज्ञातवानस्मि राजन्यकृतरणरणिकेन यदिदानीमुषस्यतीव रजनी । तथाहि ।

अस्तं याति शशी चकोरतरुणीपीतावशिष्टैः करैः
किंचित्किंचिदुदञ्चति सितमिव प्राचीमुखे पाण्डिमा ।
दृश्यन्ते च जरन्मृणालरुचयः सप्ताष्ट वा तारका
निर्निद्रा निजनीडशाखिषु समं कूजन्त्यमी पक्षिणः' ॥ ३० ॥

इति । एवमेवैतत् । पश्य सखे, पश्य ।

इयन्तं कालं वा प्रविकसितनीलोत्पलदृशं
शशाङ्कः स्वच्छन्दं रजनिमुपभुज्यापसरति ।

अपि च ।

उडुव्याजात्क्रीडारभसशिथिला हारमणयो
विवृण्वन्ति व्योमस्थलमुभयसंकेतभवनम् ॥ ३१ ॥

किं ब्रवीषि—'वयस्य, पश्य दक्षिणतः । एताः किल वारवनिता मधुपानमदपरवशतया प्रतिपदविकटविन्यासपरिस्खलितपदाम्बुजझलझलायितकनकमञ्जीरमञ्जुलगतिक्रमाः, रतिरभसशिथिलबन्धस्य कुन्तलभरस्य संयमनाय समुदस्तकरपल्लवमन्तराल एव व्यापारयन्त्यो, विरचयन्त्यो मुहुरपद एव मुग्धसितमानर्तितभ्रूलतमकाण्ड एव मदारुणमक्षि विक्षिपन्त्यस्तरलसमुज्ज्वलहारमणिरमणीयकठिनकुचतटविस्रंसमानचीनांशुकपरिदृश्यमानानि नखपदानि निर्दिश्य कराग्रेण सकरतालमितरेतरमुपहसितुमुपक्रम्य रम्यमन्यदेव जल्पन्त्यः, परस्परमविदितप्रत्युक्तिक्रममवगतिसंगतिकामिनिज्ञातरहस्यकथागोपनमाकस्मिककोपवशादन्तरान्तरा किंचिदुच्चैर्वचनमर्धोदितवाक्यरमणीयं च संलपन्त्यः, प्रावृषिकविद्युत्पुञ्जपिञ्जराभिर्निजाङ्गरुचिमञ्जरीभिरखिलमपि दिगन्तरमुपलिम्पन्त्यो, विजयवैजयन्त्य इव जगदेकवीरस्य मकरकेतनस्य संकेतितविहारभवनात्प्रतिनिवर्तन्ते' इति । सखे, दृश्यत एव इत इदानीं

स्त्यायन्तः कबरीभरश्रियमिव प्राप्तुं क्वचित्सुभ्रुवां
वेणीवल्लितुलाभिलाषिण इव श्रेणीभवन्तोऽन्यतः ।

स्वैरास्वादितवारुणीसुरभिलश्वासैकबद्धस्पृहा
वारस्त्रैणमनुप्रयान्ति मधुरस्वाना जवेनालिनः ॥ ३२ ॥

किं ब्रवीषि—

'मुखरवलयहस्तो मुग्धगात्रप्रकम्पो
भयतरलदृगन्तः प्रस्खलद्वर्णवाक्यः ।
अलिषु निपतितेषूपर्युपर्योष्ठबिम्बं
विवशयति मनो मे सुभ्रुवां विभ्रमोऽयम्' ॥ ३३ ॥

इति । सत्यमेवेदम् ।

स्वतो वारस्त्रैणं तदुपरि दृढं यौवनमिदं
मदस्तत्राप्येष स्फुरति मधुपानेन जनितः ।
इयं चालिश्रेणी तरलयति तत्रापि

सखे, किमन्यत् ।

मधुरो
विलासोऽयं यूनां सुकृतपरिपाको विजयते ॥ ३४ ॥

सखे, दीयतां पश्चिमतो दृष्टिः ।

वामस्कन्धे दधदिह मृगत्वङ्मयीं वस्त्रपेटीं
गृह्णन्दोष्णा किमपि विपुलं पुस्तकं दक्षिणेन ।
प्रत्यासीदत्यलिकफलकं बिभ्रदस्पष्टपुण्ड्रं
कोऽयं धौतांशुकपरिवृतो मुष्टिमेयोपवीतः ॥ ३५ ॥

किं ब्रवीषि—'किं न जानासि पौराणिकोऽयं नारायणभट्टः प्रातःस्नानाया गच्छति । स्मरसि सखे, वेगवत्यां स्नास्यावः । तत्र चास्मै शाकिनीं बदरीफलानि च दास्यावः' इति । अहो बहोः कालाद्विस्मृतोऽयं स्मरतन्त्रनिष्ठे मया वैषयिकसुखनिसर्गवैरी श्रोत्रियवराकः । किं ब्रवीषि—'भवतु । अयमन्येषामतथाविधः पुराणपठनेन । स्वयं तु सम्यगनुभुङ्क्ते वैषयिकाणि सौख्यानि । तथाहि ।

ताम्बूलं कुसुमस्रजो मृगमदोन्मिश्रं च गन्धद्रवं
भक्त्यास्मै ददते पुराणपठनं शृण्वन्ति ये मानवाः ।

किंचायं विधवाः प्रलोभ्य युवतीर्ग्रन्थावसाने रहः
क्रीडामेव हि दक्षिणां विरचयन्गृह्णाति चेलाञ्चलम्' ॥ ३६ ॥

इति । साधु पौराणिक, साधु । सखे, किं ब्रवीषि—'इतः किंचिदुत्तरतः पश्य ।

स्फुरदधरमुदश्रु शोणनेत्रं कमपि कृताङ्गुलिभञ्जनं शपन्ती ।
कथमपि च सखीजनानुनीता प्रविशति मन्दिरमुत्पथेन तन्वी' ।

इति । आस्तामेतत् । पश्य पुरस्तादाविरस्ति नयनोत्सवः ।

कौशेयं रतिसंभ्रमाद्विलुलितं विस्रस्तकाञ्चीगुणं
संयन्तुं दृढमक्षमा करयुगेनालम्बमाना परम् ।
पश्यन्ती क्व नखाङ्क इत्यवयवान्संकेतितान्मन्दिरा-
द्बाला बन्धुजनावलोकनभिया तूर्णं विनिष्क्रामति ॥ ३८ ॥

किं ब्रवीषि—'इयं किल मालती नाम वसुदेवगुप्तस्य गृहिणी तव सुहृदा वसन्तकेन संप्रति वशीकृता' इति । अहो, मदीयमेव भाग्यम् । यावतां मत्सुहृदामप्युच्छृङ्खला पारदारिका । (निपुणं निर्वर्ण्य ।)

शीर्यच्चम्पकगर्भकः कचभरः श्रान्ते परं लोचने
निःश्वासेन विशृङ्खलेन कुचयोः स्पन्दोऽप्यमन्दोदयः ।
एतस्या हरिणीदृशः पुलकिता स्विन्ना च गण्डस्थली
लोलं नीविदुकूलमप्यचिरजं व्याख्याति वीरायितम् ॥ ३९ ॥

(पुरो विलोक्य ।)

प्राचीनाचलभूपमौलिविलसन्माणिक्यकोटीरकं
पाकारातिदिगङ्गनाकुचभरालंकारसौगन्धिकम् ।
उन्नम्रामरवर्त्म किंशुकनमत्प्रत्यग्रगुच्छो रवे-
र्बिम्बं पद्मवनीतपःफलपरीपाकः समुज्जृम्भते ॥ ४० ॥

अपि च ।

पयोजिनीं रागिणि पद्मबन्धावालिङ्गति स्मेरमुखीं करेण ।
पुनस्त्रपामीलितपद्मनेत्रा बभूव नीलोत्पलिनीति मन्ये ॥ ४१ ॥

किं ब्रवीषि—'चित्रमेतन्ननु शशिनश्चरित्रम् । पश्य ।

दृष्ट्वा प्रोषितवल्लभां कमलिनीं तस्या मुषित्वा श्रियं
दत्त्वा तां परिरम्भमूल्यविधया नीलोत्पलिन्यै निशि ।

प्राप्ते सांप्रतमात्तरश्मिपटले भानौ रुषेवारुणे
चन्द्रश्चोरवदस्तभूधरमपि स्रस्तांशुको धावति' ॥ ४२ ॥
इति। सखे, सम्यगुत्प्रेक्षितं भवता। किं ब्रवीषि—'अहमुत्तरामेव रथ्यामनेन पथा गमिष्यामि यत्र तत्कामन्दकस्य भवनम्।
रजनीमुखमेणाङ्को रागी यावन्न चुम्बति।
तावदेव त्वया सार्धं तन्वङ्गीं योजयामि ताम् ॥ ४३ ॥
तात्कयन्तमपि कालं सोढव्यो विरहवेगः' इति। सखे, सर्वथा योजयामीत्यमृतमयैरक्षरैराप्याययसि कर्णपुटीम्। साधय सखे, साधय। (इत्युक्त्वा कतिचित्पदानि गत्वा। विचिन्त्य।)

अद्यैव याति पतिमन्दिरमानताङ्गी
संयोजयिष्यति तदेष कथं तया माम्।
मन्दारकः परमनङ्गशरार्दितं मा-
माश्वासयन्निदमुतापहसन्नवादीत् ॥ ४४ ॥

अनेन पुनरिदमप्युक्तं कियन्तं कालं सोढव्यो विरहवेग इति। कथमयं मया सोढव्यः। यतः।

प्रसजति वेल्लति तपति ज्वलयति विदलयति निर्दहति चेतः।
प्रागपि तद्विरहाग्निर्ननु दुःसह एव न पुनरीदृक्षः ॥ ४५ ॥

अहो, विधिरपि व्याहतमेव पुनर्व्याहन्तुमीहते।

कुवलयदृशं तन्वीं कुम्भस्तनीं कुटिलालका-
मनिशमपि तां ध्यायत्प्रागेव दीर्यति मे मनः।
तदुपरि पुनः क्रूरो मारो विषैरिव मिश्रितं
क्षिपति च शरव्यूहं हा हन्त हन्त करोमि किम् ॥ ४६ ॥

(अग्रतोऽवलोक्य।) अयं खलु विशृङ्खलमदनमदारम्भसंभाविततारुण्यः पण्यविलासिनीघनस्तनकुम्भगाढपरिरम्भसंक्रान्तहरिचन्दनद्रवमुद्रितबाह्वन्तरो निरन्तररेखायितवलयपदलाञ्छितपृथुलांसः प्रशिथिलदृश्यमानमृगमदपत्राङ्कुरमकरपरिकर्मितमांसलभुजदण्डलग्नमणिताटङ्कपदः प्रतिनवकज्जललाक्षारसपरिच्छुरितरदनच्छदः प्रत्यग्रपलाशमुकुलसदृशकुटिलनखक्षतोपलक्षितकण्ठबा-

हुमूलः स्फुटतरदन्तक्षतलक्ष्यपद्मरागशकलाधिकसमुल्लसदधरपल्लवः परिधौतपक्ष्मपुटयुगलपरिष्कृतनयनाम्बुजः स्तोकश्लथकिसलयारुणमृदुलशिरस्त्राणदृश्यमानचम्पकस्त्रग्भिर्वेष्टितवक्रकुञ्चिकः परिम्लानविकचकर्णावतंसकह्लारः सान्द्रजातीलवङ्गचन्द्रशकलसुरभिताम्बूलपूरितवदनारविन्दः सव्यकरमुष्टिगृहीततरुणकेतकीपर्णरुचिरनागवल्लीदलसंचयो दक्षिणकरतलसमुत्क्षिप्तनिशितकौक्षेयकः कौसुम्भपरिधानाञ्चलविन्यासभव्यसव्यभुजशिखरः सुरतान्तसुखसंवेशवशदृढलग्नपरिम्लानपञ्चषशयनास्तरकुसुमरमणीयचरमाङ्गः प्रसृमरघनसारविलेपनपरिमलकरम्बितनिजाक्रान्तसरणिः कलहंसो नाम मत्प्रियसुहृदित एवाभिवर्तते । सखे कलहंस, पश्यन्नपि मां कथमनालपन्नन्यतो गच्छसि । किं ब्रवीषि—'अद्य कश्चिदैन्द्रजालिकश्चन्द्रकलामन्दिरद्वारे विविधान्यद्भुतानि प्रदर्शयिष्यतीति प्रतिष्ठिते वेशवाटं प्रति विलासिजनः । तदहमपि वेगवतीतीरे मुखमुन्मृज्य त्वरितमागमिष्यामि । त्वमपि तत्रैव गच्छ । तत्रैवावयोः संलापो भविष्यति' इति । (स्वगतम् ।) अयं कश्चिन्ममाप्याक्षेपो विरहखेदविनोदनोपाय इव । (प्रकाशम् ।) कलहंस, अहमपि वेशवाटमेव गच्छामि । (पदान्तरे स्थित्वा ।)

त्रुटितममलं पाणौ कृत्वोपवीतमदक्षिणे
मुहुरभिमृशन्नन्येनायं विलूनशिखं शिरः ।
धवलरदनः सर्वाङ्गीणप्ररूढतनूरुहो
द्रुतमभिपतन्कश्चिद्वर्णी करोति मुदं दृशोः ॥ ४७ ॥

(विमृश्य ।) अयं हि गणदत्तोपाध्यायशिष्यो देवरातो नाम ब्रह्मचारी । देवरात, केन कृतमद्भुतमीदृशं ते रूपम् । किं ब्रवीषि—'उपाध्यायवैधवेयेन' इति । कस्त्वयि तस्य कोपहेतुः । किं ब्रवीषि—'ज्ञायते हि नूतनप्राप्तवैधव्या सारङ्गिका नाम तस्य तनया' इति । ज्ञायत एव । यां किल मासद्वयमारभ्य भवान्गूढमेव कलत्रयतीति किंचित्किंचिदाकर्ण्यते । अपि च ।

आमुक्तधौतसिचयाञ्चलकम्बुकण्ठ-
मानीलकीर्णकबरीभरसंवृतांसम् ।

गात्रं निराभरणसुन्दरकर्णपाशं
तस्या न कस्य हृदयं तरलीकरोति ॥ ४८ ॥

किंच।

पार्श्वेषु दन्तपङ्क्त्या प्राक्तनताम्बूलकृष्णिकाङ्कितया।
तरलयति सा नताङ्गी स्मयमाना कामिनां चेतः ॥ ४९ ॥

किं ब्रवीषि—'सा पुनरद्य विविक्तमग्निहोत्रभवनकोणमासाद्य मया सह विहृतवती। तच्चोपाध्यायेन साक्षादेव दृष्टम्' इति। तर्हि युक्तमेवाचरितमुपाध्यायेन। यतः।

इतस्तुर्याश्रमप्राप्त्यै स्मरतन्त्रविधानतः।
उपाध्यायस्तवाकृन्तदुपवीतं शिखामपि ॥ ५० ॥

(सरोषम्।) किं ब्रवीषि—'अहमपि दुर्वृत्तं धनमित्राय निवेद्य तस्य प्रतिकरिष्यामि' इति। (सोत्कण्ठम्।) किं तत्कथय कथय। किं ब्रवीषि—'किं भवानपि न जानाति यदा प्रियंवदा नाम धनमित्रद्वितीयगृहिणी पुष्पिणीत्येकाकिनी देहलीमधिशेते, तदा तिसृष्वपि रजनीषु गणदत्तोपाध्यायः स्वगृहान्निशीथे धनमित्रगृहमागच्छति। अनन्तरं च

कराग्रदरघट्टनस्मृतपुराणसंकेतया
तया कृतकनिद्रया लघु कवाटबन्धे हृते।
प्रविश्य गृहदेहलीं झटिति पुष्पवत्या समं
निशीथमखिलं विटः प्रमुदितः परिक्रीडते ॥ ५१ ॥

इदं तु मया कदाचिदर्धरात्रे दृष्टम्' इति। (सहस्तास्फालनं विहस्य।) अद्भुतमिदं श्रोत्रियमानिनश्चरित्रम्। ततस्तरां पतिव्रतांमन्यायाः प्रियंवदायाः। अथवा कुलाङ्गनेत्येव न विश्वसनीया स्त्रीजातिः। तथाहि।

नान्यं किंचिदवेक्षते न सकृदप्येषा बहिर्गच्छति
स्वामालीमभिभाषते न कुलटां दृष्ट्वा परं वेपते।
स्निह्यत्येव सतीष्विति प्रणयिनो विस्रम्भमातन्वती
निद्राणेषु जनेषु नक्तमबला निर्याति रन्तुं विटैः ॥ ५२ ॥

शृणु देवरात, इतः परं ते हितमुपदिशामि।

किं वेदाध्ययनेन किं नु तपसा किं कृच्छ्रचान्द्रायणैः
क्लेशः प्रत्युत तेन मा चर सखे मूढोपदिष्टान्विधीन् ।
रन्तुं किंतु निरोधिहस्तवलयप्रत्युप्तरत्नाङ्कुर-
च्छायापूरितनिम्ननाभिसुदृशां नीवीं रहः स्रंसय ॥ ५३ ॥

किं च । मास्तु ते तत्संपादनाय धनार्थमपि विचारः । समाश्रयस्व तत-श्चौर्यं नाम कल्पतरुम् । किं ब्रवीषि—'अनुगृहीतोऽसि स्मरतन्त्रसिद्धान्त-विदा तत्रभवता' इति । साधय देवरात, संस्मर मामपि सततम् । संचर वेश-वाटगृहेषु स्वच्छन्दम् । अहमपि वेशवाटं प्रवेक्ष्यामि' इति । (पुरतोऽवलोक्य ।) इयमिदानीं युवपरिषदानीयमानपणीकृतमदकरटिधोरणीपार्श्वयुगलविलम्बमा-नश्रोतृजनश्रुतिलुण्टाकमुखरघण्टारवकथितवारवधूपभोगसौभाग्या निरन्तरम-दनतन्त्रसिद्धान्तसमाचरणप्रचारणजागरूकवावदूकमदनाचार्यसततविचार्य-माणसाङ्गवात्स्यायनमतानुष्ठाना, निरवद्यरसाभिनयहृद्यसंगीतनटनविद्यावैश-द्यशालिना, शिक्षितकरणजातेन, शीलितनखार्पणदन्तपदचुम्बनोपगूहनभेदेन, संस्तुतमणितसीत्कारेण, समभ्यस्तयुवजनसंवननप्रकारेण, निरतिशयरूपधेयेन, निरवधिकविभवभागधेयेन, मूर्तिमदपवर्गेण, वारविलासिनीवर्गेण सौवर्गमपि सुखं लघूकुर्वती, सर्वरसिकजनहृदयनिरोधिका मधुरापुरवेशवीथिका ।

परिक्रामद्दूतीजनसविनयव्याहृतिवचः-
सुधाशाम्यत्क्रीडाकुपितमिथुनान्योन्यकलहा ।
पणाधिक्याल्पत्वव्यवहरणनिष्पादितमिथो-
विवादातिक्रुध्यद्विटजरठवेश्यानिबिडिता ॥ ५४ ॥

अत्रैव प्रविश्य चन्द्रकलामन्दिरद्वारे विविधमैन्द्रजालिकं दर्शयिष्यमाणं विविधमद्भुतं द्रक्ष्यामि । (इति वेशवाटप्रवेशं नाटयित्वा ।) अत्र हि वेशवाटे

उरसि स्तनकुड्मलौ प्रकाशं भजतो वारमृगीदृशां न यावत् ।
समुदञ्चति मञ्जुलस्ततः प्राग्वचने दृग्वलने च वक्रभावः ॥ ५५ ॥

(विचिन्त्य ।) किं ब्रवीम्यत्रत्यानां वैदेशिकयुवजनसंवननचातुर्यम् । यतः ।

यत्किंचिद्व्यपदिश्य संनिदधते वेश्याः पुरः कामिनां
गायन्त्यः कलमन्तरेव च ततस्तिष्ठन्ति दृग्गोचराः ।

सव्यानश्लथनच्छलेन च मुहुः संदर्शयन्ति स्तनौ
पश्चात्तान्प्रणयस्पृशेव च दृशा दृष्ट्वा वशीकुर्वते ॥ ५६ ।

किं च। विचित्रमेव वेश्यानां युगपदनेकयुवजनावर्जनवैदग्ध्यम्। यत्किल।

एकं भ्रुवोर्विलसितैरितरं कटाक्षै-
राभाषणैरपरमन्यमपि स्मितेन।
आवर्जयन्ति हि तथा गणिका यथा ते
स्वस्वैकदत्तहृदया इति विश्वसन्ति ॥ ५७ ॥

अत्र पुनरन्यादृश एव वैदेशिके [illegible]गिनि जरतीजनस्य व्यापारः। तथा हि।

अभ्यायान्तं विटमभिनवं दूरतो वीक्षमाणा
तस्याढ्यत्वे तदनु विदिते प्रौढचेटीमुखेन।
पार्श्वे कृत्वा जरठगणिका भूषितामेव कन्यां
तैस्तैर्वाक्यैः परिचितमिव द्राङ्ग्यत्यात्मगेहम् ॥ ५८ ॥

(विमृश्य।) अहो जरतीजनो नाम कामिनो मनोरथसिद्धिप्रत्यूहः। यतः।

पणान्कलहतोऽधिकान्प्रथममाददानो विटा-
न्निजं गृहमुपागते तदनु रन्तुमस्मिन्पुनः।
निशामहह भाषणैश्चटुभिरर्धमर्धं सुता-
प्रसाधनविधानतः क्षिपति वृद्धवेश्याजनः ॥ ५९ ॥

(ऊर्ध्वमवलोक्य।) इह खल्वभ्रंलिहेषु हर्म्येषु

आरुह्योच्चैः पृथुकुचभरे वक्षसि प्रेयसीना-
माजिघ्रन्तो वदनमधरं शश्वदास्वादयन्तः।
संक्रीडन्ते सुरतविरमे प्राप्य चानन्दमूर्छां
तस्मिन्नेव श्रमपरवशाः कामिनः संविशन्ति ॥ ६० ॥

(श्रवणमभिनीय।) अत्र हि शिरोगृहाभ्यन्तरे

मदनमहाहवशंसी मदिराक्षीकण्ठजयशङ्खात्।
उदितो हरति मनो मे भवनकपोतैरनूदितो निनदः ॥ ६१ ॥

अन्यत्रापि।

असकृदवकर्ण्यमानो हर्म्याग्रे मेखलाखलात्कारः ।
कस्याश्चिच्चतुरायाः कथयति पुरुषायितं सुदृशः ॥ ६२ ॥

(पार्श्वतो विलोक्य ।) कथमत्रैव सख्या कलकण्ठ्या सह बालातपमनुसरति लीलावती । अस्याः किल

सिन्दूरद्युतिविभ्रमं विदधते सीमन्तरेखान्तरे
कह्लारस्तबकावतंससुषमां पुष्णन्ति कर्णाग्रयोः ।
शङ्कामङ्कुरयन्ति कुङ्कुमनवक्षोदस्य वक्षोजयो-
र्बालां संप्रति सर्वथा बत परिष्कुर्वन्ति बालातपाः ॥ ६३ ॥

एषा मामालोक्य सख्या सममुत्तिष्ठति । तदहमुपसर्पामि । सखि लीलावति, सुखमास्यताम् । पूर्वदासेऽपि मयि कियानुपचारः । किं ब्रवीषि—'किं वक्तव्यं भावस्य वचनचातुर्यम्' इति । अये कलकण्ठि,

भवति विरलरागः पल्लवो निःसहेन
स्तबकयुगमनेन स्पन्दते मारुतेन ।
मधुकरनिकरोऽपि व्याकुलो दृश्यतेऽयं
वद तदियमवस्था वल्लिकायाः कुतोऽभूत् ॥ ६४ ॥

किं ब्रवीषि—'परंतपात्' इति । यद्येवमनुचितमनया सखिवल्लभया संभाषितुम् । किंतु कथयामि किमपि सखीं प्रति कलकण्ठीम् ।

सस्नेहमङ्कमधिरोप्य बृहन्नितम्ब-
संबन्धकन्दलितसौख्यनिमीलिताक्षः ।
गाढोपगूढकठिनस्तनबद्धतृष्णः
कान्ते त्वया सकृदपि स्पृहयामि रन्तुम् ॥ ६५ ॥

किं ब्रवीषि—'यदि भावः प्रार्थयते धन्या भवति कलकण्ठी' इति । तर्ह्यास्यताम् । उभाभ्यां श्वः समागमो भविता । (इति पदान्तरे स्थित्वा ।) इयं किल भवनद्वारे कमलावती

आरक्तसंकुचदपाङ्गमुदस्तहस्त-
मुन्नम्रितस्तनमृजूकृतमध्यभागम् ।

नीवीसमुच्छ्वसितदर्शितनाभिदेशं
निद्रावशेषकलुषा कुरुतेऽङ्गभङ्गम् ॥ ६६ ॥

सखि कमलावति,

मणिहारमनोहरान्तरालं च्युतसंव्यानमुरस्तवावलोक्य ।
कुतुकं वहतः करौ मदीयौ कुचकुम्भग्रहणे चकोरनेत्रे ॥ ६७ ॥

किं ब्रवीषि—'मन्दं भण । जरती श्रोष्यति' इति । (सभयम् ।) कः प्रभवति कालभुजंगीमुखे पतितुम् । तदन्यतो गच्छामि । हस्तेन मामवलम्ब्य किं ब्रवीषि—'श्वः संभाव्यताम् । न विस्मरणीया कमलावती' इति । साधु कमलावति, साधु ।

आलम्ब्य धैर्यमविचार्य नितम्बभार-
मारुह्य मय्यधिकमुच्छ्वसितं निशम्य ।
अन्तः कलक्कणितकन्धरमुभ्रमन्त्याः
किं विस्मरामि दयिते रतिकौशलं तत् ॥ ६८ ॥

आस्व । साधयामि । (अग्रतो विलोक्य ।)

काचित्कुचाग्रचलमौक्तिकदाम दोर्भ्यां
कस्याश्चिदम्बुजदृशः पुरतः स्थितायाः ।
आकीर्य मारुतविधूतकलिन्दकन्या-
कल्लोलविभ्रमभृतश्चिकुरान्धुनोति ॥ ६९ ॥

इयं हि पद्मावती कनीयस्याः कमलिन्याः कबरीं बध्नाति । (उपसृत्य ।) अये पद्मावति,

किमिदं मम बध्यते मनः कमलिन्याः कचबन्धकैतवात् ।
अथवास्य विलासिनि स्वतश्चपलस्योचितमेव बन्धनम् ॥ ७० ॥

किं ब्रवीषि—'प्रगल्भाभोगरसिकस्य कथमस्यामपि तवाभिलाषः' इति । सखि, मा मैवम् ।

तैस्तैश्चाटुवचोभिरार्द्रहृदयामानीय शय्यागृहं
सव्याजं शयने निवेश्य च कृते काञ्चीगुणस्रंसने ।

पाणिभ्यामपि नीविबन्धमचिरादाच्छादयन्त्या भिया
तन्व्यास्तत्प्रथमा निषेधमधुरा धन्यो गिरः श्रोष्यति ॥ ७१ ॥

तदिदानीम्

दृशि दलदुत्पलकान्त्या दन्तपुटे कन्दलेन शोणिम्ना ।
वक्षसि कुचमुकुलाभ्यामपि च विलोभयति मामियं बाला ॥७२॥

किं ब्रवीषि—'तर्हि भवानेव हरिष्यति कौमारं मे कनीयस्याः' इति । यद्यनुमन्यते जरत्यपि कृतार्थोऽस्मि । (इति परिक्रम्यान्यतो विलोक्य ।) इयमत्र रत्नावली । अस्याः किल

पश्चाद्भागविलम्बिनीं मृगदृशः पर्यायभुग्नाकृतिं
दृष्ट्वा कालभुजंगविभ्रमभरां द्राघीयसीं वेणिकाम् ।
पर्याकुञ्चितपक्षतिप्रविततग्रीवं च तूर्णं परि-
क्रामन्नेष विहारबर्हिणयुवा चञ्च्वा समाकर्षति ॥ ७३ ॥

इयमपि, ससंभ्रमम्

पार्श्वस्रस्तललाटभूषणशिखापर्यस्तकर्णोत्पलं
नासामौक्तिकसंनियोगसुभगप्रस्तब्धसव्यांसकम् ।
साचीकृत्य मुखारविन्दमसितापाङ्गभ्रमत्तारकं
वेणीकर्षिणमीक्षते सुकृतिनं केलीमयूरं वधूः ॥ ७४ ॥

(उपसृत्य ।) सखि रत्नावलि, किमर्थमाहन्यते लीलाम्बुजेन केलीमयूरः । किं ब्रवीषि—'भवदाचरितव्यमयमाचरति वराकः' इति । तथा चेदाहन्यतामयं निसर्गवैरी भुजंगवर्गस्य । यद्वा नायमाहन्यताम् । यतः ।

आकर्षत्युपसृत्य वेणिलतिकामप्यम्बुजेनाहतो
नायं मुञ्चति पादमूलमृजुतां चित्ते विधत्ते गिराम् ।
प्रेमावेशविकस्वरेण शनकैरङ्गीकृतश्चक्षुषा
कामीवैष तवानताङ्गि पुरतः केकी मुदा नृत्यति ॥ ७५ ॥

किं ब्रवीषि—'अलं प्रियालापेन । जानामि काञ्चनलताकामुकं तत्रभवन्तम्' इति । कल्याणि, कथमिदमनृतमुच्यते ।

कथमन्यत्र भवेन्मम रागस्त्वत्संगमैकरसिकस्य ।
रमते किमितरतोऽपि भ्रमरः सहकारमञ्जरीचपलः ॥ ७६ ॥

तदहमजस्रमपि

गाढाश्लिष्टतुषारशीतलकुचं कण्ठोन्मिषत्कूजितं
निःश्वासोद्गतसौरभं नवसुधानिष्यन्दिबिम्बाधरम् ।
निःशेषापहृतांशुकस्फुटतराशेषाङ्गरूपोच्चयं
संभोगं तव चिन्तयामि दयिते सर्वेन्द्रियाह्लादनम् ॥ ७७ ॥

किं ब्रवीषि—'चतुरोऽसि यथोचितमालपितुम् । याहि यथागतं धूर्तधौरेय' इति । तर्ह्यनुचितस्त्वया संप्रति संल्लापः । प्रत्युत कोपाय भवति । तत्पश्चादागमिष्यामि समीकर्तुम् । (इत्यन्यतः परिक्रम्य ।) कथमत्रैव प्रतिपदमपि सखीजनोपलालितसंगीतरीतिरङ्गीकृतगृहवितर्दिकामध्यवासा मधुरवाणी

आपीनस्तनकुम्भकुङ्कुमरसैरर्धारुणां वल्लकी-
मासज्योपरि वक्षसो नखमुखैरास्फालयन्ती क्रमात् ।
मन्दान्दोलितकर्णपत्रमधुरस्मेरानना कामिनी
शृण्वत्केलिकुरङ्गशावकलितोत्सङ्गा कलं गायति ॥ ७८ ॥

सखि मधुरवाणि, कथं गायसि ।

'[1]एव्वं जस्स सुणीअदि त्तिहुवणक्खोहोजिदं साहणं
वामक्खीण विलोअणं त्ति महुरालावो त्ति हासो त्ति अ ।
दक्खो कामिजणाणरत्तिसु वहूभोगोवदेसे ससी
मित्तं जस्स खु दाव होदु विजई सो केलिणीकामुओ ॥ ७९ ॥'

इति । अहो गानस्य माधुर्यम् । (इति शिरः कम्पयन् ।)

मुञ्चतीव मधु क्षौद्रं सिञ्चतीव सुधारसम् ।
कर्णौ हरति मे कामं गानं मधुरवाणि ते ॥ ८० ॥

अपि च ।

तरुणि य इह गाने व्यक्तसप्तस्वरोऽभू-
दलिनि परभृते वा दृश्यते नैष नादः ।

---

१. 'एवं यस्य श्रूयते त्रिभुवनक्षोभोचितं साधनं वामाक्षीणां विलोचनमिति मधुरालाप इति हास इति च । दक्षः कामिजनानुरक्तिसु वधूभोगोपदेशे शशी मित्रं यस्य खलु तावद्भवतु विजयी स केलिनीकामुकः ॥' इति च्छाया.

अपि तु तव सकाशाद्वल्लकी रागभङ्गी-
मसकृदनुसरन्ती गानमभ्यस्यतीव ॥ ८१ ॥

किं ब्रवीषि—'भाव, किमहमप्यस्मि पात्रमेतावत्तव स्तोत्रस्य। पक्षपातस्तु भवादृशामारोपयति माहात्म्यमल्पेऽपि' इति। सखि मधुरवाणि, कियन्मय्यपि बहुमानवचनम्। यदहमङ्कशायी तव हरिणशिशुरिव पात्रमस्मि विहारमात्रस्य। यद्वा।

पार्श्वे चरत्यरुणपाणितलाभिमृष्टः
पर्यङ्कमध्यमधिरोहति निर्विशङ्कम्।
माध्वीमुचं तव शृणोति च तन्वि गीतिं
मत्तोऽयमभ्यधिक एव कुरङ्गशावः ॥ ८२ ॥

किं ब्रवीषि—'क्व प्रस्थितो भावः' इति। चन्द्रकलामन्दिरद्वारे सलीलमैन्द्रजालिकं दर्शयिष्यमाणमद्भुतं द्रष्टुम्। तदास्स्व। साधयामि। (इति परिक्रम्यावलोक्य।)

एकस्मिन्नुपविश्य रत्नफलके सोल्लासमालीजनै-
र्वामेनाम्बुरुहं करेण दधती वाचालभृङ्गीकुलम्।
उद्भ्रान्तेन दृगञ्चलेन परितोऽप्युन्मोहयन्ती विटा-
नक्षैर्दीव्यति सेयमिन्दुवदना मञ्जुक्वणत्कङ्कणम् ॥ ८३ ॥

इदानीमेतस्याः

पाटीरद्रवचित्रकेण निटिले पत्राङ्कुरैर्गण्डयो-
रक्ष्णोरञ्जनरेखया च सुदृशो मुह्यामि नाहं तथा।
अर्धव्यक्तनखव्रणाङ्कमधुरावभ्यन्तरे कञ्चुली-
बन्धादूर्ध्वमधश्च दृश्यवलयौ पश्यन्नुरोजौ यथा ॥ ८४ ॥

(निपुणं निरूप्य।) कथमस्या द्यूतप्रतिपक्षिणी मत्परिग्रहः कलभाषिण्येव।

मुहुरियमनुविद्धानूर्मिकारत्नभाभिः
क्वणितवलयमक्षान्विक्षिपन्ती करेण।
प्रचलदलकभारं प्रस्फुरत्कर्णपत्रं
किमपि विवदमाना मन्दहासं तनोति ॥ ८५ ॥

(विमृश्य ।)

कौटिल्यं वचनेऽपि दृष्टिवलनेऽप्यभ्यासतोऽजानती-
मज्ञातच्छलकल्पनामविदितक्रीडारसां तत्वतः ।
प्रागेतां बदरीफलोपमकुचोद्भेदां प्रसन्नानना-
मारोप्योरसि मन्दमन्दमधरं चुम्बन्ननैषं निशाः ॥ ८६ ॥

कथमत्र द्यूतसाक्षिण्यौ तमालिका सुकुन्तला च । (सहर्षस्मितम् ।) अत्रैव वसन्तकोऽप्युपरिक्रीडाचतुरो मत्प्रियसखो माध्यस्थ्यमवलम्ब्य तिष्ठति । तदतिलङ्घ्य समाजमेतमनुचितमन्यत्र मया गन्तुम् । (इत्युपसृत्य ।) कथमियं मत्प्रेयसी कलभाषिणी मामवलोक्य ससंभ्रममुत्थाय गन्तुमिच्छति । (सविषादमिव ।) अहो बहिरमुष्या मौग्ध्येन वयं बाध्यामहे ।

वर्तन्ते सममेव संसदि गिरः शृण्वन्ति माध्वीकिरः
किंचास्याः स्तनकुड्मलोज्ज्वलमुरः पश्यन्ति धन्याः परे ।
एषामेकमपीह मे न सुलभं भोक्तेति वादः परं
मय्यास्ते यदवेक्ष्य मां परिहरत्येषा समक्षे स्थितिम् ॥ ८७ ॥

तदिदानीं त्वरितमुपसृत्य हस्ते गृहीत्वा समीप एव निवेशयाम्येनाम् । (इति पञ्चषट्पदानि गत्वा ।) प्रेयसि कलभाषिणि, कथं वेश्याङ्गनाविरुद्धं मौग्ध्यमारोपयसि । तदत्रैवोपविशतु भवती । सख्यः, सर्वा अपि किं ब्रूथ— 'इत आस्यतां भावेन' इति । सखे, किं ब्रवीषि—'कथमस्य द्यूतस्य भवानन्तरायः संवृत्तः यत्कलभाषिणी तव संनिधौ मन्दाक्षेण नानुमन्यते विक्षेपमक्षाणाम्' इति । तर्ह्यहमेवास्या मम प्रेयस्याः प्रतिनिधीभवन्निन्दुवदनया सह दीव्यामि । सखि इन्दुवदने, किं ब्रवीषि—'यद्येवं धन्यासि' इति । तमालिकासुकुन्तले, किं ब्रूथः—'युवयोः पणबन्धोऽपि कश्चित्संकेतितव्यः' इति । तर्हि श्रूयताम् ।

द्यूते यदीयं विजिता मया स्या-
दस्याः पिबामि स्वयमाननाब्जम् ।
अहं जितश्चेदधरं मदीयं
गृह्णातु पातुं पुरतः सपत्न्याः ॥ ८८ ॥

इन्दुवदने, किं ब्रवीषि—'यथोचितमावयोः पणबन्धः' इति । तमालिका-सुकुन्तले, किं ब्रूथः—'कर्मसाम्ये किं भवितव्यम्' इति । सखे, सपरिहासं किं ब्रवीषि—'कर्मसाम्ये व्यत्यस्तचुम्बनमुभयोरित्यर्थत उक्तमासीत्' इति। इन्दुवदने, किं ब्रवीषि—'कुतः साम्यप्रसक्तिरपि । जयाम्येनं द्यूत एव गृह्णामि चाधरमेतस्य पश्यन्त्यामेव कलभाषिण्याम्' इति । प्रिये कलभाषिणि, मा भैषी-रस्याः प्रलापेन । जेष्यति परं भुजंगशेखरः । यद्वा विजयस्व मामिन्दुवदने, द्यूतविधौ कृतार्थोऽस्मि । यतः ।

उरः कापंकापं कठिणकुचयुग्मेन वदनं
पिबन्त्या मे कण्ठार्पितमृदुलदोर्वल्लिनमितम् ।
कराभ्यां ते काञ्चीपदमभिमृशेयं धुनपटो
हठादौत्सुक्येन स्मरनृपतिमुद्रासनमिव ॥ ८९ ॥

वसन्तक, किं ब्रवीषि—'अनुचितमेव भवादृशानां यदुच्यते विजयस्व मामि-त्यस्यामपि मानवत्याम्' इति । सखे, परमार्थतो योजयिष्यामि । यतः किल

ओष्ठं चुम्बितुमुन्नमय्य चिबुकं केशे गृहीते मया
मामेति भ्रमितभ्रु वक्त्रकमलं पातुं च दद्यात्स्वयम् ।
दष्टे दन्तपटे तु कङ्कणझणत्काराङ्कलोलाङ्गुले-
रस्यास्तावदनश्रु हारि रुदितं द्रष्टुं मनः काङ्क्षति ॥ ९० ॥

इन्दुवदने, सामर्षं किं ब्रवीषि—'अयं नाम पुनरिन्दुवदनां जेष्यति यः कि-लाक्षपरिक्षेपमात्रानभिज्ञया रत्नावल्यापि द्यूते पराजितः पणीकृतेन दिन-मात्रपरिचरणेन बलवत्पर्याकुलितः' इति । (विहस्य ।) अयेऽनभिज्ञे, किमहं पर्याकुलितोऽस्मि रत्नावल्याः परिचरणेन । प्रलपत किंचित् ।

आमर्शो यत्कुचकलशयोः प्राप्यते पत्रलेखा-
दूरुस्पर्शो यदपि सुलभः पादसंवाहनेषु ।
यत्कान्ताया व्यजनवलने सिध्यति स्नेहदृष्टि-
स्तन्मे तस्याः परिचरणतः प्रार्थनीयं किमन्यत् ॥ ९१ ॥

अये तमालिके सुकुन्तले च, श्रूयताम् । पुरा किलेयमुद्दामयौवनमदोन्मेषा सुपरिज्ञातमदनतन्त्रसिद्धान्तरहस्या च । तदिदानीं हि

रन्तुं प्राप्य युवापि सीदति विटो यस्याश्चिरक्रीडया
या च द्रावयितुं क्षमा न युवभिः कामागमज्ञैरपि।
सैवेयं सुरतेऽप्यजीयत मया मध्यावबद्धक्वण-
द्धण्टानिस्वनदर्शितस्मरकलाचातुर्यया चेष्टया ॥ ९२ ॥

तदेव किं नालमस्याः प्रमाणं संप्रत्यपि पराजये द्यूतविधौ। इन्दुवदने, सक्रोधलज्जं किं ब्रवीषि—'कितव, कृतं प्रलापेन। यदि शक्नोषि विक्षिप तावदक्षान्' इति। तर्हि द्यूतविधिरावयोः श्वो भविता। अद्य पुनरैन्द्रजालिकं दर्शयिष्यमाणमद्भुतं द्रष्टुं प्रस्थितोऽस्मि। तदतिक्रामति समयः। वसन्तकादयः, किं ब्रूथ—'तर्हि पुरतो गन्तव्यम्। वयमप्यनुपदमागमिष्यामः' इति। तदहं साधयामि। (इत्यन्यतो विलोक्य।) इह हि नवमालिका

संगृह्य च्युतमेखलाविलुलितां नीवीमियं पाणिना
स्रस्तं चांसवितर्तितेन चिबुकेनालम्ब्य चेलाञ्चलम्।
लीलासंभ्रमलोलकुन्तलभरव्याकीर्णपुष्पोच्चया
स्विन्नाङ्गी मणिकन्दुकेन तरुणी स्वैरं परिक्रीडते ॥ ९३ ॥

(उपसृत्य।) सखि नवमालिके,

पाणिस्पर्शात्तव शशिमुखि प्राप्य रागातिरेकं
रन्तुं याचन्निव निपतति प्रायशः पादमूले।
लब्ध्वा पश्चादनुमतमिव त्वत्कटाक्षावलोकं
भूयः पातुं मुखमिव समुज्जृम्भते कन्दुकोऽयम् ॥ ९४ ॥

किं ब्रवीषि—'भाव, धन्यः क्रियतामयं कन्दुकः क्षणं तव कटाक्षपातनेन' इति। सखि, मा मैवम्। स्पृहयामि पुरस्ते धन्याय तव कन्दुकाय य एष

विस्रस्तालकया कपोलयुगलव्यालोलताटङ्कया
स्वेदाम्भःपरिमृष्टपत्त्रलतया संभ्रान्तनेत्रान्तया।
व्यावल्गत्कुचकुम्भभारवहनक्लान्तोच्चलन्मध्यया
नम्रोन्नम्रनितम्बया विहरते कान्ते त्वया कन्दुकः ॥ ९५ ॥

किं ब्रवीषि—'नैतद्दुर्लभं भावेन परंतु भवितव्यं नवमालिकाया भाग्यपरिणामेन। यतः।

सारङ्गा तरुणीषु सैव भवता या रन्तुमुत्कण्ठते
सा धन्या तव या कटाक्षपदवीं प्रेमोज्वलां प्रापिता ।
स्तुत्या सा किल सुभ्रुवामपि भवान्यामालपत्येकदा
तस्या जन्म च सार्थकं त्वमधरं यस्या रहः पास्यसि ॥ ९६ ॥'

इति । यद्येवं तव व्यवसायः श्व एवागन्ता भुजंगशेखरः । आस्व । साधयामि । (इति परिक्रम्यावलोक्य ।) अत्र गृहवेदिकाशिखरे

कनकमयकरण्डगर्भलीनं करजमुखैर्मृगनाभिमाददाना ।
करधृतमुकुरा कपोलबिम्बे कलयति काचन चारुपत्रवल्लीम् ॥ ९७ ॥

इयं मम कलत्रचरी काञ्चनलता मदागमनमुपलभ्य पश्यन्ती तिष्ठति । अस्याः किल

केलीजन्मभुवौ भ्रुवौ कचभरः कादम्बिनीश्रीहरः
कोकस्पर्धिरुचौ कुचौ कुवलयच्छायामुषी चक्षुषी ।
वल्लीवाञ्छितसौरभं भुजयुगं वाचश्च माध्वीमुचः
पादौ पल्लवकान्तिडम्बरभिदौ तन्व्याः किमन्यैर्गुणैः ॥ ९८ ॥

(उपसृत्य ।) प्रेयसि काञ्चनलते, मां प्रति किमपि वक्तुकामेव दृश्यसे । किं ब्रवीषि—'कथमिदानीं पत्रावलीलेखनस्य भवानन्तरायः संवृत्तः' इति । प्रिये, मा मैवम् ।

कान्ते नियुङ्क्ष्व कलयामि कपोलबिम्बे
पत्रावलिं तव नितान्तपरिश्रमासि ।
येन त्वदाननसरोजनिसर्गगन्ध-
माघ्राय निःश्वसितनीतमहं कृती स्याम् ॥ ९९ ॥

किंच ।

कलितार्धपत्रलेखं कान्ते कमनीयपुलकमुकुलं ते ।
कथमपि कपोलबिम्बं काङ्क्षति मम चुम्बितुं चेतः ॥ १०० ॥

(सस्मितम् ।) किं ब्रवीषि—'सत्यमेवंविधमेव मयि तावकं हृदयम् । यद्बहुदिनमारभ्य भवन्तं न दर्शयते ।

बहिस्तु मधुराकारमन्तस्तिक्तरसं पुनः ।
विटस्य हृदयं मन्ये विषद्रुमफलोपमम् ॥ १०१ ॥'

इति । मानिनि, भवत्येवमन्यत्र विलासिनि । न पुनरस्मिन्नपि त्वदीयहृदयानुवर्तिनि भुजंगशेखरे । परंतु पणे विवदमानया तव जनन्या पञ्चषदिनेभ्यः प्राग्निष्कासितोऽस्मि । तदा प्रभृत्येवं चिन्तयामि ।

कामिनि रहसि मुहुर्मे कराङ्गुलीमृदितचूचुका भवती ।
स्वयमेव रागभूम्ना चुम्बेदपि मां पुरेव किमु भूयः ॥ १०२ ॥

इति । (पार्श्वतो विलोक्य । सभयकम्पम् ।) कथमियं जरती मन्दारिका मदुक्तिमाकर्णयन्ती तूर्णं दक्षिणकरगृहीतजीर्णशूर्पा सकोपमापतति सदनान्तरात् । (स्वगतम् ।) अहो दुर्दर्शनमस्या रूपम् ।

पादौ दुष्प्रचलौ पृथूदरभरादेषोऽप्यलाबूफल-
द्राघीयान्हृदि लम्बते कुचभरः श्वेता वलन्ते कचाः ।
दृश्यन्ते च मुखान्तरे त्रिचतुरा दन्ताः शलाकोपमाः
किं वक्ष्ये विधिनैव कापि रचिता कृत्या जरत्यात्मना ॥ १०३ ॥

तदियं किं करिष्यति न जाने । न प्रसरति पाणिपादं मम साध्वसेन । तदद्य किं करोमि । भवत्वेवं तावत् । (प्रकाशम् ।) अये मातुलानि मन्दारिके, सुखमास्यते । सक्रोधं किं ब्रवीषि—'रे रे दुराचार, धूर्तजनाधम, कपटैकनिकेतन निर्लज्ज, दुरात्मन्, कथमिदानीं करलग्नो मातुलानीति मृदुलमामन्त्र्य वञ्चयसि । अनेन जीर्णशूर्पेन प्रहरिष्यामि । दातव्यं दत्त्वा पुनरन्यतो गच्छ । मृग्यमाणोऽपि मासमारभ्य न दृश्यसे । किं न पश्यसि भवादृशानपेक्षितादप्यधिकं धनं वितीर्य सुखमुपभुञ्जानान्वारवनितानाम्' इति । (कर्णौ पिधाय ।) शान्तं पापं शान्तं पापम् । श्रुतानि श्रोतव्यानि । कथमस्या भुजंगशेखरोऽपि धूर्तजनाधमः संवृत्तः । (सक्रोधम् ।) हुम् । दुष्टाचरणे, कष्टजीवने, वार्धकिहतके, जरठमर्कटिके, काञ्चनलतामुद्दिश्य पूर्वमप्यभिशपन्तीं भवन्तीमुपेक्षितवानस्मि । अद्य पुनरनेन खड्गेन विग्रीवामेव विधास्यामि । यद्वा जिह्वामेव ते निकृन्तामि । भो भो वेशवाटवास्तव्याः, माध्यस्थ्यमवलम्ब्य किं ब्रूथ—'कथमत्रैव युवयोर्वृथा वाक्कलहः सत्यपि विवादमात्र-

परिच्छेत्तरि मदनाचार्ये' इति । तर्हि कलत्रपत्रमानीय मदनाचार्यमेवोपगमिष्यावः । (इति परिक्रम्य । विचिन्त्य ।)

सपदि कलहभाजोरावयोरप्रगल्भा
मम हि नियमने वा वारणे वा जनन्याः ।
कृतपरिहृतबाष्पं कातरा केवलं सा
यदधित मयि दृष्टिं तन्मनो मे दुनोति ॥ १०४ ॥

(पुरो विलोक्य ।) अत्र हि

शिक्षामण्डपमध्यतो मणिशिलामध्यास्य तालस्तनीः
सस्नेहं सुदृशः सरागमशिरःसिद्धान्तमध्यापयन् ।
पाणिप्रेङ्खितहेमवेत्रलतिकस्तत्त्वं निजं व्यञ्जितुं
कामो विग्रहवानिवैष मदनाचार्यः पुरो दृश्यते ॥ १०५ ॥

कथमविदूर एव मदनाचार्यः ।

उत्तालालकमधुरा विलेपतैल-
श्यामार्धोरुकपरिमण्डितोरुकाण्डाः ।
तोंतत्तितिमिति वदन्सहस्ततालं
वारस्त्रीर्नटयति मित्रविन्द एषः ॥ १०६ ॥

तदुपसर्पामि । एष मयि विदूर एव दृष्टमात्रे तात्कालिकसंभ्रमोपजनितनिकटोपविष्टलवङ्गिकाकठोरकुचगण्डोपलाभिघातविह्वलवक्षःस्थलवामभागम्, ईषदुच्चलितमकरकुण्डलरत्नाङ्कुरशिखासंघट्टनदन्तुरितप्रान्तकनककेयूरम्, एकपार्श्वविस्रस्तविषमकण्ठाभरणकृतापकर्षदुष्प्रसारभुजनालम्, अतिश्लक्ष्णमणिकुट्टिमसमुत्तम्भनमात्रविस्रस्तकनकवेत्रलतावलोकनवित्रस्तपरिजनससंभ्रमदत्तहस्तम्, निजसरसाभ्युत्थानसमसमयससंभ्रमसमुत्तिष्ठदखिलवारसुन्दरीजनकदम्बकन्दलितकनकाभरणझणत्कारमुखरीकृतशिक्षागृहोदरम्, अभ्युत्थित एव किं मदनाचार्यः । (सरभसमुपसृत्य ।) आचार्य, नमस्ते । कथं मयि शिष्यकल्पेऽपि प्रत्युत्थानमित्ययुक्तमाचरणम् । तदुपविश्यताम् । किं ब्रवीषि—'परिगृह्यतामिदमासनार्धं प्रियसखेन, बहोः कालादद्य दिष्ट्या दृ-

ष्टोऽसि । अपि कुशलं प्रियसखस्य' इति । अद्य विशेषतो भवत्समागमनेन । किं ब्रवीषि—'कच्चिदाराध्यते भगवान्कामदेवः, कच्चिदालोच्यते तदीयतन्त्रसिद्धान्तः, कच्चित्परीक्ष्यते जात्यादिभेदः, कच्चिदवगम्यन्ते कलास्थानानि, कच्चिद्रमयसि रहस्तरुणीजनम्, कच्चिदावर्जयसि धनैर्वारवनिताः, कच्चिदनुकूलयसि चतुरदूतीजनेन कुलनारीः, कच्चिदनुभवसि चतस्रोऽपि यौवनदशाः पक्ष्मलदृशाम्' इति ।

शासति त्वयि सर्वज्ञे वात्स्यायन इवापरे ।
अनुष्ठानेषु शिष्याणामस्माकं क्व विपर्ययः ॥ १०७ ॥

(सस्मितम् ।) किं ब्रवीषि—

'तत्तत्कर्माचरणविषये संशयश्चेदुदञ्चे-
द्वाक्सिद्धानामपि किल यदाचार एव प्रमाणम् ।
नीवीमोक्षः कुवलयदृशामास्थितो येन मोक्ष-
स्तादृक्षस्त्वं ननु भवसि कः शासिता कश्च शिष्यः ॥१०८॥'

इति । कियानयमाचार्यस्य मयि पक्षपातः । अद्य मे मन्दारिकायाश्च विवादे प्रमाणमाचार्य एव । किं ब्रवीषि—'कीदृशो वां विवादः' इति । आगतैव करगृहीतकलत्रपत्रिका मन्दारिका । सैव प्रष्टव्या । किं ब्रवीषि—'मन्नियुक्तेयं मन्दारिका ब्रवीति—आर्य, मत्कन्यकायै न ददाति कलत्रपत्रिकानुगुणं परिपणं भुजंगशेखर इति । इयमेवं भणतु । मद्वचनमपि श्रूयताम् । अस्याः किल कन्या पत्रिकादानपूर्वं कलत्रीकृता । अहं तु प्रागेव तस्यै सर्वमपि दातव्यं प्रकल्प्य दत्तवानस्मि स्नेहेन । अत एव जरती तामन्यत्र कलत्रयितुमुद्युङ्क्ते । तदर्थं च मया सह मुहुर्मुहुः कलहायते । भाषते च परुषाणि वचनानि । अद्य पुनरमुष्या विशिष्य परुषभाषणेन प्रकुपितस्तत्रत्यजनेन ससान्त्ववादमाहूय भवन्निकटमनया सह प्रापितोऽस्मि । किंचास्याः कन्यका मध्ये यद्यन्यस्यापि भवेत्तदा विनापि परिपणं यावज्जीवं भोक्तव्येति पत्रिकायां लिखितमस्ति । इतः परं तदनुरूपमाचरिष्यामि । किं ब्रवीषि—'पत्रिकामालोक्य निर्णेष्यामि' इति । तर्ह्यवेक्ष्यतां तत्रभवता । कथं वाचयसि—

'स्वस्ति श्रीमति मन्मथे सति विभौ तन्नाम्नि संवत्सरे
मासे तत्सचिवे तदीयसुहृदा पूर्णेन भोज्ये तिथौ।
वेश्यायै वितरामि काञ्चनलतानाम्न्यै कलत्रीक्रिया-
चीटीमेष भुजंगशेखरविटो हालास्यपुर्यां वसन्॥ १०९॥
इयमस्तु काञ्चनलता वत्सरमेकं कलत्रं मे।
प्रदिशामि परिपणार्थे प्रतिदिनमस्याः शतं तु दीनारान्॥ ११०॥

किंच।

दद्यामस्यै मृगमदकुङ्कुमकर्पूरगन्धमाल्यानि।
ताम्बूलान्यपि नित्यं प्रतिमासं क्षौमयुगलं च॥ १११॥'

इति। सत्यं भण मन्दारिके, किमेषु किंचिदप्यदत्तमस्ति। किं ब्रवीषि—'न किमप्यस्ति, किंतु पद्मावत्यै रत्नचूडः प्रतिदिनमेकं कलभमपि प्रयच्छति' इति। (सकोपम्।) अये असंबद्धप्रलापिनि, तर्हि मयापि दातव्यमिति किमस्ति लिखितम्। आचार्य, ततस्ततः। कथं वाचयसि—

'इयमन्यमपेक्षेत मध्ये यदि सुमध्यमा।
यावज्जीवं कलत्रं मे भवेत्परिपणं विना॥ ११२॥'

इति। मन्दारिके, सकोपोद्वेगं किं ब्रवीषि—'न जानीमो वयमेतदर्थम्, भुजंगशेखरस्तु लेखेन वञ्चितवानस्मान्' इति। (सक्रोधम्।) किमुच्यते जरत्या किं तत्र साक्षिणो न सन्ति। आचार्य, उपरि कथं वाचयसि—

'एवं वेत्ति वसन्तक इत्थं जानाति कलहंसः।
विदितमिदं मालत्या विज्ञातमिदं च वृद्धकमलिन्या॥ ११३॥
इत्थं भुजंगशेखरकाञ्चनलतयोरनुज्ञया लिखितम्।
मणलूरुपुराश्रयिणा माधवपुत्रेण चित्रलेखेन॥ ११४॥'

इति। (सोत्साहम्।) अये जरति, किमिदानीं मूकासि। आचार्य, श्रूयतामिदमेकं कलत्रपत्रिकानुरूपमाचरितम्। द्वितीयं च पुनः समयपचेलिमेन प्रणयभरेण

मुक्तादाम प्रथममदिशं भूरिमूल्यं प्रियायै
हैमान्यस्यास्तदनु करयोः कङ्कणान्यर्पितानि।

दत्तौ पश्चात्कुचकलशयोः काञ्चनी कापि कक्ष्या
किंच द्वैप्यं सिचययुगलं दत्तमासीदनर्घम् ॥ ११५ ॥

इदं तु सर्वेऽपि जानन्ति । आचार्य, किं ब्रवीषि—'अये मन्दारिके, कीदृशं ते मौर्ख्यम् । यदेवमत्यर्थं धनिनापि भुजंगशेखरेण विगृह्णासि । तत्परित्यज्य कोपमाद्रियस्व जामातरम् । अयि भुजंगशेखर, इयं सुलभक्रोधा किमपि न जानाति, विदितमेव तव संपत्तिरौदार्यमुचितज्ञता चेति सर्वमपि, तदस्मद्वचनेन सोढव्यानि मन्दारिकायाः परुषभाषणानि, किं तव सर्वज्ञस्य कृत्यमुपदेष्टव्यम्, तन्मन्दारिकामनुसृत्य सुखमनुभुङ्क्ष्व काञ्चनलताम्' इति । अनुगृहीतोऽस्मि । वद मातुलानि, कस्तवाभिप्रायः । किं ब्रवीषि—'प्रतिदिनमपि मदोत्कटं कलभद्वयमस्याः काञ्चनलतायाः परिरम्भमूल्यं दातव्यम्' इति । (विहस्य ।) सत्यमियं वञ्चिता जरती । यतः ।

असमशरज्वरभेषजमनवधिकानन्दसंप्लवनिदानम् ।
मूल्यातीतममुष्या मुग्धदृशो वेद्मि परिरम्भम् ॥ ११६ ॥

मन्दारिके, यत्किंचिदेतद्भुजङ्गशेखरस्य किं न श्रूयते धनसंपत्तिः ।

आस्तां पित्रार्जितं द्रव्यं मेरुकूटोपमं गृहे ।
मयैव द्यूतचौर्याभ्यामार्जितस्यास्ति किं मितिः ॥ ११७ ॥

तदद्य प्रभृति कलभद्वयमपि दत्त्वा कनकमयमेव तव गृहमखिलं कल्पयिष्यामि । तद्गम्यतां गृहं प्रति सुखेन । अहमपि सायमागमिष्यामि । (इति पार्श्वतो विलोक्य ।) कथमपि निष्क्रान्ता कालरात्रिः । आर्य, किं ब्रवीषि—'भवन्तमयमनामयं पृच्छति भरतकुलचूडामणिर्मित्रविन्दः' इति । प्रियसख मित्रविन्द, कुशल्यसि । किं ब्रवीषि—'अद्य विशेषतः प्रियसखपदपरिग्रहणेन' इति । अपि सुशिक्षिता नूतनक्रीता चन्द्रलेखा चित्रलेखा च नाट्येषु । किं ब्रवीषि—'पश्य पश्चिमतश्चन्द्रलेखा नृत्यति' इति । (निर्वर्ण्य ।) अस्याः किल

प्रत्यक्षीकुरुते रसानभिनयः पाण्योर्विलोलाग्रयो
रम्यस्ताललयानुकारिणि पदन्यासेऽपि शिक्षाक्रमः ।

दृग्द्वन्द्वं हृदयस्थितान्प्रकटयत्याहत्य भावानिदं
गीतं चामृतवर्षि चञ्चलदृशो जागर्ति नृत्तोत्सवे ॥ ११८ ॥

आर्य, किं ब्रवीषि—'अगोचरं खलु गिरां नर्तनचातुर्यं मित्रविन्दस्य' इति। एवमेतत्। मित्रविन्द, किं ब्रवीषि—'अहं किमपि न जाने । स्नेहः परं मयि युष्मान्मुखरयति' इति । आर्य, पश्य उत्तरतस्तस्याश्चित्रलेखापि

रक्तस्यूतनिचोलगर्भितकुचाभोगस्खलद्भूषणं
घर्माम्भःकणिकार्द्रपत्रमकरीरम्याननाम्भोरुहम् ।
लोलापाङ्गनिरुद्धकामिजनतानीरन्ध्रपार्श्वं वधू-
रेषा नृत्यति नृत्तदेशिककरास्फालोक्ततालक्रमा ॥ ११९ ॥

किंच

पर्यन्तच्यवमानकेशकुसुमं भ्रश्यद्वतंसोत्पलं
वेगोद्धूतविवर्तितहारलतिकाविश्लिष्टवक्षोरुहम् ।
दुर्लक्ष्याङ्गमुदञ्चतीदमधुना तालान्तचक्रभ्रमी-
व्यावल्गन्मणिमेखलामुखरितश्रोणीकमेणीदृशः ॥ १२० ॥

मित्रविन्द, किं ब्रवीषि—'अनयोरन्यतरा कलत्रीक्रियतां भावेन' इति। तर्हि द्वे अपि समीपमानय । पश्यतु वयःप्रमाणमाचार्यः। आचार्य, किं ब्रवीषि—'किमत्र द्रष्टव्यम् । पश्य चन्द्रलेखाया

इदं कर्णोपान्तावनुपतति दैर्घ्यं नयनयो-
रुरो दृश्यादृश्यस्तनयुगलपर्यन्तवलयम् ।
नितम्बस्याभोगः कियदपि वलग्नं कृशयते
तदस्याः सौभाग्यं प्रथयति नवं यौवनमिदम् ॥ १२१ ॥'

इति । आर्य, चित्रलेखामहं प्रौढां पश्यामि । कुतः ।

कटाक्षा दृश्यन्ते मनसिजशरासारवदमी
तनीयांसं मध्यं ग्लपयति कठोरः स्तनभरः ।
इतो नाभीरन्ध्रं परिपतति रोमालिभुजगी
तदस्यामौल्बण्यं प्रकटयति गाढं तरुणिमा ॥ १२२ ॥

आर्य, किं ब्रवीषि—'यदि चन्द्रलेखां कलत्रयिष्यसि, तदा

शय्यायां चटुभिः प्रलोभितवतो मत्त्वाशयं ते शनैः
पूत्कारानिलशान्तदीपकलिकाकोणे निलीना क्वचित् ।
अन्विष्टा परितः प्रसारितकरेणेयं चिरेण त्वया
हासेनावगता ततः पुलकिनोः स्पृश्येत वक्षोजयोः ॥ १२३ ॥

अथ तु चित्रलेखामनुमन्यसे, तदानीं

वामाङ्कस्थितया रहस्त्वदुरसि न्यस्तैकवक्षोजया
किंचिद्वक्रितकण्ठनालविषमव्यालम्बिहारस्रजा ।
नाभीमूलविलेखिभिर्नखमुखैरुद्बोधितानङ्गया
वक्त्रं ते चिबुके गृहीतमनया वामभ्रुवा चुम्ब्यताम् ॥ १२४ ॥'

इति । अनुगृहीतोऽस्म्याचार्यवचनेन । मित्रविन्द, किं ब्रवीषि—'अनयोः सद्यो भोगक्षमा चित्रलेखा परिगृह्यताम्' इति । मैवं वादीः ।

रतक्षमायाः प्रौढाया वरं मुग्धा रताक्षमा ।
यतो भोगः क्रमाल्लभ्यः प्रौढामध्यमयोरपि ॥ १२५ ॥

तच्चन्द्रलेखैव कलत्रीकरिष्यते । मित्रविन्द, किं ब्रवीषि—'अद्य सफलमस्या जन्म मदवलम्बनं च' इति । आर्य, किं ब्रवीषि—'प्रयच्छ कलत्रपत्रमविलम्बमस्यै' इति । चित्रलेखामानीय श्वः प्रभाते तथा कर्तास्मि । (ससंभ्रमं परावृत्य ।) कथमत्र कलकलः । (निरूप्य ।)

बद्ध्वा भुजावपरतो रशनागुणेन
भ्रूभङ्गपूर्वमसकृत्परितर्जयन्ती ।
कण्ठे विधाय बकुलस्रजमिन्दुचूडं
कर्षत्यवाङ्मुखमनङ्गलता किमेतत् ॥ १२६ ॥

आर्य, किं ब्रवीषि—

'अन्तःकृताश्रुसलिलं नयनोत्पलेन
बिम्बाधरार्पितकराङ्गुलिना मुखेन ।
त्रासस्खलत्पदरणन्मणिनूपुरेय-
मन्वेति चम्पकलतापि तमिन्दुचूडम् ॥ १२७ ॥'

इति । आर्य, कथं ज्यायसीकनीयस्योरनङ्गलताचम्पकलतयोः सापत्न्यमाचरितमिन्दुचूडेन । किं ब्रवीषि—'ममापि स एव तर्कः'-इति । तदेतत्समाभास्ये । अये अनङ्गलते,

बद्धः पुरा तव विलोचनशृङ्खलेन
पश्चादयं भुजलतायुगलेन बाले ।
भूयोऽपि यन्त्रितभुजो यदि सांप्रतं ते
काञ्चीगुणेन सुकृती न किमिन्दुचूडः ॥ १२८ ॥

किं ब्रवीषि—'यद्येतदप्येवमनुमतं भवति कः पुनरन्यस्त्वत्सुहृदो जाल्मस्य दण्डः' इति । किमपराद्धमिन्दुचूडेन येनैवं कथयसि । किं ब्रवीषि—'भाव, बह्वपराद्धं त्वत्सुहृदा । तन्न शक्यं कृत्स्नशो वक्तुमिदानीम् । शृणु संग्रहेण । षण्मासानारभ्य पत्रिकाग्रहणपूर्वकमस्य कलत्रमस्म्यहमेकैव । अयं तु तदा प्रभृति किंचिद्विगलितमौग्ध्यां मत्कनीयसीं चम्पकलतामभिलषति । तथा हि ।

पश्यत्येष पराङ्मुखोऽप्यनुदिनं तिर्यग्दृशा कैतवा-
द्वाचं मिश्रयति स्पृशत्यवयवान्गाढेऽन्धकारोदये ।
एषा किं च यदृच्छयापि विजने स्थाने निरीक्ष्येत चे-
दालिङ्ग्य स्तनमण्डलं द्रुतमसौ धूर्तोऽधरं चुम्बति ॥ १२९ ॥

अद्य पुनरिन्दुचूडसनाथे शय्यागृहे

समुन्मिषन्नखपदभूषितस्तनीं
कपोलयोर्विलुलितपत्त्रवल्लिकाम् ।
विरागिणीमधरदले विलोक्य तां
कनीयसीं कलुषितमेव मे मनः ॥ १३० ॥'

इति । आर्य, किं ब्रवीषि—'अहो महदपराद्धमेतेन' इति । अस्त्वेतत् । इन्दुचूडवचनमपि श्रोतव्यम् । सखे, किं ब्रवीषि—'मया न किंचिदपराद्धम् । इदं तु किंचित्कृतमस्ति । यत्किल

तन्वीं शय्यागृहमुपगतो जातु मञ्चे शयानां
पश्यन्किंचिद्गलितरशनामुच्छ्वसन्नीविबन्धाम् ।

एकेनास्याः स्तनमभिमृशन्नेकमन्येन रागी
पातुं बिम्बाधरमपि हठादग्रहीषं करेण ॥ १३१ ॥'

इति। अनङ्गलते, किं ब्रवीषि—'तन्मुखादेव श्रोतव्यं तदीयं दुर्वृत्तम्' इति। सखे, किं ब्रवीषि—'शेषमपि श्रोतव्यमाचार्येण वयस्येन च। अनङ्गलतेति मत्त्वा तदप्याचरितं मया शय्यागृहे यन्मम रूपेणानयोरैक्यभ्रमः' इति। आर्य, युज्यत एतत्। पश्य ज्यायसीमिव कनीयसीमपि चम्पकलताम्।

तच्चन्द्रार्धसमानरूपमलिकं सा चम्पकस्पर्धिनी
नासा ते मदनायुधे च नयने सा कान्तिरेखाभ्रुवोः।
तद्रम्यं चिबुकं स चाधरदले रागस्तदेव स्मितं
तत्केलीगमनं किमन्यदुभयोर्नाम्नैव भेदग्रहः ॥ १३२ ॥

अनङ्गलते, किं ब्रवीषि—'आर्य, पक्षपाती खलु सुहृदि भुजङ्गशेखरः। तत्रभवता ताटस्थ्यमालम्बयितव्यम्' इति। आर्य, किं ब्रवीषि—'अयि इन्दुचूड,

ईषद्व्यक्तवलित्रयां स्फुटतरास्तिस्रो दधत्या वलीः
किंचिद्व्यञ्जितनैल्यरोमलतिकामानीलरोमावलेः।
कुम्भस्पर्धिपयोधरद्वयभृतस्तालप्रमाणस्तनीं
ज्यायस्या न कनीयसीमवयवैः पश्यामि शङ्कावहाम् ॥ १३३ ॥

अतः कृतं गोपनप्रकारेण। असंवृतस्तवापराधः' इति। यद्येवं सखे, प्रसादयतु भवाननङ्गलताम्। किं ब्रवीषि—

'उदयारुणमुत्पलाक्षि चन्द्रं कलये कोपकषायमाननं ते।
यदवेक्षणमात्रतो मदीयं हृदयाम्भोजमिदं मुदं जहाति ॥ १३४ ॥

कान्ते कथंचिदपराधमिमं क्षमस्व
नैवं करिष्यति जनोऽयमितः परं ते।
आर्येण तावदधुना मधुना शपेऽहं
देवेन वा सुदति शम्बरशासनेन ॥ १३५ ॥'

इति। अनङ्गलते, किं ब्रवीषि—'आर्य, पश्य पक्षपातिनं भुजङ्गशेखरम्।

येनाविधाय दण्डं सुहृदि प्रकटापराधेऽपि।
मम सान्त्वमेव कर्तुं प्रवर्तितोऽयं सखिस्नेहात्॥ १३६॥'

इति। अनङ्गलते, मा मैवम्।

अस्य दण्डः सशोकस्य ताडनं बकुलस्रजा।
अशोक एव यद्बाले पादताडनमर्हति॥ १३७॥

किं ब्रवीषि—'तर्हि तथा करोमि' इति। सखे, किं ब्रवीषि—

'आहन्तुं बकुलस्रजोऽपि समुपादाने करौ रज्यतो
लुम्पत्युद्यमनं श्रमाम्बुनिकरैः पत्रावलीर्गण्डयोः।
संरम्भेण समुच्चलन्कुचभरः क्लिश्नाति मध्यं पुन-
र्ब्रूहि प्रेयसि दण्डने मम गुणो दृष्टस्त्वया कीदृशः॥ १३८॥'

इति। अनङ्गलते, दण्डनसाहसं विना तर्हि दयनीयोऽयं कृतपूर्वशपथमिन्दुचूडः। किं ब्रवीषि—'तर्हि इदमेकं मृष्ये। भाव, भवन्नियोगेन यदलङ्घनीयवचनोऽसि वारसुदृशाम्' इति। आर्य, किं ब्रवीषि—'कार्यज्ञा खल्वियमनङ्गलता' इति। किमिदं वक्तव्यमस्याः। सखे, सुखमनन्यगतमनोवृत्तिरनङ्गलतामनुभुङ्क्ष्व। सखि, युवयोरियमाशीः—

विगलितत्रपयोः प्रणयार्द्रयोः शयनमेकमजस्रमुपेयुषोः।
भगवतः कृपयैव मनोभुवो भवतु वामनिशं सुरतोत्सवः॥ १३९॥

किं ब्रूथः—'अनुगृहीतं भवद्वचनेन' इति। आर्य, किं ब्रवीषि—

'दधती मृदुदर्शिताङ्गभूषं कदलीगर्भदलोपमं दुकूलम्।
कबरीधृतकेतकीप्रसूना तरुणी केयमुपैति संभ्रमेण॥ १४०॥'

इति। इयं पाण्ड्यराजपरिगृहीतायाश्चन्द्रकलायाश्चेटी निपुणिका नाम।

वस्ते या वसनानि चन्द्रकलया भुक्तोज्झितानि क्रमा-
द्धत्ते केलिवनाहृतानि चिकुरे माल्यान्यनेकानि च।
भुङ्क्ते दुग्धमधूक्षितानि मधुराण्यन्नानि च प्रत्यहं
चेटी तत्परिचर्यया पुनरियं किं किं सुखं नाश्नुते॥ १४१॥

आर्य, कथमियं मदभिमुखमेव समापतति। भवतु। ज्ञास्यामि। हञ्जे निपुणिके,

नवनखपदरम्यकण्ठमूलं रदपददन्तुरिताधरप्रवालम्।
रमणलुलितचन्दनस्तनाग्रं किमपि गृणाति वपुस्तवापदानम्॥१४२॥

किं ब्रवीषि—'नाहमस्मि भाजनं भाव परिहासस्य' इति। (विहस्य।) किं न जाने तव वैदग्ध्यम्।

दिवा वा नक्तं वा दिवसविरतौ वाप्युषसि वा
गिरौ वा गेहे वा वनतरुतले वा सरसि वा।
जडं वा धीरं वा तरुणमपि वा वृद्धमपि वा
विलज्जा लीलाभिर्ननु रमयसि त्वं निपुणिके॥ १४३॥

किं ब्रवीषि—'भाव, बिभेमि विशृङ्खलाद्भवतो वाग्जालात्। विज्ञापयति भट्टिनी चन्द्रकला—अद्य केनचिदैन्द्रजालिकेन दर्शयिष्यमाणान्यद्भुतानि सहैव द्रक्ष्यावः' इति। (सहर्षम्।) अयमहं प्रागेव संनद्धः। आचार्य, तत्रभवाननुजानातु। गमिष्यामि। किं ब्रवीषि—'स्नेहः परं मयि स्थाप्यताम्' इति। आर्य, भक्तिरिति वक्तव्यम्। तदास्स्व। साधयामि। (इति परिक्रम्य। श्रुतिमभिनीय।) हञ्जे निपुणिके, कोऽयं कलकलः। किं ब्रवीषि—'त्वदागमनं प्रतीक्षमाणा भट्टिनी चन्द्रकला कुक्कुटसमरादिकौतुकमवलोकयति' इति। (पुरो विलोक्य।)

आकुञ्चिताङ्गरुहमानतपूर्वकाय-
मन्योन्यमौलिदलनावसरप्रतीक्षौ।
उड्डीय पादनखपातितबालपक्षौ
भूयः समं निपततो भुवि ताम्रचूडौ॥ १४४॥

अयं पुनरनयोः

रन्ध्रं प्रतीक्ष्य चिरमापततः परस्य
पादाहतिं परिहरन्नपसृत्य किंचित्।
चञ्चुक्षतं शिरसि शत्रुमथाभिभूय
कूजन्मुहुश्चरति कुक्कुटसार्वभौमः॥ १४५॥

(अन्यतो विलोक्य।)

शिलाफलकनिष्ठुरस्थपुटमस्तकास्फालन-
प्रचण्डरवखण्डितप्रलयकालमेघध्वनिः ।
अशेषजनभीषणः प्रबलरोषयोर्मेषयो-
र्विलासिजनमुक्तयोरयमुदेति युद्धोत्सवः ॥ १४६ ॥

अये निपुणिके,

दूरे पश्चादुपेत्य क्रमकृतचरणन्यासमन्दायमानौ
पौराणामक्षिपातैः सह तदनु पुरस्तूर्णमभ्युत्पतन्तौ ।
उद्यत्पौरस्त्यपादं विषमितविनमद्ग्रीवमास्फालयन्ता-
वन्योन्यं मस्तकाभ्यामिह हि विहरतो भीषणौ पश्य मेषौ ॥ १४७ ॥

(पार्श्वतो विलोक्य ।) कथमत्र घोरमुष्टिवज्रमुष्ट्योरेव मल्लयोः संरम्भः । य-
दिदानीं

कालीहर्यक्षकण्ठध्वनिभरपरुषं कुर्वतोरट्टहासं
साटोपन्यस्तपादक्रमनमदवनि भ्राम्यतोर्मण्डलेन ।
निर्घातक्रूरमुष्टिप्रहृतबृहदुरस्तारठात्कारघोरा
युद्धारम्भा हिडिम्बानिलसुतबलयोर्मल्लयोरुल्लसन्ति ॥ १४

अपि च ।

अन्योन्यस्य विभिद्य मुष्टिभरुरा वगादधः पातता-
वाश्लिष्टावितरेतरं भुवि पुनः शिक्षाबलादुत्थितौ ।
दिग्धाङ्गौ खुरलीरजोभिररुणैः कक्ष्यापिनद्धोदरौ
मल्लौ मुण्डितमूर्धचञ्चलशिखौ भूयः परिक्रामतः ॥ १४९ ॥

(परतो दत्तदृष्टिः ।) कथमुत्तरोत्तरमत्रैव कौतुकमुन्मीलयति । यतः ।

पार्श्वोत्तम्भितनीलकुन्तलभरो भस्मानुलिप्ताननः
कर्णोत्तंसितबन्धुजीवकलिकः कान्त्या तमालोपमः ।
भीमो जाङ्गुलिकोऽयमायतगुणो नद्धैकशाखामृगो
बालैः कौतुकिभिर्वृतो नटयितुं गृह्णात्यहिं पेटिकात् ॥ १५० ॥

(निरूप्य ।) पश्य निपुणिके,

उन्नम्रलोलफणमण्डलदत्तदृष्टि-
रुच्छूनगण्डयुगलो मृदुफूत्क्रियाभिः ।
बाहू निवेश्य भुवि नर्तयति द्विजिह्वं
सव्याङ्घ्रिजानुवलनेन नरेन्द्र एषः ॥ १९१ ॥

किं ब्रवीषि—'पश्य फणिनं गृहाणेति चोदयति साहसी प्लवङ्गं जाङ्गुलिकः' इति । हञ्जे, साधु निरूपितं भवत्या । यतः ।

जाङ्गलिकेन नियुक्तः प्लवगोऽयमनूपविश्य फणिराजम् ।
स्पृशति कराभ्यां पुरतः परतस्तु मुखं विवर्तयति ॥ १९२ ॥

किं ब्रवीषि—'इयं भट्टिनी प्रतिपालयन्ती भवदागमनं सौदामिनीव शरद्घनं प्रसाधयति सौधं सुधाधौतम्' इति । तर्हि त्वरितमुपसर्पामि । (इति पुरतो विलोक्य ।)

वेत्राङ्कया विरचितस्तुतिरेकयाग्रे
पश्चात्कयाचिदपि नर्तितताल‌वृन्ता ।
वीटीप्रदानपरया निकटे कयापि
संसेविता जयति चन्द्रकला किलेयम् ॥ १९३ ॥

तदहमारोहामि तावन्निभृतं सौधशिखरम्, न यावदियं प्रत्युत्तिष्ठति । (इति सौधारोहणमभिनीय ।) स्वस्ति भवत्यै चन्द्रकले । किं ब्रवीषि—'स्वागतमार्यपुत्रस्य पाण्ड्याधिपतेः प्रियसुहृदे भुजङ्गशेखराय' इति । कीदृशं मदाह्वाने कारणम् । किं ब्रवीषि—'बहुमायो नामायमैन्द्रजालिको विद्यापरिचयं दर्शयितुमुपस्थितः । आर्यपुत्रश्च मृगयामहोत्सवे प्रवृत्तः । अतस्तस्य प्रतिनिधिना प्रियसुहृदा भवता सह विलोकयेयम्' इति । तर्हि नियुज्यतामैन्द्रजालिकः । यतः खलु समवेता एव पीठमर्दकविटविदूषकप्रायाः सर्वेऽपि सामाजिकाः । (श्रवणमभिनीय ।) कथमुपक्रान्तमेव बहुमायेन ।

लोकानसौ झटिति नागरिकानशेषा-
नाकारयन्निव कुतूहलदर्शनाय ।
पश्यैन्द्रजालिकनिदेशकृतः समन्ता-
दुड्डामरो डमरुकध्वनिरुज्जिहीते ॥ १९४ ॥

(पुनः कर्णं दत्त्वा ।) किमयं बहुमायः समुदस्तसव्यकरनिषेधविनिवारितपरिजनडमरुकध्वनिरितरकरविधूयमानपिञ्छिकागुच्छः कथयति ।

स्पन्दन्तां गिरयश्चरन्तु तरवस्तिष्ठन्तु वाताः क्वचि-
द्वह्नौ शैत्यमुदेतु वारिणि घनीभावः समुन्मीलतु ।
नक्षत्राण्यवनौ पतन्तु नभसि भ्राम्यन्तु गण्डोपला
हृष्यन्तो मम शाम्बरीविलसितं पश्यन्तु सामाजिकाः ॥ १९९ ॥

इति । अहो, कथमेतस्य वार्तासमनन्तरमेव समुच्चलन्ति सर्वे गिरयः । तथा हि ।

एष स्वच्छन्दघोषत्करटिवरघटाकृष्टकूटस्त्रिकूटः
क्रीडागाढानुरागत्रिदशमिथुनभृत्कन्दरो मन्दरोऽयम् ।
एष श्रीखण्डगन्धप्रसरगुरुमरुद्बन्धुरो गन्धशैलः
कैलासोऽयं विलासप्रचुरहरपदाम्भोजविन्यासधन्यः ॥ १९६ ॥

चन्द्रकले, किं ब्रवीषि—'कुतः पुनरमी सामाजिकाः परिभ्रमन्ति' इति । ऐन्द्रजालिक, प्रयुक्तमेतत् । पश्य ।

निष्क्रामन्नक्रचक्रग्रहणभयपरावृत्तविभ्रान्तसुभ्रू-
स्वैराश्लेषप्रहृष्यज्जलमनुजकुलव्याकुलव्याप्तकूलाः ।
पर्याप्तव्योमरन्ध्रोपरिपरिविलसद्धोरसंघर्षगर्ज-
द्वीचिव्याकीर्णफेनस्तबकितशिरसः सागराः संपतन्ति ॥ १९७ ॥

अयि बहुमाय, किं ब्रवीषि—'सकलसुरचक्रचूडामणिमिन्द्रमानयामि । दृश्यताम्' इति । पश्य चन्द्रकले,

पुरस्तात्पौलोमीसुरतगुरुरुद्दाममदन-
भ्रमद्रम्भाकुम्भस्तनभरपरीरम्भरसिकः ।
असावाद्यः पान्थः परकुलवधूभोगसरणे-
रहल्याया जारः स्फुरति हरिरैरावतधृतः ॥ १९८ ॥

किं ब्रवीषि—'पार्श्वत एवायमेतस्य तनयः ...

उद्दामस्मरकेलिमन्थरवयोभेदोपलम्भस्खल-
न्नालीकाक्षकनीयसीतरलितापाङ्गक्रियाकिंकरः ।

दिव्यस्त्रीस्पृहणीयरूपगरिमा चित्राङ्गदाकामुकः
पाञ्चालीकिलकिञ्चितैकरसिकः पार्थोऽपि किं दृश्यते ॥ १५९ ॥'

इति । सखि, किं किं न करोति मायाबलम् । बहुमाय, किं ब्रवीषि—'हरिहरहिरण्यगर्भा अपि मदीयमायाबलादुपमर्तन्ति । दृश्यताम्' इति । (परितो विलोक्य ।) सखि, पश्य पश्य ।

प्रसूय तरुणीं जगत्रयदुरापरूपोच्चयां
कलत्रयति कामुको य इह तामिदानीमपि ।
अयं प्रथमकिंकरो भगवतो मनोजन्मनो
मरालरथमास्थितो दिवि विधिर्दरीदृश्यते ॥ १६० ॥

चन्द्रकले, दीयतामितो दृष्टिः ।

आरोप्य स्त्रीमुरसि रसिको यो वसत्यम्बुराशौ
यश्चौर्येण स्मरपरवशो रुक्मिणीं पर्यणैषीत् ।
गोपीजारः कुसुमधनुषो जन्मभूरेष तार्क्ष्य-
स्कन्धारूढः स्फुरति गगने कामिनामग्रगण्यः ॥ १६१ ॥

पश्य सखि, पार्वतीरमणोऽपि समानीयते बहुमायेन । यतः ।

साटोपभ्रमितत्रिशूलरभसव्याधूतपाथोवहा-
त्युयस्यत्सिद्धवधूविलोकनमयन्यस्तारविन्दास्तराः ।
भस्मोद्धूलनपाण्डराकृतिभृतो भूता भ्रमन्तः शतं
दृश्यन्ते वियदन्तरे हिमवतः पर्यन्तशैला इव ॥ १६२ ॥

किं ब्रवीषि—'भगवतो विषमेक्षणस्य समानयने भविष्यति भूयानपचारः । तदुपसंह्रियतामिन्द्रजालमैन्द्रजालिकेन' इति । तर्हि दीयतामस्मै पारितोषिकम् । किं ब्रवीषि—'नियुक्तैव तत्र तारावली । तत्रभवता गृह्यतामिदं ताम्बूलम्' इति । अद्य खलु धन्यो भुजङ्गशेखरः, यदस्मै ताम्बूलमिति स्नेहसर्वस्वं प्रतिपाद्यते तत्रभवत्या । (इति ताम्बूलं नाट्येन गृहीत्वा । श्रवणमभिनीय ।) अहो कलकलः पौराणामाकर्ण्यते । (परितो विलोक्य । सभयकौतुकम् ।)

विस्रस्ताभरणं द्रवन्ति कतिचित्केचित्पतन्ति द्रुता
उत्तिष्ठन्त्यपरे निपत्य पतितानाक्रम्य यान्तीतरे ।

लीयन्ते भवनेषु केचन परे भ्राम्यन्ति चेतस्ततो
मुग्धाः केवलमुन्मिषन्ति कतिचित्पौराः क एष क्रमः ॥ १६३ ॥

(दक्षिणतो दत्तदृष्टिः ।) सखि चन्द्रकले, पश्य ।

लीलाधूतकराग्रघट्टनदलत्प्रासादगोपानसी-
विश्लिष्यद्वलभीचटच्चटरवत्रस्यत्कपोतान्गृहान् ।
कुर्वन्नुन्मदगण्डपिण्डकषणप्रध्वस्तभित्त्युत्पत-
द्धूलीधूसरिताननो मदगजः क्रूरं परिक्रीडति ॥ १६४ ॥

अपि च ।

करेण पदयोर्नरं लघु विकृष्य हन्ति क्षितौ
पिनष्ट्यथ तमङ्घ्रिणा त्यजति नष्टचेष्टं ततः ।
अनुद्रवति चापरानयमुदस्य हस्तं करी
पुनर्भ्रमति धावति स्खलति गर्जति प्रेक्षते ॥ १६५ ॥

तदनुचितमस्माकमत्र स्थातुम् । प्रविशतु गृहाभ्यन्तरं भवती । अहमपि सौधादवतीर्यान्यतो गच्छामि । (इति सौधावतरणं नाटयित्वा । परितो विलोक्य ।) समापतन्नयमुद्बाहुराधोरणवृद्धः । किं ब्रवीषि—'भो भोः श्रीमद्धर्म्या जनाः, यन्त्रितोऽयमुपायविदा मम कुमारेण गन्धसारेण गन्धहस्ती' इति । (सहर्षम् ।) अद्य खलु पुत्रवत्यः पौराणां जनन्यः । (श्रवणमभिनीय ।) अये, मध्याह्नो वर्तते । यतः ।

कल्पान्तोद्भटचण्डमारुतजवप्राग्भारसंघट्टन-
क्षुभ्यन्नीरदगर्भनिर्भरमिलन्निर्घोषघोरश्रुतिः ।
श्रीहालास्यपुरीपतेर्भगवतश्चन्द्रार्धचूडामणेः
स्निग्धोऽयं विवृणोति मध्यममहः सेवामृदङ्गध्वनिः ॥ १६६ ॥

अपि च । पुनरिमा मृदङ्गघोषानुबोधितमाध्यंदिनदेवसेवावसरा देवदारिका देवालयमभिवर्तन्ते । (निपुणं निरूप्य ।)

प्रम्लानश्रवणावतंसकलिकाः प्रस्विन्नगण्डस्थला
भूयिष्ठं मसृणीकृताधरदलाः फूत्कारवेगोष्मणा ।

हस्ताग्रस्फुरदंशुकान्तकृतकच्छत्त्रापनीतातपाः
स्पन्दन्ते सुदृशः सलीलमलघुश्रोणीभरेणालसाः ॥ १६७ ॥

अहो सुदुःसहोऽयमातपसंपातः । संप्रति हि ।

तापार्ताः करशीकरैः करटिनः सिञ्चन्ति कुम्भस्थलीं
छायावृक्षतले निषद्य हरिणा रोमन्थमातन्वते ।
लीयन्ते च षडङ्घ्रयो जलरुहामन्तर्दले शीतले
गाहन्ते गृहदीर्घिका युवतयः कान्तैः सह क्रीडितुम् ॥ १६८ ॥

किंच ।

गच्छन्तीनां तटभुवि नदीमारुतः पद्मगन्धी
पान्थस्त्रीणां सुखयति वपुः शीकरासारवृष्ट्या ।
छायादानात्क्षणमभिनवास्तोयवाहा लभन्ते
धन्यास्तासां कुवलयदलप्रेक्षणीयान्कटाक्षान् ॥ १६९ ॥

(विमृश्य ।)

तापयति
उर्वीं पांसुभरैरधः परितपत्युष्णांशुरूर्ध्वंकरै-
रङ्गारानिव विक्षिपन्ति परितोऽप्यूष्मायमाणा दिशः ।
संचाराद्विरमन्ति पान्थनिवहा नैवोड्डयन्ते खगा
लीनस्तापभियेव कुत्रचिदितो वातोऽपि न स्पन्दते ॥ १७० ॥

तदहमप्यस्मिन्नुद्याने वेगवतीप्रान्तवर्तिनि मुहूर्तमुपविशन्नप्रतीकार्यहेमाङ्गी-विरहतापोऽप्यातपतापमपनेष्यामि । (इत्युद्यानप्रवेशं नाटयित्वा ।) इह हि ।

चूतानामिव यन्नवैः किसलयैर्बद्धा वितानावली
कीर्यन्ते यदपि स्फुटानि कुसुमान्याचारलाजा इव ।
यत्कूजत्कलकण्ठमण्डलमिषादाकर्ण्यते काहली
सर्वं तद्विवृणोति शम्बरभिदो राज्याभिषेकोत्सवम् ॥ १७१ ॥

किंच ।

निकुञ्जान्तःक्रीडानिरतवनितागण्डयुगली
विकीर्णस्वेदाम्भःकणमणिगणस्तेयचकितः ।

सदालीनो लीनश्चरति तरुमूलेषु पवनो
वलन्ते लोलम्बा वनभुवि तदन्वेषिण इव ॥ १७२ ॥

(परितो विलोक्य ।)

मधुकरचिकुरकलापा वनलक्ष्मीर्मधुरकोकिलालापा ।
उल्लसदधरकिसलया हेमाङ्गीमनुकरोतीव ॥ १७३ ॥

अहो भ्रमः । सा कथमनुक्रियेत वनश्रिया कल्याणी । यतः ।

प्रेयसी मम हेमाङ्गी सुधानिष्यन्दिदर्शना
वनलक्ष्मीरियं रूक्षा दृशोरप्रियकारिणी ॥ १७४ ॥

यद्वा । विषमशरशरायमाणनिखिलतरुकुसुमसमुद्गमकारी रूक्षयति वनलक्ष्मीं वसन्तावसर एषः । अतस्तमेवं कथयामि । (किंचित्परावृत्य ।)

जेतव्ये जगतां त्रयेऽपि तदलंकर्मीणमेकं शरं
तस्या यौवनकैतवेन मदनो लब्ध्वा कृती वर्तते ।
भ्रातः कस्य कृते वसन्त भवता बाणाः क्रियन्ते वृथा
वासन्ती सहकारनीलनलिनाशोकारविन्दादयः ॥ १७५ ॥

(स्पर्शमभिनीय ।) कथं मन्दानिलहतकोऽपि प्रवर्तते मां बाधयितुम् ।

वासश्चन्दनशीतलेषु मलयप्रान्तेषु ते विश्रुत-
स्त्वं चेन्मारुत दावपावकसमस्पर्शोऽसि गात्रे मम ।
न प्राप्तं किमु तत्र चन्दनगतं शैत्यं त्वया शीलता
संसर्गेऽप्यथवा गुणो न महतां मूर्खेषु संक्रामति ॥ १७६ ॥

यद्वा । कृतमाभ्यां वसन्तमलयानिलाभ्याम् । अनयोरपि प्रभवते निवेदयामि प्रसवायुधाय ।

तस्या मनोज भवदीयशरायमाणैः
प्रागेव विद्धहृदयोऽस्मि भृशं कटाक्षैः ।
भूयोऽपि मां किमिति खेदयितुं वसन्तं
मन्दानिलं च भटमत्र भवान्नियुङ्क्ते ॥ १७७ ॥

किं च । न तावदेव ।

सव्यापसव्यकरकृष्टशरासमौर्वी-
विक्षिप्तनिर्भरविनिःसृतबाणवर्षैः ।

तस्यां निबद्धमनसस्तरलेक्षणायां
प्राणान्मम स्वयमसि स्मर हर्तुकामः ॥ १७८ ॥

(विचिन्त्य।) भगवन्कुसुमायुध,

देवेऽपि त्रिपुरान्तके कृतवता वीर त्वया विक्रमं
क्षिप्यन्ते यदि मानुषे मयि शराः शौर्यं किमेतावता।
यद्वा कस्तव वक्ष्यते रतिमुखाम्भोजासवास्वादना-
दुन्मत्तस्य हि तन्नहि प्रसजति क्षीबे विवेकः क्वचित् ॥१७९॥

(परितो विलोक्य।) अहो न कंचिदुपलक्षये मित्रजनं यस्मिन्निममान्तरं तापं निवेद्य संविभक्तमिव नातिविशोकमनुभविष्यामि। (इति निर्वर्ण्य।) कथं मम परमं मित्रं कलहंसः समापतति। (सानुस्मरणम्।) उक्तं ह्यनेन तत्रावयोः संलापो भविष्यतीति। युक्तं हि मित्राणां मिथः संलपितुम्। कुतः।

सुखं वा हृदि दुःखं वा स्वयं यदनुभूयते।
मिथो विभज्य संलापैस्तन्मित्राण्यनुभुञ्जते ॥ १८० ॥

(सहर्षम्।) सखे कलहंस, परिष्वजस्व माम्। (गाढमाश्लिष्य।) किं ब्रवीषि—'किं ज्वरित इव गात्रेषु दुःस्पर्शोऽसि' इति। अत्रापराध्यति हेमाङ्गीविरहः। किं ब्रवीषि—

'क्व भवान्मधुरावासी क्व सा रङ्गपुरी स्थिता।
तत्कुतः कुरुषे तस्यां खेदमात्रफलं मनः ॥ १८१ ॥'

इति। सखे, मा मैवम्। सा किल रङ्गनगरादग्रजेन कलाधरेण नगरमिदमानीता मासमारभ्य वर्तते। किं ब्रवीषि—'तर्हि किमद्यापि सा न घटिता त्वया' इति। (निःश्वस्य।) सखे, शृणु परतोऽपि। घटितैव यावन्निष्कुटवने विघटितैव तावन्मदीयविधिदुर्विपाकेन। किं ब्रवीषि—'कथं तत्कथय' इति। श्रूयतां तावत्। ह्यः किल पूर्वरात्रे समन्ततोऽपि विसृमरतिमिरमलीमसस्य भूमण्डलस्य निर्णेजनाय विकिरति चन्द्रमसि तरलतरदुग्धजलधितरङ्गभङ्गानिव मुग्धकिरणाङ्कुरानभङ्गुरनखरचरणतलाभिघातविश्लथमूलफलकान्निर्गत्य मन्दुरामध्यनिरुद्धोऽपि दारुपञ्जरादवधीर्य पाशबन्धभङ्गधूननैरवस्कन्द्य प्रथमचरणाग्रभागेन निरुध्य श्वगणानुत्प्लुत्य त्वरितमु-

लङ्घ्यमन्दुराप्राकारमुत्सार्य यामिककुलमभितः संरम्भेण पलायमानः स्वकुलवास्तव्यघोरकान्तारसंमुखीनेन पथा सर्वमपि पौरजनमाकुलीकृतवान्यदैव दारुणविकृष्टलाङ्गूलो राजशार्दूलः ।

अतर्कितभयस्खलत्पदपरिक्रमाधःपत-
त्प्रमुग्धनरमस्तकप्रहृतिनिःसृतास्रारुणैः ।
कठोरकुटिलैर्नखैः स्वमनुधाविनां धन्विनां
पलाशमुकुलास्तरं प्रतिपदं वितन्वन्निव ॥ १८२ ॥

तदानीमहमपि भुक्त्वा गृहीतताम्बूलो वेशवाटं प्रति प्रतिष्ठमानो मध्येपथममुना दुष्टमृगहतकेन निरुद्धोऽस्मि । किं ब्रवीषि—'हा हतोऽस्मि । ततस्ततः' इति । तदनन्तरमहो प्रमाद इति त्वरितमेव संनिहितं पतिकमुल्लङ्घ्य हेमाङ्गीपितुः कामान्तकस्य निष्कुटवनमद्वितीयः प्रविष्टोऽस्मि । किं ब्रवीषि—'अद्य जीवामि प्रियसुहृल्लाभेन । ततस्ततः' इति ।

अशृणवमथ तत्र कर्णरन्ध्रं
शिशिरसुधारसधारयेव सिञ्चत् ।
नखमुखमृदुताड्यमानतन्त्री-
मधुरनिनादमदापहारि गीतम् ॥ १८३ ॥

तदा किल रागस्वरेणापसरणपथेन गानमन्विष्यन्कामान्तकस्य गोष्ठमेव प्रविष्टोऽस्मि । प्रविश्य च तत्र समुत्तुङ्गधान्यकुम्भीतिरस्कृतशरीरो हेमाङ्गीमेव मधुरमात्मजननीनिकटे गायन्तीमपश्यम् । किं ब्रवीषि—'क्व पुनस्तज्ज्येष्ठः कलाधरस्तद्भगिनी सुमुखी च' इति ।

अन्तर्गृहं प्रविष्टोऽभूत्तज्ज्येष्ठो भार्यया सह ।
भगिनी च समं पत्या देहल्यामेव शायिता ॥ १८४ ॥

किं ब्रवीषि—'अथ निर्विघ्नस्ते मनोरथः । यतो भर्तृव्यपगमात्प्रभृति कृशा दुर्बला च तज्जननी । तस्या निद्रयैव सुकरो विप्रलम्भः' इति । सम्यगुपलक्षितं भवता यतो गायन्त्यामपि स्वदुहितरि सह शिशुभ्यां तज्जननी सुप्तवती । किं ब्रवीषि—'ततः किं कृतवानसि' इति । शृणु ।

श्रुत्वा श्रुत्वा श्रवणसुभगं गानमस्या मृगाक्ष्या
दृष्ट्वा दृष्ट्वा स्तनतटमपि व्यक्तमिन्दोः प्रभाभिः ।
घ्रायं घ्रायं कचपरिमलं मन्दवातोपनीतं
मग्नं हर्षाम्बुधिषु मनसा वा मया वा किमन्यत् ॥ १८५ ॥

किं ब्रवीषि—'किमेतावतैव हृष्टः केवलं स्थितोऽसि । दिष्ट्या संनिहितायामपि चिरकाङ्क्षितायां तस्याम्

पश्चाद्भागमुपेत्य गूढपदविन्यासं तदानीं शनै-
रेकेन प्रथमं करेण रभसादाश्लिष्य पीनौ स्तनौ ।
अन्येन द्रुतमुन्नमय्य चिबुकं तस्या गृहप्राङ्गणे
गायन्त्या हरिणीदृशः सपदि किं नाचुम्बि बिम्बाधरः ॥ १८६ ॥'

इति । सखे, किमपि न जानासि । अत्वरमाणेन परमुपगन्तव्याः कुलनार्यः । यतः खल्वियमेतासां प्रकृतिः । यदुत

ज्वलतु हृदि रागवह्निर्विध्यतु मदनोऽपि मर्मणि तथापि ।
सौशील्यभङ्गभीत्या कुलनार्यः किमपि नानुमन्यन्ते ॥ १८७ ॥

अतः क्षणमात्रं निभृतमतिष्ठम् । अतः परमर्धरात्रमासीदित्यवसितगाना सापि तरुणी जननीपार्श्व एव शयितवती । अहमपि तदानीं निःशब्दपदमुपसृत्य मणिमयादर्शनिर्मलकपोलतलस्पर्शधन्योपधाने कठिनकुचकुम्भविमर्दनिमग्नान्तरप्रच्छदपटे विटजनस्पृहणीयघनजघनसंघर्षसूचितभाग्यपरिणामे हंसतूलशयने पार्श्वतो जनन्याः संविशन्तीमवाङ्मुखीमेव हेमाङ्गीमपश्यम् । दृष्ट्वा च तामात्मजीवनाडीमिव सुखशयितामादाय हर्षचञ्चलेन हस्तयुगलेन शनैः शनैरागत्य तदेव निष्कुटवनमास्तीर्य तरुणदूर्वादलकोमले कस्यापि नीपतरोस्तले बहुगुणितमेव मदीयमंशुकं शयनाय तत्रैव निवेशितवानस्मि । किं ब्रवीषि—'किं तदानीमपि तया नोद्बुद्धम्' इति । नोद्बुद्धमेव मद्भाग्यवशात् । यतः ।

विलुलितमृगनाभिचित्रकाङ्कं
मुकुलितमुग्धविलोचनाभिरामम् ।

दरपरिगलितैककर्णपत्रं
मुखमपिबं सुदृशस्तदा दृशैव ॥ १८८ ॥

अथ किं च ।

मन्दं मन्दमचुम्बमम्बुजदृशः स्वैरं कपोलस्थलीं
सुप्तायाः स्तनमण्डलं च कठिनं निर्विघ्नमेवास्पृशम् ।
स्वच्छन्दं मुहुरामृशं च शनकैरुत्क्षिप्य चीनांशुकं
प्रस्निग्धं पृथु शीतलं मृदुलमप्यूरुद्वयं पाणिना ॥ १८९ ॥

किं ब्रवीषि—'धन्योऽसि । ततस्ततः' इति । ततश्च तामाकरमिव लावण्यानाम्, अवधिमिव स्त्रीसर्गस्य, परां कोटिमिव पञ्चशरभागधेयस्य, चतुष्पथमिव तारुण्यचाकचक्यस्य, संकेतस्थानमिव सकलयुवजनहृदयवशीकरणविद्यायाः, चन्दनलतामिव भुजंगकुलकाङ्क्षणीयसेवानाम्, चन्द्रकलामिव सर्वज्ञमौलिलालनीयरूपधेयाम्, शरद्रात्रिमिव मलयजद्रवपाण्डुपयोधराम्, संध्यामिव सान्द्रारुणकान्तिधाराधरामवलोकयन्नतृप्तिमतैव लोचनयुगलेन दुरतिलङ्घशासनेन भगवता शम्बरशासनेन रतये पुनः पुनर्नियुज्यमानः सरसकिसलयभागधेयपरिणामं सद्यस्तनसुधारसनिःष्यन्दमाधुर्यगर्वसर्वंकषं तदीयमधरबिम्बमास्वादयितुमभिलषामि यावदहं

तावदुद्बुध्य मुह्यन्ती विस्मयेन भयेन च ।
परितस्तरलापाङ्गं पश्यन्तीदमुवाच सा ॥ १९० ॥

किं ब्रवीषि—'किं परुषमेव भाषितं हठादधरग्राहिणि तत्रभवति' इति । न हि न हि का प्रसक्तिरेतस्य । यदहं तदुद्बोधसमये पश्चिमत एव निलीनोऽस्मि । किंत्वयमुक्तिप्रकारः । यत्किल

नीतास्मि निष्कुटवने केन वा मातुरन्तिकात् ।
उत भ्रमोऽयमाहोस्वित्स्वप्नोऽयमनुभूयते ॥ १९१ ॥

किं ब्रवीषि—'किं प्रतिपन्नं त्वया तदानीम्' इति । 'अहमपि पश्चिमभागादग्रत आगत्य सगद्गदमेवमवोचम्—

त्वद्दर्शनात्प्रभृति मानिनि यस्त्वदर्थ-
मङ्गान्यनङ्गशरजर्जरितानि धत्ते ।

किं त्वद्य मातृनिकटादिह भाग्यभूम्ना
नीतासि तेन करभोरु कुतो बिभेषि ॥ १९२ ॥

तदिदानीं

शिशिरय शशिकान्तशीतलाङ्गि
स्मरशरपावकतप्तमङ्गमङ्गम् ।
कथमपि परिरभ्य किं च तृष्णा-
मधरसुधाभिरपाकुरु प्रिये मे ॥ १९३ ॥

इति । अथ तदाकर्णनमात्रेण किमयमराजको जनपदः, किमयमधार्मिको ग्रामः, किमिदमनायकं सदनमिति निर्भर्त्स्य प्रयातुमुपक्रान्तामयमन्य इति मां संभावयतीति निश्चित्य पुनरपि तामवोचम्—

अये मनागप्यधरामृतार्पणादनङ्गसंतापमपाकुरु प्रिये ।
क यासि बद्धाञ्जलिरस्मि पश्य मां प्रसीद हेमाङ्गि भुजंगशेखरे ॥ १९४ ॥

इति । तदा मदीयनामश्रवणसमनन्तरम्

उत्पुलकगण्डमण्डलमुद्भिन्नप्रणयपिशुननयनान्तम् ।
मुखमुन्नमय्य किंचिन्मुग्धाक्षी मामुदैक्षत तदानीम् ॥ १९५ ॥

अवेक्षमाणामथ तां मृगाक्षीमालम्ब्य हस्ते सरसाङ्गुलीके ।
न्यवेशयं नीपतरोरधस्तान्मञ्चे मदीयेन कृतेंऽशुकेन ॥ १९६ ॥

अतः परं च ।

उन्निद्रचन्द्रकरसंयुतनीपमूल-
मुद्भिन्नबालतृणकोमलभूविभागम् ।
कान्ते विविक्तरमणीयमिदं वनान्तं
पश्यामि जारमिथुनस्य विहारयोग्यम् ॥ १९७ ॥

इत्युदीरयतैव मया दीयमानं ताम्बूलं मदीयमिवाशयमङ्गीकुर्वतीमङ्कमेवारोप्य किंचिदिव कपोलपालीमचुम्बम् । कथंचिदिव स्तनभरममर्दयम् । अनन्तरं च ।

तत्तद्देशनिवेशितैर्नखमुखैः सा रञ्जिता तत्क्षणं
प्राप्तस्त्वं चिरलिप्सितोऽद्य विधिनेत्युक्त्वा विलज्जं मुदा ।

स्वैरस्रंसिदुकूलदृश्यजघनाभोगा कराभ्यां बला-
दुत्तानं विनिपात्य मां यदकरोदद्यापि तन्मे हृदि ॥ १९८ ॥

सखे, किं बहुना ।

उद्यन्मन्दस्मितमुखमुपक्रान्तकापोतनादं
किंचिन्मीलन्नयनकमलं केशनिर्यत्प्रसूनम् ।
नृत्यत्कुम्भस्तनभरपरिक्लान्तमध्यं च तस्यां
क्रीडन्त्यां मे हृदयमवशं जातमानन्दभूम्ना ॥ १९९ ॥

किं ब्रवीषि—'अहो, बहोः कालात्फलितं तव मनोरथेन' इति । (खेदमभिनीय ।) फलितं भग्नं च । किं ब्रवीषि—'कथं तत्कथय' इति ।

यावन्नास्वादयाम्यस्या रतान्तेऽधरपल्लवम् ।
तावद्व्युष्टा निशेत्येषा गृहं प्रति गता सखे ॥ २०० ॥

किं ब्रवीषि—'कुतस्ते खेदः । युक्तं नन्विदं जारिणीनाम्' इति । शृणु सखे, मम खेदकारणम् । अद्य किल तां देवरः पतिगृहं गमयिष्यति । उक्तं हि तया तदानीं

यदद्य मां नेष्यति देवरस्तत्कुतः पुनः स्यात्तव संगमो मे ।
अतः क्षणाज्जीवितनायकस्य गृहं गतां श्रोष्यसि मामधन्याम् ॥ २०१ ॥'

इति । किं ब्रवीषि—'जीवितनायकस्येत्यन्यदपि व्यज्यन्ते । तद्विहन्तव्यमेव तस्याः पतिगृहाभिगमनम्' इति । एवमेतत् । प्रेषितस्तत्र मन्दारकः किं करोतीति न जाने ।

प्रथमतः प्रकटय्य दृशोः पुरो
हृदि विलिख्य विलिख्य ततः स्मरः ।
उपगमय्य कथंचिदपि प्रियां
विघटयन्नधुना मयि दारुणः ॥ २०२ ॥

तन्नातिचिरेण कालेन सांशयिकशरीरो भविष्यति ते वयस्यः । किं ब्रवीषि—'समाश्वसिहि समाश्वसिहि । कस्तव मन्दारकेऽपि संघट्टनाचतुरे विषादसमुन्मेषः । किं विस्मृतं तदीयं कौशलम्, यः किल दुर्लभयापि मम वल्लभया कालिन्द्या मां योजितवान्' इति ।

अपि मन्दारके तत्र प्रवृत्ते दृष्टकौशले ।
अभाग्योऽयमिति स्वस्मिन्निश्चित्य व्यथते मनः ॥ २०३ ॥

किं च ।

आलापानवकर्णयामि सुदृशां तामेव चित्ते स्मर-
न्संलापं च सुहृज्जनैर्विरचये तामेव चित्ते स्मरन् ।
आ कल्याच्च गतागतानि कलये तामेव चित्ते स्मर-
न्काष्ठामप्यहह क्षिपामि युगपत्तामेव चित्ते स्मरन् ॥ २०४ ॥

किं ब्रवीषि—'अलं विषादेन । गवेषयिष्यते कृतकृत्यो मन्दारकः । तदस्मिञ्शिलातले निमिषमास्व' इति । बाढम् । उपवनस्य विनिर्गमनपथमादेशय । किं ब्रवीषि—'इत इतो भवान्' इति । सखे, पश्य रमणीयतामुपवनस्य ।

पक्वानि[1] प्रच्यवन्ते क्रमुकविटपिनामुच्छ्रितानां फलानि
स्पन्दन्ते राजरम्भाः फलभरनमिता वाति मन्दानिलोऽपि ।
संदृश्यन्ते विपाकच्युतमधुरफलव्याप्तमूला रसाला
भारेणामी फलानां युवतिकुचभरस्पर्धिनो नालिकेराः ॥ २०५ ॥

कथमियमुद्यानपालिका सुचरिता समापतति । सखि, किं ब्रवीषि—'कथमनासाद्य माधवीमण्डपमविश्रम्य तत्रत्यसैकतवेदिकायामननुभूय च पुरोपवनसौभाग्यं केवलमपावर्तते तत्रभवान्' इति । सखि, प्रियावृत्तान्तहारिणं मन्दारकमनुवर्तते हृदयम् । तदेतदेवं क्रियते । किं ब्रवीषि—'स किल मया भवन्तमन्विष्यन्नुपवनमेव प्रवेशितः; पश्चिमतो माकन्दमूले मृगयते । पश्य' इति । सखे कलहंस, तत्रैव गच्छावः । (विलोक्य सहर्षगद्गदम् ।) एहि मन्दारक, एहि । किं ब्रवीषि—'दिष्ट्या वर्धसे वयस्य' इति । वद सखे मन्दारक, किमासादिता सा मम प्राणनाडी । किं ब्रवीषि—'न केवलमासादिता। शारिकया कृतसमया च पुनरस्मिन्नुपवने' इति । (सहर्षम् ।) कथं विघ्नितमस्याः पतिगृहाभिगमनम् । किं ब्रवीषि—'मदुल्लिखितैरेव क्षुता-

---

१. जानकीपरिणयनाटकेऽप्ययं श्लोको वर्तते.

दिभिः प्रकारैः । किं च तावदेव दैवज्ञेनापि मालवेन गृहीतोत्कोचेन मासत्रयं यात्रोचितवासरालाभशंसिना वञ्चितो बन्धुवर्गः । निष्कामितश्च तदीयो देवरः' इति । सखे, दुष्करेण कर्मणानन्दनीयोऽसि । कलहंस, किं ब्रवीषि—'किं न जानीमो मन्दारकस्य कौशलम् । जितमद्य ते मनोरथेन । इयं यदि मासत्रयमत्र स्थास्यति, तदा त्वदुपभोगचिह्नशङ्कनीयामेनां न विस्रम्भेत बन्धुजनवर्गः । न संमन्येत पुनरस्याः संसर्गम् । निन्देदपि ततो गूढमिव प्रकाशमिव । अथ नातिचिरेण कालेन प्रकटं भवेदस्याश्चरितम् । प्रकटिते च तस्मिन्परित्यजेदप्येनाम् । परित्यक्ता चेयं भवन्तमेव भजेत यावज्जीवम् । भवानपि वेशवाट एव स्थापयन्निर्धन इव निधिं सानुरागमनुभविष्यति करगतमिदं स्त्रीरत्नम्' इति । कलहंस, ममाप्येवमेवाशयः । मन्दारक, कथय विस्तरेण कथमासादिता मे दयिता शारिकया । किं ब्रवीषि—'निष्क्रान्ते च देवरे मेघमुक्तेव चन्द्रलेखा प्रसादमुपेयुषी भवन्तमेव हृदि चिन्तयन्ती तदेव निष्कुटवनं प्रविश्य गतमत्र मदगजगामिना, संलपितमत्र चाटुवचनेन, प्रणतमत्र प्राणसुहृदा, परिरब्धमत्र रतिपण्डितेन, विहृतमत्र विभ्रमवतेति च स्वेनैव मुहुर्मुहुरावर्तयन्ती विरहखेदविह्वलाङ्गतया भृशालसेन पदविन्यासेन गतागतानि कलयन्ती सौशील्यभङ्गभीरुतया सखीजनाय वक्तुमपि हृदयगतमर्थमपारयन्ती प्रगल्भतया च कथमपि मदनविकारमन्तरेव परिहरन्ती पुनरपि निष्कुटवनादागत्य भवनबहिर्द्वारपर्यन्तभुवमुपजातदेवरप्रवासादिवृत्तान्तविज्ञापनाय नायकनिवासदेशाभिज्ञां कांचिदपि संचारिकामुपलब्धुमिव परितोऽपि तरलतरमक्षि विक्षिपन्ती हेमाङ्गी मत्प्रेषितायाः शारिकाया दिष्ट्या विजन एव नयनगोचरमागतवती । अनन्तरं च परस्परमप्युक्तिप्रत्युक्तिपरिचितमनसोरनयोः कुलं शीलं नाम च विदितमासीत् ।

तदनु तव कथायां प्रस्तुतायां प्रसङ्गा-
त्किमिति किमिति भूयः पृच्छती सानुरागम् ।
पुलकमुकुलभिन्नां गण्डपालीं तदानीं
चकितमपिदधे सा चञ्चलाक्षी करेण ॥ २०६ ॥

अथ पतिगृहदासी सेयमुद्दिश्य किंचि-
न्नगरमिदमवाप्ता मामपि ज्ञातपूर्वा।
अगमदिति तदानीं वञ्चयित्वा स्वबन्धू-
न्भवनवननिकुञ्जं प्राप सार्धं तयैव ॥ २०७ ॥

तत्र च सा हेमाङ्गी विविक्ततया भवनोद्यानस्य, विजृम्भिततया च विषमायुधपारवश्यस्य, विस्रम्भणीयतया च प्रियतमगुणानुरोधिवचनायाः शारिकायाः, निर्विशङ्कमिदमवादीत्—'सखि शारिके, जानामि तव भुजङ्गशेखरे मैत्रीसंपदम्। जानामि तव वैदग्ध्यं विनयभूषितत्वं च। तदिदानीमनितरसंवेद्यं किमपि वचनमभिधास्ये। तदवधार्यताम्' इति। शारिका च तदाकर्ण्य 'सखि हेमाङ्गि, हृदयान्तरमहं भुजङ्गशेखरस्य। तत्कथय विश्रब्धम्' इत्यवोचत्। अनन्तरं च

'वासो मासत्रितयमिह मे मालवेनोपदिष्टः
पत्युर्गेहं प्रति बहुमतः प्रस्थितो देवरोऽपि।
इत्थं सत्यप्यहरिति परं वर्तते विघ्न एक-
स्त्वत्संपर्के दयित भवतः किंतु चेतो न जाने ॥ २०८ ॥

इति वक्तव्यो मत्प्राणनाथः' इत्यभिहिते हेमाङ्ग्या, 'सखि, त्वद्विरहासहेन भुजंगशेखरेण कथमपि संघट्टनीया प्रेयसीति प्रार्थितस्य प्रियसुहृदो मन्दारकस्य वचनमनुरुद्ध्य मालवेन विघ्नितस्तव पतिगृहवासः। मया च तव समीपमागतम्। अतस्तव विदितमेव भुजंगशेखरस्य हृदयम्। अहमिदानीमिमं वृत्तान्तं मन्दारकाय निवेद्य पुनरागमिष्यामि तव मनोविनोदनाय' इत्यभिधाय शारिका, निर्गत्य च तदीयभवनादुक्त्वा च मां प्रति वृत्तान्तमिममवश्यमद्य पूर्वरात्रे मन्दिरोद्यानमानेष्यामि हेमाङ्गीम्, तत्रैव संनिधातव्यं भुजंगशेखरेण सह भवतेति कृतप्रतिज्ञा पुनरपि तत्र गतवती' इति। सखे मन्दारक, सम्यगुपकृतं भवता। अत्रैव प्रच्छायशीतले माकन्दमूले दिनशेषं यापयामि यावदभिगमिष्यति सा सह शारिकया मे प्राणनाडी। मन्दारक, किं ब्रवीषि—'कथमनया पतिगृहमधिवसन्त्या हेमाङ्ग्या प्रागेव कृतो रागोद्भेदः। कथय। श्रोतुमिच्छामि' इति। श्रूयतां तावत्। पुरा किल कदा-

चिदहं कुतूहलादनेन सवयसा कलहंसेन सह चरन्नभितः प्रसृतैकवेरकन्यासलिलसमुच्चलितकोमलकुमुदकह्लारकलिकासंसर्गसुरभिलतरङ्गपवनापनीयमानसुरतपरिश्रमसुललिततरुणीशतविलासोचितविविधसौधशृङ्गां रङ्गनगरीमुपगतवान् ।

यत्र कमलामनोहरमीडे भुजगाधिराजपर्यङ्कम् ।
कुलधनमिक्ष्वाकूणां कुवलयदलनीलमादिमं तेजः ॥ २०९ ॥

तत्र च कदाचन रथ्यामुखे रजतगिरिशृङ्गमिव समुत्तुङ्गं कमपि तुरङ्गमधिरुह्य महोत्सवमनुभवन्तं रङ्गनायकमभिवन्द्य प्रतिनिवर्तमानां कयापि हृदयान्तर्भूतया प्रतिनिवेशिन्या सलीलमालम्बितसव्यकरपल्लवामखिलयुवलोकवशीकरणविद्यामानङ्गीमिव हेमाङ्गीमपश्यम् । सखे, किमन्यत् । तदानीं हि

हृदयं तथा मदीयं तस्या लावण्यसागरे मग्नम् ।
तप्तं यथा भविष्यति तद्गतमदनास्त्रवाडवशिखाभिः ॥ २१० ॥ २५

किंच ।

विक्षिप्तमुत्कलिकया त्रपया निरुद्धं
प्रेम्णा विनिश्चलमथाकुलितं भयेन ।
तस्याः सरोजदलमुग्धदृशः सलील-
मालोकितं विविधमन्वभवं तदानीम् ॥ २११ ॥

तदनु नियन्त्रित इव तदीयकटाक्षेण, निराकृत इव मदनशरवेगेन, निरुद्ध इव प्रथमरसपूरेण, केवलं पदात्पदमपि चलितुमपारयन्नप्रभवन्नात्मनोऽपि तत्रैव क्षणमतिष्ठम् । सा च तरुणी किंचिदिव साचीकृतेन वदनेन परतो मयि पर्यस्तलोचना पुरतस्तु विषमविन्यासपरिस्खलितपदरणन्मञ्जीरा मन्दंमन्दमाविवेश मन्दिरम् ।

हृदये सुदृशा हृते मदीये विदितं मे न किमप्यभूत्तदानीम् ।
चरितं परतस्तनं विबोद्धुं कलहंसो मदनोऽपि वा ममालम् ॥ २१२ ॥

कलहंस, किं ब्रवीषि—'तस्यास्त्वं मदन एव' इति । स्मरसि सखे, सर्वमपादानम् । शृणु मन्दारक, तदनु कतिपयकालमस्या भवनोपान्तरथ्यामुखसंचारिणि मयि पश्यन्त्येव मम हृदयमुन्नीय किमपि पद्यमारच्य्य नखमुखे-

नैव नवकिसलये विलिख्य चन्द्रिकया नाम संचारिकया समर्पितवती। यत्किल

लब्धव्या रसिकेन चन्दनलता सा चेन्न लब्धुं क्षमा
द्वीपे भीमभुजंगमावृततया किं तस्य हीनं ततः ।
सारज्ञैरुपलालनीयमनघं सौरभ्यमभ्येयुषी
मोघा दुर्विधिना कृता परिणतौ सा केवलं निन्द्यते ॥ २१३॥'

इति । अनन्तरमिदमवलोकयन्नहं तस्या हरिणीदृशो यातर इत्यचेतनाः पिशुनाः, ननान्दार इत्यरज्जुकृतास्ताडिन्यः, श्वश्रूरित्यलोहमयी शृङ्खला, पतिगृहमित्यराजपुरुषकृतं कारागृहमिति च निश्चित्य सखि चन्द्रिके, यदि मातृगृहमागमिष्यति तव प्रियसखी तदानीमयमपि तस्या विरहदासो भविष्यति माथुरो भुजंगशेखर इति प्रतिनिवर्त्य चन्द्रिकां विषादमात्रशरणः कथंचिदनेन कलहंसेन समाश्वासितो बलवन्मम नगरमिदमानीतः। मन्दारक, किं ब्रवीषि—'अतः परं विदितमेव' इति । (परितो विलोक्य ।) कथमियं मरालिकायाः सहचरी मयूरिका समुच्चिनोति कुसुमानि किसलयानि च । तन्मन्ये मरालिका ताम्यति मदनेन । भवतु । पृच्छामि । मयूरिके, किमेतत् । किं ब्रवीषि—'मरालिकायाः शिशिरोपचाराय । ईदृशी खलु तस्या दशा ।

पुष्पाण्यङ्गविवर्तनेन शयने ताम्यन्ति शुष्यन्ति च
छिद्यन्ते करयोर्मृणालवलयान्यासाद्य शोषं क्षणात् ।
क्वाथो बुद्बुदफेनिलस्तनतटे गन्धद्रवो दृश्यते
तन्व्या हन्त न वेद्मि किं लिखितवान्फाले कठोरो विधिः ॥ २१४ ॥
सिञ्चत्यस्या हिमजलकणैः शश्वदङ्गानि सख्यः
सद्यो लूनाम्बुजदलमयैस्तालवृन्तैर्व्यजन्ति ।
भूयो भूयः किसलयमयीं कल्पयन्ते च शय्यां
किंच न्यस्यन्त्युरसि सरसीशीकरार्द्रा मृणालीः ॥ २१५ ॥'

इति । सखि मयूरिके, केन वा यूना मरालिकाया विरहः । किं ब्रवीषि—'केन वा पुनरन्येन भविष्यति मरालिकाया विरहः' इति। मन्दारक,

किं ब्रवीषि—'कलहंसमिव स्पृशति वचनमस्याः' इति । कलहंसमेवेति कथय । सखे कलहंस,

प्रोषितो यो मनोजेन शोषितो यत्कृते पुरा ।
अद्य ते तस्य विरहात्खिद्यते सा मरालिका ॥ २१६ ॥

तदनुचितमुपेक्षितुमेषा भवता ।

यावन्नास्या वियोगाग्निः प्रशान्तिमुपगच्छति ।
पीताधरदला तावदियमालिङ्ग्यतां त्वया ॥ २१७ ॥

किंच शापितोऽसि । मदनेन मत्प्रणयेन च । किं ब्रवीषि—'अहो वचनमतिप्रसक्तं वयस्यस्य । किमन्यदुत्तरमेतस्य । इतो गम्यत यत्र मरालिका' इति । सखि मयूरिके, नय कलहंसं यत्र तव प्रियसखी सीदति । मन्दारक, किं ब्रवीषि—

'निष्क्रान्तः कलहंसः कान्तागृहमभि समं मयूरिकया ।
किंच चरमाचलं प्रति दिनलक्ष्म्या साकमहिमांशुः ॥ २१८ ॥'

इति । (परितो विलोक्य ।) एवमेतत् । पश्य ।

प्रसाद्य कुपितामिव प्रथमतः प्रियां पद्मिनी-
मुपेत्य परिरम्भणं तदनु दिग्वधूनां चिरम् ।
विहर्तुमनुरक्तया सह दिनश्रिया सांप्रतं
विविक्तमिव पश्चिमं गिरिमुपैति मन्ये रविः ॥ २१९ ॥

संप्रति हि ।

भानोः पश्चिमशैलकन्दरकुटीमभ्येयुषः संभ्रमा-
त्संध्यारागमिषेण किं विगलिता भान्ति त्विषः पञ्चषाः ।
किंचैषा कृतनिश्चयेन कवलीकर्तुं महीमण्डली-
माक्रान्ता प्रथमं घनेन तमसा नीला तमालाटवी ॥ २२० ॥

सखे, किं ब्रवीषि—'कथं पश्यत एव जगतः प्रसृतमन्धकारेण ।

इदानीं वस्तूनां बृहदणुविभागानपहर-
त्समीकुर्वन्निम्नोन्नतमपि जगत्यन्धतमसम् ।

मुदं वासोमाल्याभरणरुचिसाधारणतया
विधत्ते संकेतस्थलमभिसृतानां मृगदृशाम् ॥ २२१ ॥'

इति । पश्य सखे, कथमियन्तमपि समयं विलम्बते मम प्रियतमा । यद्वा दुर्लभ एव कुलस्त्रीणामुपगमावसरः । अयि, किं करोमि ।

अभिनवकज्जलमसृणो निखिलं जगदावृणोति तिमिरौघः ।
मम च पुनरन्तरङ्गं मदनज्वरशोकसंभवस्त्वपरः ॥ २२२ ॥

सखे, किं ब्रवीषि—'क्षणमात्रं प्रतीक्षस्व । यतः ।

तिमिरच्छिदा करेण त्वरयन्नभिसारिणीस्तरुणीः ।
इन्दुरुदयमधिरोहन्कुरुते मुदमद्य समयिनां यूनाम् ॥ २२३ ॥'

इति । (पुरतो विलोक्य ।) कथमुदितं कुमुदवलयबन्धुनेन्दुना । एष खलु

उद्यन्नेव कलात्मनानुकुरुते तां मद्वियोगात्कृशां
पश्चात्तन्निटिलस्य च श्रियमसावर्धोदितः सेवते ।
तद्वक्त्रोपमया प्रहृष्यति शशी पर्याप्तबिम्बोऽधुना
तामेव स्मरयन्नयं प्रियतमां मन्ये दृशोरुत्सवः ॥ २२४ ॥

किंच ।

आकर्ण्यन्ते मदकलरणत्कोकिलव्याहृतानि
स्त्यायन्ते च स्फटिकविमलाः सर्वतश्चन्द्रपादाः ।
अर्धोन्मीलत्कुमुदमुकुलामोदगर्भश्च वायुः
सर्वं रम्यं भवति यदि मामेष्यति प्रेयसी च ॥ २२५ ॥

किं ब्रवीषि—'इतो रक्ताशोकमूले पदशब्द इव श्रूयते । स तदीयो वा पुनरन्यदीयो वेति निभृतौ जानीवः' इति । (किंचित्परावृत्य । सहर्षम् ।) कथमितः शारिका समापतति । भवितव्यं च तदनुयायिन्या मम वल्लभया । मन्दारक, किं ब्रवीषि—'सखि शारिके, किमासीत्' इति । शारिके, किं ब्रवीषि—'इयमद्य हेमाङ्गी पुष्पिण्यभूदिति विप्रलब्धया बन्धुतया बहिस्त्यक्ता मुधापतिकुलदासीभूतया मयैव सहायवती कृता हेमाङ्गी । तदनन्तरमस्तंगते सवितरि विस्तृत्वरे च कज्जलकालिम्नि तमस्काण्डे मन्दमेव विनिर्गत्य मन्दिरान्तरादुपवनमिदं गतमावाभ्याम्' इति । सखि शा-

रिके, बहूपकृतं त्वया भुजंगशेखरस्य । (ससंभ्रममुपसृत्य ।) सखे मन्दारक,

कुवलयदलनीलस्निग्धचेलाभिरामा
कथमुडुपतिलेखा कालकालंकृतेव ।
अमुखरमणिकाञ्चीनूपुरेयं पुरो मे
सरिदपकलहंसी-सारसेवाविरासीत् ॥ २२६ ॥

पश्य । सखे, पश्य ।

नेयं नारी कुसुमधनुषश्चायकी चापवल्ली
बद्धा मुग्धस्मितरुचिमिषादानने चामरेण ।
हस्तालम्बादिव युधि मुहुर्येन मध्ये कृशेयं
वेणीव्याजादिह विरचिता दृश्यते यच्च मौर्वी ॥ २२७ ॥

किंच ।

आस्ते कुत्रचिदम्बरं हिमकरः कादम्बिनी च क्वचि-
द्वापी क्वापि चकास्ति मीनमिथुनं कोकद्वयं चान्यतः ।
किंचाधः पुलिनोच्चयस्य कदलीकाण्डाववाग्रोपितौ
तन्मन्ये चतुरस्य पुष्पधनुषः सर्गोऽयमन्यादृशः ॥ २२८ ॥

(सरभसमुपसृत्य ।)

मदनाग्निनाभितप्तस्तृपितोऽस्मि चिरादहं दयिते ।
मधुरमधरामृतं ते वितर विशालाक्षि किं विलम्बेन ॥ २२९॥

कथमियं लज्जानतमुखी तिष्ठति । यावदस्या वदनमुन्नमयामि । (इति चिबु-कग्रहणमभिनीय ।)

मधुरमिदमधरबिम्बं मानिनि नासा च रुचिरेयम् ।
अलकमिदं रमणीयं पश्यामि तथालकानपि मनोज्ञान् ॥ २३० ॥

अपि च ।

अधरीकरोति चम्पकमात्मसुधामिति किमष्टमीचन्द्रः ।
अलिकुलमस्य विपक्षं धारयते शिरसि ते विशालाक्षि॥ २३१ ॥

१. अयं श्लोको जानकीपरिणयनाटकेऽप्यस्ति.

किं ब्रवीषि—'मानद, स्वाधीनोऽयं ते जनः' इति। कल्याणि, तव पुनरयं विहारदासस्त्वदायत्तजीवितश्च। शारिके, किं ब्रवीषि—

'अज्ञातविविधचुम्बनमनभिज्ञातोपगूहनविशेषम्।
अविदितनखार्पणं पतिमवाप्य हि रतेषु खिन्नेयम्॥ २३२॥

अतस्त्वया तदनुगुणमुपभोक्तव्या' इति। किमनङ्गागमपारीणस्य ममापीदं वक्तव्यम्। मन्दारक, किं ब्रवीषि—'अतःपरं किं मया तव कर्तव्यम्' इति। (सहर्षम्।)

प्रस्थानं पतिमन्दिरं प्रति बलादस्यास्त्वया विघ्नितं
बाभ्रव्यश्च विवासितो दयितया दत्ताशया शारिका।
लब्धा मे चिरलिप्सिता च तरुणी तीर्णा प्रतिज्ञा त्वया
कर्तव्यं च किमन्यदस्ति भवता भूयोऽपि यन्मे प्रियम्॥ २३३॥

तथापीदमस्तु। (भरतवाक्यम्।)

आचन्द्रार्कमिदं भवेदविरलं गोब्राह्मणेभ्यः शिवं
भूमिस्त्वागमवृद्धसेविभिरियं राजन्वती राजभिः।
लाल्यन्तां सरसोक्तयश्च कवयः शश्वद्रसज्ञैर्जनैः
स्यादेतस्य कवेश्च भक्तिरचला देवे रघूणां प्रभौ॥ २३४॥

(इति निष्क्रान्तः।)

**इति कौण्डिन्यकुलमण्डनरामभद्रकविविरचितशृङ्गारतिलकभाणः संपूर्णः।**



KÂVYAMÂLÂ 27.

# THE
# JÎVÂNANDANA
OF
# ÂNANDARÂYA MAKHÎ.

EDITED BY

PAṆDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

PRINTED AND PUBLISHED

BY

THE PROPRIETOR

OF

THE "NIRṆAYA-SÂGARA" PRESS.

BOMBAY.

1891.

*Price* 12 *Annas.*

काव्यमाला. २७

आनन्दरायमखिप्रणीतं

# जीवानन्दनम् ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितम् ।

तच्च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९१



मूल्यं १२ आणकाः ।

# काव्यमाला ।

## श्रीमदानन्दरायमखिप्रणीतं

# जीवानन्दनम् ।

प्रथमोऽङ्कः ।

लक्ष्मीकैरवबन्धुकल्पकतरूंल्लब्ध्वाथ लब्धेप्सिते
भूयो मथ्नति देवदानवगणे दुग्धाब्धिमृद्धश्रमे ।
तस्यानन्दथुना समं समुदयन्कुम्भं सुधापूरितं
बिभ्राणः स्वकरे करोतु भवतां भद्राणि धन्वन्तरिः ॥ १ ॥

अपि च ।

प्राग्जन्मीयतपःफलं तनुभृतां प्राप्येत मानुष्यकं
तच्च प्राप्तवता किमन्यदुचितं प्राप्तुं त्रिवर्गं विना ।
तत्प्राप्तेरपि साधनं प्रथमतो देहो रुजावर्जित-
स्तेनारोग्यमभीप्सितं दिशतु वो देवः पशूनां पतिः ॥ २ ॥

(नान्द्यन्ते)

**सूत्रधारः**—मारिष, इतस्तावत् ।

(प्रविश्य)

**पारिपार्श्वकः**—भाव, एषोऽस्मि ।

**सूत्रधारः**—

रीतिः सुखपदन्यासा शारदीया विजृम्भते ।
पूर्णचन्द्रोदयश्चायं निहन्ति ध्वान्तमामयम् ॥ ३ ॥

पि च ।

क्रममाणेषु दिगन्ते जलधरजालेषु शङ्खधवलेषु ।
शान्तिमुपयाति सहसा कालुष्यदशा भृशं पयसाम् ॥ ४ ॥

**पारिपार्श्वकः**—अतः किमाचरितव्यम् ।

**सूत्रधारः**—शृणु तावत् । अत्र तञ्जापुरे पौरजानपदा देशान्तरादागताश्च बृहदीश्वररथोत्सवदिदृक्षया संघीभूताः ।

सरसकवितानाम्नो हेम्नः कषोपलतां गता
विहरणभुवः षड्दर्शन्या विवेकधनाकराः ।
विदधति तपोलभ्याः सभ्या इमे मम कौतुकं
तदिह हृदयं नाट्येनैतानुपासितुमीहते ॥ ५ ॥

**पारिपार्श्वकः**—(सशिरःकम्पम् ।) कं पुनः प्रबन्धमवलम्ब्य ।

**सूत्रधारः**—नन्वस्ति मम वशे सहृदयजनहृदयचन्दनं जीवानन्दनं नाम नवीनं नाटकमिति ।

**पारिपार्श्वकः**—कस्तस्य प्रबन्धस्य कविः ।

**सूत्रधारः**—विद्वत्कविकल्पतरुरानन्दरायमखी । य एष इह

गुरुदेवद्विजभक्तो नैमित्तिकनित्यकाम्यकर्मपरः ।
दीनजनाधीनदयो विहरति समरे च विक्रमार्क इव ॥ ६ ॥
यः स्नातोऽजनि दिव्यसिन्धुसलिले यः स्वात्मविद्याश्रितो
येनाकारि सहस्रदक्षिणमखो यः सद्भिराश्रीयते ।
सोऽयं त्र्यम्बकराययज्वतिलको विद्वत्कवीनां प्रभो-
र्यत्तातस्य नृसिंहरायमखिनस्तुल्यप्रभावोऽनुजः ॥ ७ ॥

**पारिपार्श्वकः**—(सबहुमानम् ।) आः, ज्ञायत एवायम् । किं त्वस्य सर्वलोकविदिता अप्येते गुणाः प्रबन्धनिर्वाहधूर्वहत्वमवबोधयितुं नेशते । यतः ।

आराध्नोति यदेष भक्तिभरितो देवान्द्विजातीन्गुरू-
न्यच्च श्रद्दधदातनोति समये नित्यादिकर्मत्रिकम् ।
यद्दीनेषु दयां करोति समरे शौर्यं यदालम्बते
तत्सर्वं नरसिंहयज्वसुततालाभस्य लीलायितम् ॥ ८ ॥

इदं तु श्रोतव्यम् ।

आनन्दरायमखिनो वाल्मीकेरिव योगिनः ।
इतरापेक्षणात्सारः स्वतः सारस्वतोदयः ॥ ९ ॥

**सूत्रधारः**—(विहस्य।) मारिष, त्वं न जानासि यत एवं ब्रवीषि। शृणु तावत्।

आबाल्यादपि पोषितोऽजनि मया प्रेम्णा तथा लालित-
स्तेनासौ सरसामुपैतु कवितामानन्दरायाध्वरी।
इत्येकक्षितिपालवंशजलधेर्देव्या गिरां जातया
श्रीशाहावनिनायकाकृतिभृता नूनं प्रसादः कृतः॥ १०॥

अत एव

कवीनां पूर्वेषां कथमपि च चित्तैरवहितै-
र्गृहीता या नासीत्सरसकवितासारपदवी।
असौ तामाक्रामन्हरति नरसिंहाध्वरिकुल-
प्रदीपः सूरीणां श्रवणयुगजाड्यान्धतमसम्॥ ११॥

**पारिपार्श्वकः**—श्रीशाहराज इति नाम दधत्याः सरस्वत्याः कियानानन्दरायमखिनि दयाविशेषः। यतः।

पुष्यत्कौतुकपद्मसंभृतकरद्वन्द्वाङ्गुलीवेल्लन-
द्राङ्क्ष्पीडितचन्द्रमण्डलगलत्पीयूषधारासखैः।
वाग्गुम्फैर्बलवैरिधारितशचीधम्मिल्लमल्लीसर-
स्फारामोदमदापहैश्च कवयत्यानन्दरायाध्वरी॥ १२॥

युक्तमुक्तं च भावेन 'शाहभूपतिरूपेण गिरां देवी जाता' इति। कथमन्यथानन्यसाधारणमस्य प्रागल्भ्यम्। तदिदानीमिदमुत्प्रेक्ष्यते—

भर्तुं लालयितुं भुवि प्रथयितुं विद्वज्जनानाश्रिता-
न्श्रीशाहक्षितिपात्मना क्षितिगतां मत्वा गिरां देवताम्।
आसिञ्चन्नसकृत्कमण्डलुजलैरङ्गानि पर्याकुलो
धाता वाहनहंसपक्षपवनैस्तापं किलापोहति॥ १३॥

**सूत्रधारः**—तन्नियोजय भूमिपरिग्रहायास्मद्वर्ग्यं शैलूषगणम्।

**पारिपार्श्वकः**—बाढम्। किं तु सन्ति कथानायकस्य जीवस्य परिजना विज्ञानशर्मप्रभृतयः प्रतिनायकस्य च यक्ष्मणः परिजनाः पाण्डुश्वासकासज्वरगुल्मातिसारप्रभृतयः। तेषां यद्यपि भूमिकाग्रहणपटवो नटबटवः

पुण्डरीककेयूरकमयूरकसारङ्गकतरङ्गकप्रभृतयः संनह्यन्ति । तथापि प्रयोगस्य बहुत्वेन दुरवगाहतया कथमभीप्सितार्थसिद्धिर्भविष्यतीति विचारेण व्याकृष्यत इव मे हृदयम्।

**सूत्रधारः**—यत्किंचिदेतत्। महतामेषां सामाजिकानामनुग्रह एवास्माकमभीप्सितमर्थं समग्रयिष्यति। यतः।

जाड्यं भिनत्ति जनयत्यधिकं पटुत्वं
सार्वज्ञमावहति संमदमातनोति।
विद्वेषिवर्गविजयाय धृतिं विधत्ते
किं किं करोति न महद्भजनं जनस्य॥ १४॥

**पारिपार्श्वकः**—एवं च मन्ये त्वया सह स्पर्धमानोऽपि विकटनामा नटबटुरभिनयविद्यायां महदनुग्रहात्त्वयैव विजेष्यत इति।

**सूत्रधारः**—विकटो नाम नटबटुर्मया सह स्पर्धत इत्यतत्त्वविदो वचनम्। शृणु तावत्।

अभिनयविद्याविषये दुरहंकाराकुलीकृतो विकटः।
स नटबटुर्मां वाञ्छन्त्यभिभवितुं जीवमिव यक्ष्मा॥ १५॥

(नेपथ्ये)

अरे रे शैलूषापसद, 'अभिभवितुं जीवमिव यक्ष्मा' इति किमसंभावितमर्थं दृष्टान्तयसि।

मयि जीवति जीवस्य स्वामिनो मन्त्रिणि प्रिये।
दुर्बलो यक्ष्महतकः कथं वाभिबुभूषति॥ १६॥

**सूत्रधारः**—(आकर्ण्य।) मारिष, जीवराजमन्त्रिणो विज्ञानशर्मणो भूमिकामादाय मम कनीयान्कलहंसो रङ्गभुवमवतरति। तदावामप्यनन्तरकरणीयाय सज्जीभवावः।

(इति निष्क्रान्तौ।)

**प्रस्तावना।**

---

(ततः प्रविशति जीवमन्त्री विज्ञानशर्मा ।)

**विज्ञानशर्मा**—('अरेरे शैलूषापसद–' इत्यादि पठित्वा विचिन्त्य ।) सर्वथा राजसमीपं गत्वा तदनुज्ञया यक्ष्मणः प्रवृत्तिमुपलब्धुं चारान्प्रेषयिष्यामि । अथवा 'तत्प्रवृत्त्युपलम्भाय प्रेषय धारणाम्' इति मयोक्तो राजा तथा कुर्यात् । (श्रुतिमभिनीय ।)

दिक्षूदञ्चति ताम्रचूडरसितं यद्ध्रस्वदीर्घप्लुत-
　प्रायोवर्णनिभं ब्रवीति तदिदं व्युष्टा निशाभूदिति ।
स्त्रीणां निर्गमनं विहृत्य पतिभिर्ब्रूते विनैवाक्षरैः
　क्रीडावेश्मकपाटिकाविघटनक्रेंकारपारम्परी ॥ १७ ॥

तदिदानीं देव्या प्रसन्नया बुद्ध्या सह राजा प्रतिबुध्य निवसेत् । तदुपसर्पामि । (इति पुरो दृष्टिक्षेपमभिनयन् ।)

चञ्चत्खेटकृपाणकञ्चुकशिरस्त्राकल्पदृप्यद्भटा
　सादिव्याञ्चतवक्रमण्डलगातत्वङ्गत्तुरङ्गव्रजा ।
गण्डद्वन्द्वगलन्मदाम्बुमुखरीभूतद्विरेफद्विपा
　दृष्ट्योर्मे कुतुकाय राजभवनद्वारोपकण्ठस्थली ॥ १८ ॥

अपि च ।

प्रौढामात्यनिरुक्तमन्त्रपदवीविस्रम्भसंचारिणो
　राज्ञो दुःसहतेजसो निशमने यद्वद्धृतिं द्वेषिणः ।
प्रासादप्रतिहारवेदिषु तथा स्नेहाङ्कपात्रस्थिताः
　प्रत्यूषोपगमे प्रदीपमुकुलाः कान्तिं त्यजन्त्यञ्जसा ॥ १९ ॥

(पुरो विलोक्य ।) का पुनरियं तपश्चरणजनितप्रभुत्वगौरवेव मामभिवर्तते ।

गाढोन्नद्धजटाकलापकपिलश्रीधूतबालातपा
　बिभ्राणा भसितानुलेपधवलच्छायां तनुं पावनीम् ।
भिक्षापात्रमयूरपिच्छचयभृत्पाणिद्वया मेऽधुना
　काषायाम्बरधारिणी कलयति स्वान्ते धृतिं तापसी ॥ २० ॥

(निपुणं निरूप्य ।)

अस्यामक्षिभ्रुवं नासा रदपङ्क्ती रदच्छदः ।
चुबुकं मन्दहासश्च धारणायामिवेक्ष्यते ॥ २१ ॥

(ततः प्रविशति तापसीवेषा धारणा।)

**धारणा**—अहं खु पच्चत्थिराआभिसेणणसंणाहं कस्स वि पुरिसस्स मुहादो सुदवन्तेण रण्णा 'इमं उत्तन्तं पुरं पविसिअ जाणीहि' त्ति पेसिदह्मि। मए वि तावसीवेसाए तह जाणिअ रण्णो समीवे समागमीअदि। (अग्रतो दत्तदृष्टिः स्वगतम्।) एसो विण्णाणसम्मा अमच्चो आअच्छदि। होदु। वेसेण पदारेमि णम्। जज्जवि सव्वस्सिं वि कज्जे इमस्स अणुमदिं विणा राआ ण पवट्टइ तह वि जं मह संसओ वट्टइ ता एअकस्स पआसो ण भवे। (इति परिक्रामति।) (क)

**मन्त्री**—(दृष्ट्वा स्वगतम्।) इयं तापसी राजप्रहिता प्रच्छन्ना किं धारणा भवेत्। भवतु। पृच्छामि। (प्रकाशम्।) अये तापसि, का त्वम्। कुत आगच्छसि।

**धारणा**—(स्वगतम्।) इमस्स पडिवअणं भासन्तरेण भणेमि। अण्णहा कहं वि जाणिस्सदि इअं सेति। (प्रकाशम्।) अहं खलु गार्गी यक्ष्मणो राज्ञो वयस्या देव्या गृहिण्याः स्नेहसर्वस्वभाजनं तदन्तःपुरादेवागच्छामि। (ख)

**मन्त्री**—(स्वगतम्।) भवेदेवेयं धारणा तापसीवेषेण रिपुप्रवृत्तिमुपलभ्यागतवती। अयं स्वनामानुगुणमभिज्ञो वा न वेति मां परीक्षितुं संस्कृत-

---

(क) अहं खलु प्रत्यर्थिराजाभिषेणनसंनाहं कस्यापि पुरुषस्य मुखाच्छ्रुतवता राज्ञा 'इमं वृत्तान्तं पुरं प्रविश्य जानीहि' इति प्रेषितास्मि। मयापि तापसीवेषया तथा ज्ञात्वा राज्ञः समीपे समागम्यते। एष विज्ञानशर्मा अमात्य आगच्छति। भवतु। वेषेण प्रतारयाम्येनम्। यद्यपि सर्वस्मिन्नपि कार्येऽस्यानुमतिं विना राजा न प्रवर्तते तथापि यन्मम संशयो वर्तते तदेककस्य प्रकाशो न भवेत्।

(ख) अस्य प्रतिवचनं भाषान्तरेण भणामि। अन्यथा कथमपि ज्ञास्यति इयं सेति।

भाषया वेषानुगुणमपलपते प्रतिपक्षकुले च पक्षपातमात्मनः सूचयति । भवतु । अहमप्यजानन्निवानुनयन्पृच्छाम्येनाम् । (प्रकाशम् ।) अये तापसि,

निखिलं जगतश्चरितं विज्ञातं ते समाधिनैव भवेत् ।
तन्मे महाप्रभावा भाग्येनासादिता भवती ॥ २२ ॥

**धारणा**—(स्वगतम् ।) मं तावसिं एव्व जाणिअ मह मुहादो पच्चत्थिराअप्पउत्तिं सुणिदुं अणुणअप्पआरो एसो । होदु । अहं वि अजाणन्तीव पुच्छामि । (प्रकाशम् ।) कस्त्वम् । क्व गच्छसि । सूनृतेन ते वचनेन साधुर्भवानिति पृच्छामि । (क)

**मन्त्री**—(स्वगतम् ।) इयमात्मानं गोपयति । अहमपि तथैवोत्तरयामि । (प्रकाशम् ।) कार्यविशेषेऽधिकृतं जानीहि येनैवमधिकृतस्तन्निकटे गच्छामि ।

**धारणा**—(स्वगतम् ।) एसा विपक्खजणपक्खवादिणित्ति गोपणप्पआरो एसो । (प्रकाशम् ।) केनाधिकृतोऽसि । (ख)

**मन्त्री**—भगवति, त्वमेव जानासि । यतः प्रणिधानेन योगिनः सकलमपि प्रत्यक्षयन्ति ।

**धारणा**—(स्वगतम् ।) कहं एदं आपडिदम् । होदु । जोइणो विअ आसिअं करिअ अमच्चं वञ्चेमि । (इति ध्यानारूढा तिष्ठति ।) (ग)

**मन्त्री**—(स्वगतम् ।) एषा खलु

कृत्वा स्वस्तिकमासनं करयुगं विन्यस्य जानुद्वये
नासाग्रार्पिततारका नतमृजूकृत्यावलग्नं दृढम् ।
निःश्वासोच्छ्वसितोपरोधघटितस्तैमित्यपीनस्तनी
चित्ते मे कृतसंयमेव कुरुते धूर्ता महत्कौतुकम् ॥ २३ ॥

(प्रकाशम् ।) परिनिष्ठितं योगाभासनं भवत्याः ।

---

(क) मां तापसीमेव ज्ञात्वा मम मुखात्प्रत्यर्थिराजप्रवृत्तिं श्रोतुमनुनयप्रकार एषः । भवतु । अहमप्यजानतीव पृच्छामि ।

(ख) एषा विपक्षजनपक्षपतिनीति गोपनप्रकार एषः ।

(ग) कथमेतदापतितम् । भवतु । योगिन इवासिकां कृत्वा अमात्यं वञ्चयामि ।

**धारणा**—(ध्यानाद्विरम्य सस्मितम् ।) जीवस्य राज्ञो मन्त्री विज्ञानशर्मा भवान् ।

**मन्त्री**—महाप्रभावा योगसिद्धिमती भवती । तथाहि ।

बुद्ध्या महत्या कृतसाहचर्या देवे निजे दर्शितभूरिभक्तिः ।
परप्रवृत्तिं विदती महिम्ना साधारणा त्वं त्वहिते हिते च ॥ २४ ॥

**धारणा**—(स्वगतम् ।) किं जाणिदं म्हि अमच्चेण जहत्थणामधेएण जं तावसीवण्णणव्वाजेण अहं जेव्व वण्णिदा । होदु । एव्वं भणामि । (प्रकाशम् ।) महान्खलु योगप्रभावः । (क)

**मन्त्री**—भगवति, तव न किंचित्प्राणिनामन्तर्गतमविदितमस्ति । अतस्त्वां प्रार्थये । कथमस्माकं राजनि यक्ष्मा मन्यते । योगिन्यास्तव दुःखितेषु कथमेषां दुःखविमुक्तिः स्यादिति चित्तपरिकर्मविशेषः करुणा भवत्येव । योगाङ्गेषु यमेषु वाङ्मनसयोर्यथार्थत्वरूपः सत्यं नाम द्वितीयो यमोऽपि तथा । अत इदं निर्विशङ्कं प्रार्थनापूर्वं पृष्टासि ।

**धारणा**—(स्वगतम् ।) जक्खराजपक्खवादविसेसे वि जोइणीए पुच्छिदस्स जहत्थुत्तरं अभणिअ असक्कं ठादुं त्ति मण्णइ अमच्चो । (प्रकाशम् ।) किमन्यत् । पुरान्निष्क्रमयितव्योऽयमिति मन्यते । (ख)

**मन्त्री**—कथमेतदेतस्य संघटते सामादिषु चतुर्ष्वुपायेष्वेकैकस्यापि प्रयोगेण सुसाधो हि रिपुमनोरथभङ्गः ।

**धारणा**—नन्विमं दुष्करं पश्यामि ।

यक्ष्मणि विभौ प्रयोगं घटयन्ति न सामभेददानानि ।
दण्डः प्रभवेन्नु कथं प्रबलतरे रिपुजने स्वस्मात् ॥ २५ ॥

**मन्त्री**—यथार्थमाह भवती । किं त्विदं पक्षपातवचनम् । केनेममस्मत्प्रबलतरं मन्यसे ।

---

(क) किं ज्ञातास्म्यमात्येन यथार्थनामधेयेन यत्तापसीवर्णनव्याजेनाहमेव वर्णिता । भवतु । एवं भणामि ।

(ख) यक्ष्मराजपक्षपातविशेषेऽपि योगिन्या पृष्टस्य यथार्थोत्तरमभणित्वा न शक्यं स्थातुमिति मन्यतेऽमात्यः ।

**धारणा**—(स्वगतम् ।) एसो अत्तकेरअस्स पहुणो अमच्चो । ता पहुजअ-विषअणीए मन्तविचारसिद्धीए परपक्खबलट्ठिदिं एदस्स जेव्व कहइस्सम् ।(क) (प्रकाशम् ।) सर्वरोगराजो यक्ष्मा निष्प्रतीकार इति सर्वजनविदितमेतत् । शृणु तावत् । परीवारा एतस्य रोगविशेषा भीमरूपा बहवः । तथाहि ।

ज्वरपाण्डुप्रमेहार्शः शूलगुल्मभगंदराः ।
कासश्वासावतीसारसंनिपाताश्मरीव्रणाः ॥ २६ ॥

किं च ।

रोगा मूर्ध्नि शतं चतुर्नवतिरेवाक्ष्णोस्तथा नासिकां
प्रत्याष्टादश कर्णयोरपि तथा वक्त्रे चतुःसप्ततिः ।
पञ्चैवं हृदि किं च सन्ति बहवः सर्वेऽप्यमी दुस्तराः
प्राप्तौ कल्ककषायलेह्यवटकप्रायौषधानामपि ॥ २७ ॥

तस्माद्दुर्जयो युष्माभिः ।

**मन्त्री**—(स्वगतम् ।) इयं किल भीत्या निसर्गकातरा प्रबलपरबलप्रवेशहृदया मदीयप्रभावमजानती स्वबुद्ध्यनुरूपं किमपि प्रलपति । भवतु । किमनया वृथा संवादकदर्थनया । प्रस्तुतकार्यसाधनार्थमिमां तावदन्तरयामि । (प्रकाशं सोपहासम् ।)

आलोक्य शात्रवबलं बहुधारणे त्वं
भीतासि संप्रति रसं प्रतिपन्नधैर्या ।
जीवस्य जीवितसमे मयि सत्यमात्ये
भूयात्कथं बत विरोधिशिरोधिरोहः ॥ २८ ॥

**धारणा**—(विहस्य ।) कधं जाणिदह्मि अमच्चेण । ता कहेमि विस्सद्धं जहत्थं सुणादु अमच्चो । अहं खु देईए बुद्धीए सहअरी रण्णा जीवेण तावसीवेसं करिअ रत्तिम्मि पुरं पविसिअ जक्खराअस्स विआरणीओ व-

---

(क) एष आत्मीयस्य प्रभोरमात्यः । तत्प्रभुजनविषयिण्या मन्त्रविचारसिद्धेः परपक्षबलस्थितिमेतस्यैव कथयिष्यामि ।

वसाओ त्ति पेसिदह्मि । तह ज्जेव विचारिअ अज्जं पदारेदुं पच्छण्णे व ठिदह्मि । (क)

**मन्त्री**—युज्यत एतत् । अतो राजसमीपमेव गच्छावः ।

**धारणा**—तुमं जेव्व गदुअ इमं वुत्तन्तं भणाहि । रण्णो णिवेदणादो वि तुह पुरदो कज्जणिवेदणं अब्भहिदम् । अहं उण दुज्जणसंसग्गकिदं कलुसं पक्खालेदुं महाणदिं ण्हादुं गच्छेमि । (ख) (इति निष्क्रान्ता ।)

**मन्त्री**—(सविचारम् ।) यद्यपि कुटिलप्रकृतयः स्वामिनि निबद्धदृढभक्तयो दुर्जया एव परसैनिकास्तथापि किमसाध्यं बुद्धिविभवस्य । यतः ।

दुर्जाते सुमहत्यपि क्षितिपतेः शालीनतां संत्यज-
ञ्शत्रूञ्जेतुमथेप्सितं घटयितुं शक्नोत्युपायेन यः ।
प्रायो मन्त्रिपदं महोन्नतमतिः प्राप्तुं स एवार्हति
स्वोत्सेकी न तु पण्डितो भुवि जनो वाचा वदन्पौरुषम् ॥ २९ ॥

अत इदानीम् ।

संचिन्तयामि कंचन संप्रति समयोचितं जयोपायम् ।
येनास्माकं श्रेयो भविता सहसा पराजयो द्विषताम् ॥ ३० ॥

(इति ध्यानं नाटयन् ।) आः, चिन्तितोऽयमबाधितोपायः । तथाहि ।

प्रथन्ते यास्तिस्रः प्रबलजडतीक्ष्णाः प्रकृतयो
वशीकारे तासां जगति सदुपायाः परमर्मा ।
क्रमात्स्नेहास्ते ते कुशलमतिभिः सद्भिरुदिता-
स्तथा तीक्ष्णोपाया नियतमुपचाराश्च मधुराः ॥ ३१ ॥

---

(क) कथं ज्ञातास्म्यमात्येन । तत्कथयामि विश्रब्धं यथार्थं शृणोत्वमात्यः । अहं खलु देव्या बुद्धेः सहचरी राज्ञा जीवेन तापसीवेषं कृत्वा रात्रौ पुरं प्रविश्य यक्ष्मराजस्य विचारणीयो व्यवसाय इति प्रेषितास्मि । तथैव विचार्यार्य प्रतारयितुं प्रच्छन्नेव स्थितास्मि ।

(ख) त्वमेव गत्वा इमं वृत्तान्तं भण । राज्ञो निवेदनादपि तव पुरतः कार्यनिवेदनमभ्यर्हितम् । अहं पुनर्दुर्जनसंसर्गकृतं कलुषं प्रक्षालयितुं महानदीं स्नातुं गच्छामि ।

तस्मात्प्रबलजडतीक्ष्णप्रकृतीनां वातपित्तकफानां मध्ये प्रबलो यो वातः स तु बहुविधस्नेहविशेषप्रयोगेण वशीकार्यः । तदनुगतस्य पित्तस्य मधुरोपचारेणैव सुकरो वशीकारः । उभयविरुद्धो जडो यः कफस्तत्रेतरोपायस्याप्रसरात्तीक्ष्णप्रयोगेणैव स वशमानेतव्यः । एवं च तत्तत्समुचितैरुपायैः सर्वामयनिदानेषु वातादिषु स्वाधीनेषु तज्जनितानामितरेषामुन्मेष एव दूरतोऽपास्तः । किं च ।

सर्वस्मिन्विषये निरङ्कुशतया यद्दुर्निरोधं मनः
प्रायो वायुरिव प्रकृष्टबलवत्सर्वात्मना चञ्चलम् ।
तत्कामादिभिरुद्धतैरुपहतं संप्रेरितैर्यक्ष्मणा
तत्सौहार्दमुपेत्य यद्यपि पुनर्नः प्रातिकूल्यं चरेत् ॥ ३२ ॥

अतस्तदपि महाधिकारेण वशीकृत्य महति व्यापारे विनियोज्य तैरपि दुर्भेदं करिष्यामि । यद्यपि मद्विरोधिचेष्टोऽज्ञानशर्मा मदसंनिधाने राज्ञ उपजापेन कार्यभेदमेव जनयेत् तथापि जाग्रतिः फलकमैव (?) ।

सर्वानर्थनिदाने यक्ष्मणि तस्मिन्समूलमेव मया ।
उन्मूलिते ततो नः कर्तव्यं नावशिष्यते किंचित् ॥ ३३ ॥

तथाकर्तुमेव तावद्राजनिकटमेव गच्छामि । (इति कतिचित्पदानि गत्वा पुरो विलोक्य ।) इदं तद्राजभवनम् । यावत्प्रविशामि । कः कोऽत्र भोः ।

(प्रविश्य ।)

**प्रतीहारः**—मन्त्रिन्, किमाज्ञापयसि ।

**मन्त्री**—प्राण दौवारिक, संप्राप्तं मां राज्ञे निवेदय ।

**प्राणः**—तथा । (इत्यन्तःपुरं प्रविष्टः ।)

**मन्त्री**—(परितो विलोक्य ।) इह खलु

संमृज्य शोधिनीभिश्चत्वरवेदीतलेषु रम्येषु ।
रचयन्ति रङ्गवल्लीरन्तःपुरचारिका एताः ॥ ३४ ॥

गृह्णन्वेत्रलतां वसत्यवसरापेक्षो जरत्कञ्चुकी
राजा मामवलोकयेदिति समं वत्सेन गौस्तिष्ठति ।

वादित्रध्वनिमण्डलीकृतगरुद्बर्हीं नटत्यङ्गणे
देव त्वं विजयीभवेति गुणयन्नास्ते शुकः पञ्जरे ॥ ३५ ॥
(प्रविश्य।)

**दौवारिकः**—(मन्त्रिणं प्रति।) स्वामिन्, भवन्तं द्रष्टुं बुद्ध्या सह देव्या भद्रासनमधिवसति राजा।

**मन्त्री**—
अतिपरिचयेऽपि राज्ञो बिभेमि सहसोपगन्तुमभ्यर्णम्।
येनाग्नेरिव तेजः स्फुरदस्याराम्निवर्तयति ॥ ३६ ॥ ✓

(विचिन्त्य।) परपक्षं प्रति प्रतिविचारणाय प्रेषितां धारणां प्रतीक्षमाण इव लक्ष्यते। भवतु तदेतदहं वक्ष्यामि।

(ततः प्रविशति बुद्ध्या देव्या सह राजा जीवः।)

**मन्त्री**—(उपसृत्य।) विजयतां महाराजः।

**राजा**—इतो निषीदतु भवान्। (इति मन्त्रिणे आसनं निर्दिशति।)

**मन्त्री**—(आसने उपविश्य स्वगतम्।) एष खलु
गण्डूषोदकशोधितेऽपि वदने ताम्बूलरक्ताधरः
स्नानापोहितचन्दनेऽपि वपुषि प्रोद्दामतत्सौरभः।
निर्णिक्ते सिचये धृतेऽपि कनकाकल्पेन पीताम्बरः
सोऽयं सत्यपि न प्रमाद्यति सदाचारादतिप्राभवे ॥ ३७ ॥

(प्रकाशम्।) महाराजेन प्रहिताया धारणाया मुखात्तत्रत्यः सर्ववृत्तान्तो विदित एव। सा पुनर्दुर्जनसंसर्गदोषपरिहाराय नदीं स्नातुं गता। तया च मयि संक्रमितस्तत्रत्यवृत्तान्तः।

**राजा**—(सोत्कण्ठम्।) कथमिव।

**देवी**—अहं वि अवहिदह्मि। (क)

**मन्त्री**—(स्वगतम्।) इयं हि देवी
किमपि नियमिताग्रैः कुन्तलैः स्निग्धनीलैः
परिलसदपराङ्गा धारयन्ती दुकूलम्।

---

(क) अहमप्यवहितास्मि।

धवलमुपरि भर्तुश्चामरं धूयमानं
विरमयति करेण व्यक्तमाकर्णनाय ॥ ३८ ॥

(प्रकाशम् ।) श्रोतव्यमिदं धारणावचनम् । यक्ष्महतकः पुरान्निष्क्रामणमेवास्माकमिच्छतीति ।

**राजा**—किमत्र प्रतिविधातव्यम् ।

**देवी**—(सोद्वेगम् ।) दाणिं किं कुम्भो । (क)

**मन्त्री**—देवि, मा भैषीः । प्रतिविधानप्रकारोऽपि धारणया विदितः ।

**राजा**—कथमिव ।

**मन्त्री**—(कर्णे) एवमेवम् ।

**राजा**—कथमिदं धारणया निर्धारितम् ।

**मन्त्री**—रसगन्धकप्रयोगमन्तरेण सपरिवारोऽहमजय इति यक्ष्मराजस्य हृदयं विश्वसनीयया तापसीवेषया धारणया गृहीतम् ।

**देवी**—(साश्वासम् ।) जइ एव्वं ता कहं अह्मेहिं रसगन्धआ संपादणिज्जेत्ति । (ख)

**राजा**—

शंभोर्वीर्यं रसो नाम शर्वाण्या नाम गन्धकः ।
ताभ्यामेव प्रसन्नाभ्यां तौ ग्राह्याविति मे मतिः ॥ ३९ ॥

**देवी**—केण उण उवाएण ताणं पसादो संपादणिज्जो । (ग)

**मन्त्री**—उपासनयैव ।

**राजा**—युक्तमुक्तं भवता । श्रूयते हि पुरा मृकण्डुरुमापतिमुपास्य पुत्रं लेभे । तत्पुत्रोऽपि तदुपासनया मृत्युमुखान्मुक्तो दीर्घमायुरलभतेति ।

**मन्त्री**—सम्यगवगतं महाराजेन । यतः खल्वेष

पादाघातत्रुटितयमुनाभ्रान्तबाह्वन्तरोद्य-
द्रक्तस्रोतः समुपशमिताशेषशोकाश्रयाशम् ।

---

(क) इदानीं किं कुर्मः ।

(ख) यद्येवं तत्कथमस्माकं रसगन्धकौ संपादनीयौ इति ।

(ग) केन पुनरुपायेन तयोः प्रसादः संपादनीयः ।

मार्कण्डेयं व्यतनुत यदा सर्वभूतैस्तदादि-
स्तुत्यं मृत्युंजय इति यशः स्फारमीशः प्रपेदे ॥ ४० ॥

**राजा**—पुरा खलु देवदानवैरमृतार्थिभिर्महोरगयोक्त्रपरिवेष्टितविकृष्य-माणमन्दरमन्थानदण्डैर्मथ्यमाने दुग्धसागरे गरलमुद्भटमुत्थितमसहमानेषु भुवनेषु विनष्टप्रायेषु पलायनाभिमुखे चतुर्मुखे विगलितौजसि बिडौजसि भगवानेवैष विषमश्नन् जगदनुचकम्पे। तथाहि।

मेघाक्रान्तदिगन्तदर्शरजनीमूर्छत्तमोमेचकं
तापद्रावितदेवदानवनरं यः कालकूटं गरम्।
जग्ध्वा जम्बिवव बालकस्त्रिभुवनत्राणं ततानाञ्जसा
तस्य द्राघ्महिमा न वाङ्मनसयोः पन्थानमारोहति ॥ ४१ ॥

**मन्त्री**—किमुच्यते महिमेति। श्रूयतां तावत्। त्रिपुरविजयप्रसक्तावसक्त इव स्वयं तदर्थं कतिचित्साधनानि संपाद्य तान्यपि वितथीकृत्य स भगवान्निजमेव महिमानमभिव्यक्तवान्। तथाहि।

सूर्याचन्द्रमसौ रथाङ्गयुगलं सूतो विधाता स्वयं
रथ्याश्वा निगमाश्च यस्य रथमारूढेन भूमीमयम्।
मेरुं धन्वविषक्तवासुकिगुणं कृत्वा शरं चाच्युतं
तिस्रस्तेन पुरः स्मितेन तु परं दग्धाः सुरद्वेषिणाम् ॥ ४२ ॥

**राजा**—एवमपरिमितान्याश्चर्यचरितानि देवस्य।

**देवी**—किं अच्चरिअं। महेसरस्स जह जह जारिसो उपासनं करेदि तह तह तारिसं सो तं तं फलं पावेदि। (क)

**मन्त्री**—एवमेतत्।

**राजा**—एवमनिर्धारणीयनानास्वरूपा भगवतीपरमेतत्। परंतु भगवतो दयारूपैवेयम्। अत एव लोकरक्षणार्था प्रवृत्तिरेतस्याः। श्रूयतां तावत्।

---

(क) किमाश्चर्यम्। महेश्वरस्य यथा यथा यादृश उपासनं करोति तथा तथा तादृशं स तं तं फलं प्राप्नोति।

भक्तिप्रह्वमहेन्द्रमुख्यमखभुक्प्रारब्धभूरिस्तव-
प्रादुर्भावितनिर्भरप्रमदया कारुण्यभाजा यया ।
निद्राभङ्गमवापितेन हरिणा दीप्तौजसा घातया-
मासाते मधुकैटभावतिबलौ सा केन वा वर्ण्यते ॥ ४३ ॥

**मन्त्री**—राजन्, तथ्यमेवाह भवान् । अस्याः किल भक्तवात्सल्यमनन्यतुल्यं पश्यामि ।

दूरोद्धूतविषाणकोटिघटनाचूर्णीकृताम्भोधरं
प्रेङ्खत्पादचतुष्टयीखुरपुटप्रक्षुण्णपृथ्वीतलम् ।
कल्पान्ताभ्रकठोरकण्ठनिनदत्रस्तत्रिलोकीजनं
विक्रान्तं महिषासुरं युधि पुरा चिच्छेद शूलेन या ॥ ४४ ॥

**देवी**—सा खु परमेसरी बहुविहदेवआसत्तिरूआवअवा पअण्डपरक्कमखण्डिअचण्डमुण्डधुम्मलोअणरत्तबीजप्पहुदिदाणवमण्डला सुणीअदि चण्डिआणामधेएत्ति । (क)

**राजा**—तदपि ज्ञायते । यथा खलु ।

शस्त्रच्छिन्नमुरारिसैन्यपिशितग्रासग्रहप्रीतिम-
त्कङ्कक्रोष्टरि संगरे सुरवधूमुक्तप्रसूने स्थितम् ।
देव्या शुम्भनिशुम्भदानववधप्रक्लिन्नचित्तस्तुव-
द्रुद्रेन्द्राग्निकृतान्तनैर्ऋतजलाधीशानिलश्रीदया ॥ ४५ ॥

**मन्त्री**—राजन्, एवं भक्तवत्सलयोरनादिदंपत्योरुपासनया संपादनीया सिद्धिः । किं च ।

सामर्थ्यसिद्ध्यै रसगन्धकानां संयोजनार्थं सकलौषधीश्च ।
संपादयामोऽथ तदाश्रितस्य सर्वौषधीशस्य विधोः प्रसादात् ॥४६॥

**देवी**—कदमं उण देसं पविसिअ उवासणिज्जा एदे । (ख)

(क) सा खलु परमेश्वरी बहुविधदेवताशक्तिरूपावयवा प्रचण्डपराक्रमखण्डितचण्डमुण्डधूम्रलोचनरक्तबीजप्रभृतिदानवमण्डला श्रूयते चण्डिकानामधेयेति ।

(ख) कतमं पुनर्देशं प्रविश्योपासनीयावेतौ ।

**मन्त्री**—पुण्डरीकपुरं प्रविश्य ।

**देवी**—कहं तत्थ पवेसो । (क)

**मन्त्री**—देवि,

शक्यं तत्खलु पुण्डरीकनगरं गन्तुं मनोद्वारत-
स्तत्रास्ते शिवभक्तिरित्यनुपमा कापि प्रमोदास्पदम् ।
दृष्ट्वा तां प्रथमं तथा परिचयस्तस्या विधेयस्त्वया
चत्वारोऽपि भवन्ति ते करतलं प्राप्ताः पुमर्था यथा ॥ ४७ ॥

**राजा**—(सोत्कण्ठम् ।)

तामद्वैतां स्वरूपेण भक्तिं हृदयरञ्जिनीम् ।
स्वीकृत्याहं भविष्यामि प्राप्ताखिलमनोरथः ॥ ४८ ॥

**देवी**—(सासूयमिव स्वगतम् ।) कहं सव्वपुरुसत्थप्पसवित्तिआ सेत्ति सुणिअ सुदघणाघणगज्जिदो मोरो व्विअ उक्कण्ठिदो अज्जउत्तो । होदु । ता मए वि सह गन्तव्वम् । (प्रकाशम् ।) अज्जउत्त, अहं वि आगमिस्सम् । (ख)

**राजा**—(स्वगतम् ।) कथमनयाप्यागन्तव्यम् । (विचिन्त्य ।) भवतु । (प्रकाशम् ।) अयि भद्रे, भक्तिपराधीनं साम्बमुपास्यावामभिलषितमर्थं साधयावः । (मन्त्रिणं प्रति ।)

राज्यं त्वयि समारोप्य योग्ये सर्वाङ्गसंहितम् ।
देव्या सह शिवं साम्बमुपास्तुं यामि तत्पुरम् ॥ ४९ ॥

**मन्त्री**—यथा रोचते देवस्य ।

(इति निष्क्रान्ताः सर्वे ।)

इति प्रथमोऽङ्कः ।

---

(क) कथं तत्र प्रवेशः ।

(ख) कथं सर्वपुरुषार्थप्रसवित्रिका सेति श्रुत्वा श्रुतघनाघनगर्जितो मयूर इवोत्कण्ठित आर्यपुत्रः । भवतु । तन्मयापि सह गन्तव्यम् । आर्यपुत्र, अहमप्यागमिष्यामि ।

**विदूषकः**—एसो सोएण पलवन्तो विअ दीसइ । (क)

**मन्त्री**—शृणुमस्तर्हि प्रलापमेतस्य । विषूचीमत्सरावप्येनमनुवर्तेते ।

(ततः प्रविशति विषूचीमत्सराभ्यां सहितो यक्ष्मा ।)

**यक्ष्मा**—हन्त कथं तादृशानामपि मत्सैन्यानामीदृशीयं दुरवस्था । आश्चर्यमाश्चर्यम् ।

जीवस्य ध्वजिनीचराननतिबलाञ्शक्नोति कः शासितुं
दुर्वारैर्युधि पातितानि मम यैः सर्वाणि सैन्यानि च ।
पाण्डुर्मे सचिवः परैरवधि वा भीतः पलायिष्ट वा
नो जाने मम जीवतो बत हताः पुत्रास्तथा बान्धवाः ॥ ९१ ॥

(सशोकावेगम् ।)

भो भोः सुताः क्व नु गताः स्थ विना भवद्भि-
र्जीर्णाटवीव जगती परिदृश्यते मे ।
आक्रम्यते च तमसा हरिदन्तरालं
शोकाग्निसंवलितमुत्तपते वपुश्च ॥ ९२ ॥

(इति मूर्छति ।)

**मत्सरः**—समाश्वसिहि समाश्वसिहि ।

**यक्ष्मा**—(समाश्वस्य ।)

वत्सा हे वदनाम्बुजानि मुदितो द्रक्ष्यामि केषामहं
केषां माक्षिकमाक्षिपन्ति वचनान्याकर्णयिष्ये मुदा ।
मर्त्यानां तनुषु प्रविष्टमचिरान्मां वर्धयिष्यन्ति के
यूयं यत्समरे परैरतिबलैर्नामावशेषीकृताः ॥ ९३ ॥

**कालः**—

पुत्रप्रविलयाद्दुःखं न सोढुं शक्यते जनैः ।
वसिष्ठोऽपि महान्येन ववाञ्छ पतनं भृगोः ॥ ९४ ॥

तदिमं पुत्रशोकसंतप्तं यक्ष्माणमवेक्षितुं न शक्नोमि ।

---

(क) एष शोकेन प्रलपन्निव दृश्यते ।

**कर्म**—अहमप्येवमेव ।

(इत्युभौ निष्क्रामतः ।)

**मत्सरः**—

देवालं शोकेन द्विषि जीवति न खलु धर्मोऽयम् ।
यावच्छक्ति ततोऽरीन्हत्वा शोचन्ति नैव तान्वीराः ॥ ९९ ॥

अत इदानीं पुनरानीय परिभवमरिहतानामस्मदीयानामानृण्यमृच्छतु भवान् ।

**विषूची**—

दाणिं खु एव दिट्ठा राअकुमारा कहिं गदा तुह्मे ।
ढज्जइ हिअअं सोओ अग्गी विअ सुक्कतिणजालम् ॥ ९६ ॥ (क)

**यक्ष्मा**—

गण्डद्वयेऽपि गलितैर्नयनाम्बुपूरै-
रामृष्टपत्रलतमाकुलकेशपाशम् ।
पाणिद्वयप्रहतपाटलबाहुमध्य-
मस्या वपुर्मम शुचं द्विगुणीकरोति ॥ ९७ ॥

**मत्सरः**—राजन्, धैर्यमवलम्ब्यताम् । कृतं शोकेन । संप्रति हि कतिपये देवपादमूलोपजीविनः सैन्याः केनापि दुरपनेयप्रवृत्तयः ।

**यक्ष्मा**—ततः किम् ।

**मत्सरः**—ततश्च तत्प्रयोगेण कुण्ठितशक्तिर्भविष्यति विज्ञानमन्त्रिहतकः । तथा च वैरनिर्यातनं कर्तुमुचितमिति प्रतिभाति ।

**यक्ष्मा**—(सविमर्शम् ।) अवन्ध्योऽयं प्रयत्नः । तदर्थमेव शत्रून्मूलनाय गच्छामः । (इति विषुचीमत्सराभ्यां सह निष्क्रान्तः ।)

**मन्त्री**—मत्सरेण कर्णेऽसज्जयार्थं किमप्युपदिष्टो यक्ष्मा निष्क्रान्तः

---

(क) इदानीं खल्वेव दृष्टा राजकुमाराः कुत्र गता यूयम् ।
दहति हृदयं शोकोऽग्निरिव शुष्कतृणजालम् ॥

तद्वयमपि तदिङ्गितानुमितं पर्यालोच्य तत्प्रतिविधानाय व्याप्रियमाणा इष्टं साधयामः ।

(इति निष्क्रान्ताः सर्वे ।)

---

सप्तमोऽङ्कः ।

(ततः प्रविशति जीवराजो विज्ञानमन्त्री च )

**जीवराजः**—(सहर्षम् ।)

मन्त्रिस्त्वदीयमतिकौशलनौबलेन
तीर्णो रणाम्बुधिरभूदतिदुस्तरोऽपि ।
यस्मिन्भयंकरगतिर्ज्वरपाण्डुमुख्यो
रोगव्रजः किल तिमिंगिलतामयासीत् ॥ १ ॥

किं ब्रवीमि संकुलयुद्धेऽस्मदीयानां तदीयेषु प्रवृत्तमोजायितम् ।

एकत्र मण्डभेदो गुटिकाभेदः परत्र मन्दाग्निम् ।
निखिलामयजननकरं निजपानं प्रथममिदमहमदर्शम् ॥ २ ॥

अथ गुलूच्यादिपञ्चभद्रकषायं निकषा यन्नवं (?) तमवलोक्य पलायन्त पित्तसमीरज्वराः । तदनन्तरं जगदन्तरप्रसिद्धः स्वयमनश्वरसारो यक्ष्मपरिक्षपणदक्षिणः सन्नपि संननाह स्वयं त्रैलोक्यचिन्तामणिर्विनिपाताय संनिपातेन साकमष्टविधानामपि ज्वराणाम् ।

स्थावरजङ्गमगरलं ज्वरमामोत्थं व्रणोपजातं च ।
आरोग्यपूर्वचिन्तामणिरपि निघ्नन्मया रणे दृष्टः ॥ ३ ॥

ततः सर्वज्वरानपि निगृहीतवन्तं ज्वराङ्कुशमुत्तरेण गुल्मार्शः संग्रहिणीर्विपाटितवतो ग्रहिणीकपाटस्य पूर्वभागे

या पञ्चामृतपर्पटी ग्रहिणिकायक्ष्मातिसारज्वर-
स्त्रीरुक्पाण्डुगदाम्लपित्तगदरुक्क्षुन्मान्द्यविध्वंसिनी ।
तामद्राक्षमहं रणे स्त्रियमपि व्यातन्वतीं पौरुषं
चामुण्डामिव चण्डमुण्डसमरप्रक्रान्तदोर्विक्रमाम् ॥ ४ ॥

पश्चाद्भागे तस्याः

अरुचिप्लीहवमिज्वरकासार्शःश्वासशूलानाम् ।
सूक्ष्मैलादिमचूर्णं निरवर्णयमाशु युधि निहन्तारम् ॥ ५ ॥

तदनु जलजाक्ष इव दनुजलोकस्य सिद्धवसन्तः शुक्रदोषस्य गोक्षुरकादिचूर्णमिश्रितपयःपानविधिः पुंस्त्वदोषस्य त्रिविक्रमरसो मूत्रकृच्छ्राश्मर्योर्विष्यन्दनतैलयोगो भगंदरस्य लघुलङ्केश्वरः कुष्ठस्य नित्योदितरसो मूलानां विद्याधररसो गुल्मानां त्रिनेत्ररसः शूलानां महावह्निरस उदररोगाणां गिरिकर्ण्यादिविधिर्गुञ्जातैललेपश्च शिरोरोगस्य चन्द्रोदयवर्तिश्च चक्षूरोगस्य सौवीरादिपक्वतैलनिषेकः कर्णरोगाणां सिद्धार्थत्रिफलाद्यौषधयोगविशेषपानविधिः कृत्योन्मादविषज्वरसर्वग्रहाणां मधुसर्पिर्युतचूर्णविशेषलेहनविधिः पाण्डुहृद्रोगभगंदरशोफकुष्ठोदरार्शसां मेहकुञ्जरकेसरीप्रमेहाणां च विजयमहोत्सवेन समुत्सारितसर्वरोगखेदाः समरजनैरप्यस्तूयन्त । ततः किमप्यवशिष्यते कार्यमस्माकम् ।

**मन्त्री**—स्वामिन्, श्रूयताम् ।

जन्यार्णवोऽरिजनितः सुमहानिदानीं
तीर्णोऽप्यतीर्ण इति निश्चिनुते मनो मे ।
यन्मत्सरेण रणभुव्युपदिष्टकार्यः
कर्णे स तत्परमितो विदधीत यक्ष्मा ॥ ६ ॥

**राजा**—विज्ञानसचिव यथार्थनामधेय, मत्सरेण यक्ष्मणः कर्णे किमुक्तं भवेत् । यक्ष्मा च तदाकर्ण्य किं विदध्यात् । तद्विधानेन चास्माकमुत्तिष्ठेत कीदृशमत्याहितम् ।

**मन्त्री**—(क्षणं विचिन्त्य ।) किमन्यद्ब्रवीमि । केचिदसाध्यरोगा यक्ष्माणमुपासते तैरस्मान्बाधितुं यक्ष्माणं प्रति मत्सरेण संकेतितमिति शङ्के ।

**राजा**—(सवितर्कम् ।) एवमेवास्मासु यक्ष्मा यदि वक्रं विधिमुपक्रंस्यते तत्र कमुपायं पश्यति भवान् ।

**मन्त्री**—'भक्ताय भवते कदापि मया दर्शयिष्यते साम्बः' इति भगवत्या तुभ्यं जातुचिदावेदितं भक्त्या इति कदाचित्कथान्तरे देवेनैव मां

प्रति प्रागुक्तम् । तदिदानीं तामेव भगवतीं भक्ति हृदि दृढमवलम्ब्य भगवद्दर्शनार्थं संनिधानानुग्रहः प्रार्थ्यताम् । तत एवासाध्यरोगाभिभवः सुलभः प्रतिभाति ।

**राजा**—यद्येवमनुध्याय विध्यादिविबुधकृतनिषेवणं करोमि मनसा शरणं शंकरम् । (इत्यनुध्यायति ।)

**मन्त्री**—आश्चर्यमाश्चर्यम् । भक्तवत्सला भगवतश्चन्द्रचूडस्य परां कोटिमवलम्बते । यदनुध्यानमात्रमनुतिष्ठति स्वामिनि तदाविर्भावसूचनमेतदालक्ष्यते । यत्किल

शैलस्थूलशिरोभिरुग्रभुजगप्रायश्रवोभूषणै-
जानुस्पर्शिबृहत्पिचण्डचटुलैस्तालद्रुदीर्घाङ्घ्रिभिः ।
प्रावृण्नैशतमिस्त्रनीलतनुभिर्भस्मत्रिपुण्ड्राङ्कितैः
शूलोद्धासिभुजैः समावृतमिदं भूतैरभूद्भूतलम् ॥ ७ ॥

**राजा**—(ध्यानाद्विरम्य कर्णं दत्त्वा ।) अहो भाग्यप्रकर्षो जीवलोकस्य । यतः ।

'जय विश्वपते जयेन्दुमौले जय शंभो जय शंकरेति शंसन् ।
परितः श्रुतिगोचरो जनानां कलुषं लुम्पति काहलीनिनादः ॥ ८ ॥

**मन्त्री**—(सहर्षम् ।) राजन्, फलितस्ते मनोरथः । पश्य ।

आरूढः स्फाटिकक्ष्माधरनिभवृषभं सार्धमद्रीन्द्रपुत्र्या
वीतावष्टम्भकुम्भोदरकरयुगलोदस्तमुक्तातपत्रः ।
गायद्गन्धर्वनृत्यत्सुरगणिकपुरोभागघोषन्मृदङ्गो
गङ्गाभृत्युत्तमाङ्गे शशिशकलधरः शंकरः संनिधत्ते ॥ ९ ॥

अपि च ।

मौलिन्यस्ताञ्जलीनां दरमुकुलितदृग्भिर्यदानन्दबाष्प-
क्लिद्यद्गण्डस्थलानामविरलपुलकालंकृतस्वाकृतीनाम् ।
वेदान्तप्रायभूरिस्तुतिमुखरमुखाम्भोजभाजामृषीणां
पङ्क्त्या पाश्चात्यभागो झटिति निबिडितो दृश्यतामस्य शंभोः ॥ १० ॥

**राजा**—मन्त्रिन्, इतः परं प्रणिपातादिना भगवन्तं प्रसाद्य स्वाभीष्टमर्थं प्रार्थयिष्ये ।

**मन्त्री**—अनितरसाधारणमेतस्य भक्ताभीप्सितप्रदानचातुर्यम् । यः प्रसादितवते पार्थाय पाशुपतमस्त्रं प्रतिपादितवान् । येन च निखिलक्षत्रियकुलजिघृक्षवे भार्गवाय प्रसादीकृतः परशुः ।

**राजा**—उपपन्नमिदम् । एवमपरिमितानि महान्त्याश्चर्यचरितानि देवस्य । यच्च कपिलभस्मीकृतप्रपितामहसंघसमुत्तारणकृतप्रयत्नभगीरथप्रसादितायाः सुरापगाया भुवमुत्तरन्त्या गर्वभञ्जनं नाम मृत्युंजयस्य चरितं तदपि परमाद्भुतमेव ।

**मन्त्री**—जगत्प्रसिद्धमेवेदम् । तथाहि ।

वेगाकृष्टोडुचक्रानुकरणनिपुणश्वेतडिण्डीरखण्ड-
श्लिष्टोर्मीनिर्मितोर्वीवलयविलयनाशङ्कसातङ्कदेवा ।
विभ्रम्याकाशगङ्गा विधिभुवनभुवः सर्वदुर्वारगर्वा
निर्विण्णा धूर्जटीयोद्भटघटितजटाजूटगर्भे निलिल्ये ॥ ११ ॥

किं च । अध्वरविधावपराधिनो दक्षप्रजापतेः शिक्षणावसरे रोषसंधुक्षितेन नीललोहितेन विसृष्टः स्वांशभूतः प्रभूतकोपविधूतविनयमुद्रो वीरभद्र एव किं न कृतवान् । तथाहि ।

शूलाग्रक्षतदक्षकण्ठरुधिरैः शोणे रणप्राङ्गणे
कीर्णो दन्तगणश्चपेटदलितादर्कस्य वक्त्रान्तरात् ।
वीरश्रीकरपीडनोत्सवविधावेतस्य वैश्वानर-
प्रक्षिप्तोज्ज्वललाजविभ्रमकरो नालोकि लोकेन किम् ॥ १२ ॥

**राजा**—किमिति वर्ण्यतामयमाश्चर्यचर्यो भगवान् ।

क्रोधारूढभ्रुकुटिरलिके क्रूरखड्गप्रहार-
श्छिन्नग्रीवत्रिदशनिकरच्छन्नसङ्ग्रामभूमिः ।
शक्रश्रीशद्रुहिणशरणालाभविद्राणविद्या-
दानोन्निद्रः प्रणतजनताभद्रदो वीरभद्रः ॥ १३ ॥

कः पुनरस्य स्वरूपं तत्त्वतः शक्नोत्यवधारयितुं यदन्तर्वाणयः सर्वेऽपि स्वच्छन्दानुरोधात्कलयन्ति स्वरूपमेतस्य । तथाहि—

कर्तारं कतिचित्किलानुमिमते कार्यार्थमुर्व्यादिभिः
केऽप्याहुः पुरुषस्य यस्य पुरतः सृज्यं प्रकृत्या जगत् ।
क्लेशैः कर्मभिराशयैश्च सकलैरस्पृष्टरूपोऽखिल-
प्रज्ञोऽनादिगुरुः स ईश्वर इति व्याख्यन्ति केचित्तु यम् ॥१४॥

अपि च ।

श्रुतमिति निगमान्तेष्वेकमेवाद्वितीयं
निरवधि परिपूर्णं ब्रह्म सच्चित्सुखात्म ।
विलसति किल यस्मिन्विश्वमेतत्तमिस्रे
स्रजि फणिवदबोधादित्थमाहुः किलान्ये ॥ १५ ॥

**मन्त्री**—तत्तादृशमेनमवाङ्मनसगोचरमहिमानं पङ्कजासनपाकशासनप्रभृतयो देवाः प्रणमन्ति भगवन्तम् । अतः सेवावसरं प्रतिपालय क्षणमात्रम् ।

**राजा**—सम्यङ्निरूपितममात्येन ।

नमदमरसहस्रमौलिमालापरिगलितैर्भुवि पारिजातपुष्पैः ।
अलिकुलमनवाप्तदिव्यगन्धग्रहणकुतूहलि कृष्यते समन्तात् ॥१६॥

**मन्त्री**—अवसरोऽयमखिलसुरासुरगुरोः सरोरुहाकरसंवेशविद्यादेशिककलाशेखरस्य सेवनाय देवस्य । अत एव

संभ्रान्तनन्दिकरघूर्णितवेत्रपात-
भीतापगत्वरगणव्रजवर्जितेन ।
एतेन कीर्णकुसुमेन पथा महेशं
सेवस्व भक्तिमदुर्लभसंनिधानम् ॥ १७ ॥

(ततः प्रविशति यथानिर्दिष्टः परमेश्वर्या सह परमेश्वरः ।)

**परमेश्वरः**—अयि गिरीन्द्रसुते,

अनितरसाधारणया भक्त्या जीवस्य मामनुसरतः ।
सपदि मयास्य पुरस्तत्संनिहितं सपरिवारेण ॥ १८ ॥

**देवी**—देव, तुरिअं तुह आगमणं एव्व दंसेदि अणण्णतुल्लं भत्तिमत्तणम् । (क)

---

(क) देव, त्वरितं तवागमनमेव दर्शयत्यनन्यतुल्यं भक्तिमत्त्वम् ।

**राजा**—(मन्त्रिणा सह त्वरितमुपसृत्य ।)

विधिहरिविषमेक्षणात्मकः सन्सृजति बिभर्ति निहन्ति यो जगन्ति ।
तदहममलमेकमेव सच्चित्सुखवपुषं परमेश्वरं नतोऽस्मि ॥ १९ ॥

(इति प्रणमति ।)

**भगवान्**—वत्स, मन्त्रिणा सममभिमतेन युज्यस्व ।

**जीवः**—(मन्त्रिणा सहोत्तिष्ठन् । शिरस्यञ्जलिं बद्ध्वा ।)

जय जय जगदीश देवासुरावध्यतादर्पवेगोद्धृतत्वत्पदाङ्गुष्ठनिष्पीडनस्तब्धकैलासमूलात्तदोर्विंशतिप्रस्तुतस्तोत्रपुष्यद्दयारक्षितोन्मुक्तलङ्कापते निष्प्रपञ्चाकृते

जननमरणलाभपौनःपुनोदीततद्भञ्जनारब्धघोरव्रतप्रीणितत्वक्कठोरश्रवःप्रार्थनाजातकोपोत्थशापामिषाशीभवत्तापसत्राणकृद्रामरूपग्रह स्वेषु सानुग्रह ।

अनुपमितगृहीततारुण्यलक्ष्मीनिरीक्षोन्मिषद्दारुकारण्यनारीव्रतभ्रंशकुप्यन्मुनीन्द्राभिचारोत्थितं तुङ्गनादं कुरङ्गं ज्वलज्ज्वालमग्निं कराभ्यां वहन्दृश्यसे सद्भिरामृश्यसे

कलशभवमहर्षिवातापिनिर्वापणादक्षिणोर्वीभरापादनाविन्ध्यसंस्तम्भनासिन्धुनाथाम्बुनिःशेषनिष्पानशक्तिप्रदायिस्वपादाम्बुजध्यानमाहात्म्य शंभो नमस्ते नमस्ते ॥ २० ॥

पुनः

प्रसूनशरदाहिने प्रबलकालकूटाशिने
　कृतान्तपरिपन्थिने त्रिपुरगर्वनिर्वासिने ।
जटापटलयन्त्रितामरतरङ्गिणीस्रोतसे
　प्रपन्नभयहारिणे प्रमथनाथ तुभ्यं नमः ॥ २१ ॥

निष्क्रियस्यापि देवस्य जगत्सृष्ट्यादिकर्मणि ।
प्रवृत्तिं कुर्वतीं देवीं प्रपद्ये भक्तवत्सलाम् ॥ २२ ॥

**देवी**—णाह, इमस्स मणोरहं पुच्छिअ झत्ति तं णिवत्तेहि ।(क)

---

(क) नाथ, अस्य मनोरथं पृष्ट्वा झटिति तं निर्वर्तय ।

**भगवान्**—प्रिये, किमत्र प्रष्टव्यम्। विदितमेव। यक्ष्मराजः कैश्चिदसाध्यरोगैः सहानुगतो विकुर्वाणो निर्मूलं छेत्तव्य इत्येतस्य मनोरथ इति तत एतस्मै योगसिद्धिमुपदिश्य निर्जितनिखिलरोगं ब्रह्मरन्ध्रस्थितचन्द्रमण्डलनिःष्यन्दमानामृताप्लुतशरीरं निजानन्दानुभवतुच्छीकृताखिलप्राकृतसुखान्तरं सफलमनोरथमेनं कृतार्थयिष्यामि।

**देवी**—(सहर्षम्।) सरिसं खु एदं तुम्हकेरस्स भत्तवच्छलस्स। (क)

**भगवान्**—वत्स जीव, योगसिद्धिमुपदिशामि ते।

**जीवः**—भगवन्, को नाम योगः कीदृशी वा तस्य सिद्धिः।

**भगवान्**—वत्स, श्रूयताम्। योगश्चित्तवृत्तिनिरोधः। चित्तं नामान्तःकरणम्। यच्चक्षुरादिकरणद्वारा बहिर्निर्गच्छद्विषयाकारेण परिणमति। यत्तादात्म्यापन्नो द्रष्टापि तद्रूपाकार एव परिभाव्यते। तदुक्तम्—

'ध्यायन्त्यां ध्यायतीवात्मा चलन्त्यां चलतीव च।
बुद्धिस्थे ध्यानचलने कल्प्येते बुद्धिसाक्षिणि॥' इति।

'ध्यायतीव लेलायतीव' इति श्रुतिः। तस्य वृत्तयो नाम कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्याद्याः श्रुतीरिता आन्तराः, बाह्याश्च शब्दस्पर्शादिविषयग्राहिण्यः। सत्त्वरजस्तमोरूपगुणत्रयात्मिकानां च तासां दैवासुरसंपद्रूपत्वेन द्वेधा विभाग उक्तो गीतायाम्—

'अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥'

इत्यादिर्दैवी संपत्। 'दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च' इत्यादिरासुरी संपत्। तत्र दैवी संपत्सात्त्विकी। आसुरी तु रजस्तमःप्रधाना। 'दैवी संपद्विमोक्षाय निबन्धायासुरी मता'। तासां च सर्वासामान्तरीणां बाह्यानां च चित्तवृत्तीनां निरोधो नाम स्वविषयेभ्यः प्रतिनिवर्त्य क्वचित्सगुणे निर्गुणे वा वस्तुनि चित्तस्य समवस्थानम्। तच्च दृढतरवैराग्यसत्कारनिरन्तरसेवनाभ्यां सबलेन लभ्यते। तदुक्तम्—

---

(क) सदृशं खल्वेतद्युष्मादृशस्य भक्तवत्सलस्य।

'असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥' इति ।

एतादृशस्य योगस्य सिद्धिर्नाम ध्येयवस्तुसाक्षात्काररूपावस्थितिः ।

**मन्त्री**—भगवन्,

एवंभूताः क इव घटते चित्तवृत्तीर्निरोद्धुं
वैराग्येणाभ्यसनविधिना स्याच्चिरात्तन्निरोधः ।
जेयः शीघ्रं रिपुरपरथा न स्थितिर्नः पुरेऽतो
योगे सिद्धिर्भवति च यथानुग्रहस्ते तथास्तु ॥ २३ ॥

**जीवः**—भगवन्,

स्मृतिस्ते सकलाभीष्टं दत्ते किमुत दर्शनम् ।
तत्प्राप्तममितैः पुण्यैः सद्यः सिद्धिं ददातु मे ॥ २४ ॥

**देवी**—(सदयम् ।) देव, संकप्पादो जेव्व से जोअसिद्धी होदु त्ति अणुगेह्णीअदु एसो । (क)

**भगवान्**—वत्स, देव्यैवमनुगृहीतोऽसि । संकल्पादेव ते योगसिद्धिर्भवतु ।

**मन्त्री**—राजन्, भगवत्या भगवता च संकल्पादेवाखिलयोगसिद्धिरनुगृहीता । तत्सर्वथा कृतार्थाः स्मः ।

**राजा**—(सप्रणामम् ।) अनुगृहीतैवेयम् । यतः ।

या प्रत्यक्षपदार्थमात्रविषया सा योगसंस्कारतः
संस्कारान्प्रतिबध्नतीतरकृतान्धीः कापि मे जृम्भते ।
सूक्ष्मं यत्तु विदूरमव्यवहितं सर्वान्विशेषान्स्फुटं
पश्याम्येष यथावदद्य परमार्थोद्भूतया प्रज्ञया ॥ २५ ॥

आश्चर्योऽयं भगवत्प्रसादमहिमा ।

**भगवान्**—देवि, एवं संप्रज्ञातसमाधिरेतस्य प्रादुर्भूतः, य एवमालम्बनामनुभवति ऋतंभरां नाम प्रज्ञाम् । अतः परं निर्बीजयोगसंज्ञमसंप्रज्ञातसमाधिमस्यानुगृह्णामि ।

---

(क) देव, संकल्पादेवास्य योगसिद्धिर्भवत्वित्यनुगृह्यतामेषः ।

**देवी**—अणुगेह्णीअदु अप्पणिव्विसेसो एसो । (क)

**जीवः**—(सहर्षोल्लासरोमाञ्चम् ।) आश्चर्यमाश्चर्यम् ।

भगवन्करुणासमित्समिद्धे दृढनिर्बीजसमाधियोगवह्नौ ।
प्रविलापितसर्वचित्तवृत्तिः परमानन्दघनोऽस्मि नित्यतृप्तः ॥ २६ ॥

**भगवान्**—देवि, झटिति विघटिताखिलपराग्वृत्तिः प्रत्यगात्मैक्यानुभवरूपोऽसंप्रज्ञातसमाधिराविर्भूतो वत्सस्य । यत एवमनुभूतमर्थमनुवदति ।

**देवी**—देव, किदत्थो खु एसो जो एवंविधस्स देवाणुग्गहस्स भाअणं जादो । (ख)

**भगवान्**—संप्रत्येनं व्युत्थाप्य प्रकृतकार्यप्रवणं करोमि । (जीवं प्रति ।) वत्स, अन्यदपि किंचिदनुशासनीयोऽसि ।

**जीवः**—(व्युत्थाय ।) भगवन्, अवहितोऽस्मि ।

**भगवान्**—

प्राचीनः सचिवः प्रियस्तव सुहृद्यो ज्ञानशर्मा मुनिः
सोऽन्यस्यापि सुदुर्लभः स भवता मान्यः सदाहं यथा ।
श्रेयःसंघटनाय हन्त भवतः सत्यं स एवार्हति
प्रेयस्त्वैहिकमातनोतु सततं विज्ञानशर्मापि ते ॥ २७ ॥

शश्वज्ज्ञानादभिन्नः सन्विज्ञानमपि मानय ।
एवं सति घटेयातां भुक्तिमुक्ती करे तव ॥ २८ ॥

**राजमन्त्रिणौ**—(साष्टाङ्गं प्रणम्योत्थाय ।) अनुगृहीतौ स्वः ।

**देवी**—सुमरणमेत्तसंणिहिदं णाणसम्माणं सचिवं विण्णाणेण समं मुत्तविरोहं करिअ दुवे वि मन्तिणो रण्णो हत्थे समप्पअन्तेण भअवदा बहुलीकिदं भत्तवत्सलत्तणम् । (ग)

---

(क) अनुगृह्यतामात्मनिर्विशेष एषः ।

(ख) देव, कृतार्थः खल्वेष य एवंविधस्य देवानुग्रहस्य भाजनं जातः ।

(ग) स्मरणमात्रसंनिहितं ज्ञानशर्माणं सचिवं विज्ञानेन समं मुक्तविरोधं कृत्वा द्वावपि मन्त्रिणौ राज्ञो हस्ते समर्पयता भगवता बहुलीकृतं भक्तवत्सलत्वम् ।

(नेपथ्ये ।)

जीवे शिवप्रापितयोगसिद्धौ कालो जनान्ध्येन समं तमोवत्।
पापो विषूच्या सह राजयक्ष्मा गदैरसाध्यैः सह नाशमेति ॥ २९ ॥
ईशानस्य निदेशात्प्राप्ता साप्यत्र शांकरी भक्तिः।
चत्वारोऽपि पुमर्थाः पुंभिर्यस्याः प्रसादतो लभ्याः ॥ ३० ॥

**मन्त्री**—(आकर्ण्य ।) प्रियं नः प्रियम्। भगवान्काल एष एवं नः प्रियमाचष्टे।

**राजा**—(सहर्षोल्लासम् ।)

मूर्धन्यमण्डलनिकेतसुधांशुबिम्ब-
निःष्यन्दिशीतलसुधास्रुतिनिर्वृताङ्गः।
मेघावृतिव्यपगमे गगनं यथाच्छं
चैतन्यमावरणवर्जितमस्मि तद्वत् ॥ ३१ ॥

**मन्त्री**—एवमेवायं जीवो राजा भगवतः प्रसादान्नीरोगो नित्यमुक्तो निराबाधो बहुकालं जीयादिति प्रार्थये।

**भगवान्**—तथैवास्तु।

**देवी**—तह होदु। (क)

**राजा**—(सहर्षविस्मयं मन्त्रिणं प्रति ।)

मन्त्रिञ्जन्मैव दोषः प्रथममथ तदप्याधिभिर्व्याधिभिश्चे-
ज्जुष्टं कष्टं बतातः किमधिकमपि तु त्वन्मतेर्वैभवेन।
देव्या भक्त्याः प्रसादात्परमशिवमहं वीक्ष्य कृच्छ्राणि तीर्णः
सर्वाणि द्राक्तदत्यद्भुतमिह शुभदं संविधानं तवेदम् ॥ ३२ ॥

**मन्त्री**—राजन्,

बहुजन्मार्जितैः पुण्यैस्तावकैरेष तोषितः।
सर्वाभीष्टं ददातीशः संविधानं किमत्र मे ॥ ३३ ॥

**भगवान्**—वत्स, किमतः परमन्यत्तव प्रियं कुर्मः।

---

(क) तथा भवतु।

राजा—देवदेव भगवन्, सर्वमपि प्रियमाचरितमेव।

सर्वेऽपि मे प्रशमिता रिपवः पुरेऽभू-
दारोग्यमैक्षिषि भवन्तमुमासहायम्।
योगं ततस्त्वदुपदिष्टमवाप्य जीव-
न्मुक्तोऽस्मि ते करुणया किमतः प्रियं मे॥ ३४॥

तथापीदमस्तु भरतवाक्यम्।

पर्जन्यः समयेऽभिवर्षतु फलं वाञ्छानुरूपं मही
प्रौढामात्यनिरूपिते पथि महीपालाः पदं तन्वताम्।
कर्णालंकृतये भवन्तु विदुषां कान्ताः कवीनां गिरो
भूयादस्य कवेश्चिरायुररुजो भक्तिश्च शैवी दृढा॥ ३५॥

(इति निष्क्रान्ताः सर्वे।)

कृतिरियं श्रीमद्भारद्वाजकुलजलधिकौस्तुभस्य श्रीनरसिंहरायमन्त्रिवरनन्दनस्य श्रीमदानन्दरायमखिनः।

**समाप्तोऽयं ग्रन्थः।**

---

१. अयं जीवानन्दनप्रणेता श्रीमदानन्दरायमखी नृसिंहरायाध्वरिसूनुत्र्यम्बकदीक्षितस्य भ्रातृव्यस्तञ्जौरनगरमहीपतेरेकक्षितिपालवंशतिलकस्य शरभापरपर्यायस्य श्रीशाहराजस्य मन्त्रिप्रवर आसीदित्यादि सर्वं जीवानन्दनस्यैतत्प्रणीतस्यैव विद्यापरिणयनाटकस्य च प्रस्तावभातः प्रतीयते. स च. शरभमहीपतिः खिस्ताब्दीयसप्तदशशतकपूर्वार्धे आसीदिति स एवास्य समयः. एतत्कृतिषु जीवानन्दनं विद्यापरिणयं चेति नाटकद्वयमस्माभिरुपलब्धम्. जीवानन्दने यद्यपि नास्ति कवित्वचमत्कारस्तथापि संविधानकमनुच्छिष्टं चिकित्साशास्त्रानुकूलमिति कृत्वैवास्य काव्यमालायां प्रवेशः. तत्र जयपुरराजगुरुकुलप्रसूतभट्टश्रीकृष्णकुमाराणां संग्रहादेकमेवास्य शुद्धं पुस्तकमुपलब्धम्. चिरं विहितेऽप्यन्वेषणे पुस्तस्तकान्तरालाभात्तस्मादेव पुस्तकादेतन्मुद्रणमकारीति भद्रम्.

| | किं. | ट. ख. |
|---|---|---|
| थकृत घण्टापथटीकेसहित ... ... | २ | ·।· |
| कुमारसंभव काव्य-कालिदासकृत, मल्लिनाथकृत (१-८ सर्ग) व सीतारामकृत (८-१७ सर्ग) संजीविनी टीकेसहित ... ... ... | २ | ·।· |
| कुवलयानंदकारिका-आशाधरकृत, स्वकृत अलंकारदीपिकाटीकेसहित ... ... ... | ·।॥· | ०= |
| कृष्णसहस्रनाम ... ... | ०= | ०॥ |
| गणपतिस्तोत्र ... ... | ०। | ०॥ |
| गणेशाष्टक ... ... | ०। | ०॥ |
| गणेशगीता ( साधी ) | ०=। | ०॥ |
| ,, ( रे. पु.) ... ... | ·।·। | ०॥ |
| गणेशसहस्रनामावलि | ०-॥ | ०॥ |
| गोपालसहस्रनाम, गोपालकवच व गोपालस्तवराज यांसहित | ०=। | ०॥ |
| ,, (रेशमी पुठ्ठा) ... ... | ·।·॥ | ०॥ |
| चतुःश्लोकी भागवत | ०। | ०॥ |
| जैनस्तोत्रसंग्रह (यांत भक्तामरस्तोत्र, कल्याणमंदिरस्तोत्र, एकीभावस्तोत्र, विषापहारस्तोत्र व जिनचतुर्विंशतिका इतकीं स्तोत्रें आहेत.) ... ... | ·।· | ०॥ |
| ज्योतिर्लिंगस्तोत्र व शिवमानसपूजा ... ... | ०॥ | ०॥ |
| तर्ककौमुदी-लौगाक्षिभास्करकृत ... ... | ०= | ०॥ |
| तर्कसंग्रह-अन्नंभट्टकृत, स्वकृत दीपिका टीका, व इंग्रजी भाषांतर | | |

| | किं. | ट. ख. |
|---|---|---|
| यांसहित ... ... | ·।= | ०- |
| तुलसीमाहात्म्य ... | ०॥ | ०॥ |
| त्रिकालसंध्या हिरण्यकेशीया (आपस्तंबी) | ०॥। | ०॥ |
| ,, ऋग्वेदीया | ०॥। | ०॥ |
| दत्तात्रेयसहस्रनामावलि | ०= | ०॥ |
| दत्तात्रेयस्तोत्र ... ... | ०। | ०॥ |
| दमयंतीकथा (नलचंपू)-त्रिविक्रमभट्टकृत, चण्डपालकृत विषमपदप्रकाश टीकेसहित | २ | ·।· |
| दशकुमारचरित-दण्डिकृत, पूर्वपीठिका, उत्तरपीठिका, कवीन्द्रसरस्वतीकृत पदचन्द्रिकाटीका, शिवरामकृत भूषणाटीका, लघुदीपिकाटीका (दशकुमारचरितावर) व पदचन्द्रिकाटीका (पूर्वपीठिकेवर) यांसहित ... ... | १॥ | ०= |
| दुर्गास्तोत्र-नारायणभट्ट पर्वणीकरकृत ... | ०- | ०॥ |
| देवीसहस्रनामावलि | ०-॥ | ०॥ |
| द्वादशस्तोत्र-भगवत्पादाचार्यकृत ... ... | ०- | ०॥ |
| धातुरूपावलि ... ... | ०= | ०॥ |
| श्रीहर्षविरचित नैषधीयचरित-नैषधीयप्रकाशाख्य (नारायणी) टीकेसहित ... ... | ६ | ·॥- |
| नर्मदाष्टकस्तोत्र-शंकराचार्यकृत ... ... | ०। | ०॥ |
| नारदभक्तिसूत्रें ... | ०- | ०॥ |
| नीतिशतक-भर्तृहरिकृत, कृष्णशास्त्री महाबळकृत टीकेसहित ... | ·।· | ०॥ |

| | किं. | ट. ख. |
|---|---|---|
| नीति-शृङ्गार-वैराग्य-शतकें-भर्तृहरिकृत, कृष्णशास्त्री महाबलकृत टीकेसहित ... | ·।।।· | ८- |
| पंचरत्नी गीता (यांत भगवद्गीता, विष्णुसहस्रनाम, भीष्मस्तवराज, अनुस्मृति व गजेंद्रमोक्ष इतकीं प्रकरणें आहेत.) (रे. पु.) (स्थूलाक्षर)... ... ... | १ | ८≡ |
| ,, ,, (मध्यमाक्षर) | ·॥· | ८- |
| ,, ,, (सूक्ष्माक्षर) | ·।≡ | ८- |
| ,, (साधी) ... ... | ·।= | ८- |
| पांडवगीता ... ... | ८- | ८॥ |
| पार्वतीपरिणय नाटक-बाणकृत ... ... | ·।· | ८॥ |
| प्रश्नोत्तरपयोनिधि-बलरामदासमुनिकृत ... | ·।· | ८॥ |
| प्रसन्नराघव नाटक-जयदेवकृत ... ... | ·।।।· | ८- |
| प्रातःस्मरण ... ... | ८- | ८॥ |
| पुरुषोत्तम सहस्रनाम... | ८- | ८॥ |
| बृहत्स्तोत्ररत्नाकरः ... | ·।≡ | ८- |
| ,, (कापडी) | ·॥= | ८- |
| ब्रह्मनामावलि-शंकराचार्यकृत ... ... ... | ८। | ८॥ |
| श्रीमद्भागवत मूळ (रेशमी गुटका) ... | १।।। | ८≡॥ |
| भगवद्गीता (रेशमी पुठ्ठा स्थूलाक्षर) ... ... | ·।।।· | ८=॥ |
| ,, (मध्यमाक्षर रे. पु.) | ·।= | ८॥ |
| ,, ,, (सूक्ष्माक्षर) | ·।- | ८॥ |
| साधी (मध्यमाक्षर) ... | ८≡ | ८॥ |
| ,, बुकसाईज (म. अ.) | ८≡ | ८॥ |
| ,, शंकरानंदसरस्वतीकृत गीतातात्पर्यबोधिनीटीकेसहित ... | ५ | ·।≡ |
| भट्टिकाव्य-भट्टिकृत, जयमङ्गलकृत जयमङ्गला टीकेसहित ... | ३ | ·।· |
| भट्टिकाव्याचा १४ वा व १५ वा सर्ग इंग्रजी टीपांसहित. प्रत्येक सर्गास ... ... ... | ·।· | ८॥ |
| पंडितराज जगन्नाथ विरचित भामिनीविलास काव्य अच्युतराव मोडककृत प्रणयप्रकाश टीकेसहित. ... | १ | ८- |
| मनुस्मृति-कुल्लूकभट्टकृत मन्वर्थमुक्तावलि टीकेसहित... ... ... | २ | ·।· |
| महालक्ष्म्यष्टक ... ... | ८। | ८॥ |
| महावीरचरितनाटक-भवभूतिकृत, वीरराघवकृत टीकेसहित ... | १॥ | ८= |
| मालतीमाधव नाटक-भवभूतिकृत, त्रिपुरारिकृत टीका, नान्यदेवकृत टीका व जगद्धरकृत टीका यांसहित | २ | ८=॥ |
| मालविकाग्निमित्र नाटक-कालिदासकृत, काटयवेमकृत टीकेसहित | ·॥· | ८- |
| मालविकाग्निमित्र नाटक-इंग्रजी टीपांसहित ... ... ... | ·।।।· | ८- |
| विशाखदत्त विरचित मुद्राराक्षस नाटक धुंडिराजकृत टीकेसहित | १।।।= | ·।· |
| मेघदूत काव्य-कालिदासकृत, मल्लिनाथकृत संजीवनी टीकेसहित | ·।= | ८- |

**KÁVYAMÂLÂ. 55.**



THE

# ADBHUTADARPAṆA

OF

MAHÂDEVA.

---

EDITED BY

PAṆḌITA S'IVADATTA

**Head Paṇḍit and Superintendent, Sanskṛit Department,**

**Oriental College, Lahore,**

AND

KÂS'ÎNÂTHA PÂṆDURANG PARAB.




PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JÂVAJÎ DÂDÂJÎ'S "NIRNAYA-SÂGARA" PRESS

BOMBAY.

1896.

*Price* 12 *Annas.*

काव्यमाला ५५.

---

श्रीमहादेवकविविरचितं

# अद्भुतदर्पणम् ।

---

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथ-
शर्मणा च संशोधितम् ।

---

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।

१८९६



मूल्यं १२ आणकाः ।

# काव्यमाला।

श्रीमहादेवकविविरचितम्

## अद्भुतदर्पणम्।

प्रथमोऽङ्कः।

श्रेयः श्रियो रसज्ञो ददातु पुरुषोत्तमो भवताम्।
जागर्ति यः पयोधौ तादृशतरुणीजिघृक्षयेव पुनः ॥ १ ॥

अपि च।

अन्यादृशं चमत्कारमात्मानन्दैकसाक्षिणम्।
दर्शयन्तीं प्रतिव्यक्ति देवीं वाचमुपास्महे ॥ २ ॥

---

१. "कौण्डिन्यवंशसंभवो महाकविः श्रीमहादेवो दक्षिणदेशे दक्षिणेन कावेरीतीरमैरावताराधितस्य कामिनीवामभागस्य भगवतो महेशस्य संनिधौ वर्तमाने पलमारनेरीनामनि ग्राम आसीत्. 'औदार्यं रघुपुंगवे तदनुजे चौद्धत्यमत्यद्भुतं सीतायाश्च यथा पतिव्रतगुणो लोकोत्तरो दृश्यते। अस्मिन्नद्भुतदर्पणे कविमहादेवस्य वाङ्निर्मितेऽप्येवं पश्यत दृश्यते यदि गुणो यः कोऽपि वक्राश्रयः ॥ दिक्चक्रं कियदण्डभित्तिभिरिदं नन्वावृतं सर्वतोऽप्यण्डं नाम कियत्त्रिविक्रमपदैराक्रान्तमेव त्रिभिः। तन्निर्यन्त्रणबालकृष्णभगवत्पादप्रसादोन्मिषत्प्राचण्ड्यः कविमण्डलेश्वरयशोगुम्फः क्व वा जृम्भताम् ॥' इत्यनेनैव विरचिताभ्यां पद्याभ्यामस्य **बालकृष्णगुरो**रन्तेवासित्वमवगम्यते. तस्य च **बालकृष्णगुरोः** समानकालीनो नीलकण्ठविजयचम्पूकर्ता **नीलकण्ठदीक्षित** इति श्रीरामभद्रकविविरचिते **जानकीपरिणयनाटके** 'यस्य स्तौति मतिं मनीषिसदसि **श्रीनीलकण्ठाध्वरी** कोण्डाज्योतिषिकश्च यस्य कुरुते संमानमार्यैः समम्। यत्रानुग्रहदृष्टिमर्पयति च **श्रीबालकृष्णो गुरुः** सोऽयं दीव्यति चोक्कनाथमखिनामक्रीतदासः कविः ॥' इत्यनेनावगतम्. तस्मादेषोऽपि नीलकण्ठदीक्षितसमानकालीन एवेति निश्चीयते. तेन तावन्नीलकण्ठविजयनामकचम्पू १६३७ मिते ख्रिस्तसंवत्सरे निरमायीति तद्ग्रन्थादेव ज्ञातमेव." इति

**सुब्रह्मण्यशास्त्री.**

(नान्द्यन्ते)

**सूत्रधारः**—कियच्चिरमुद्धुष्यते नान्दी कुशीलवैः । अथवा आचार इति काममनुष्ठीयतामिदं रङ्गपूजाभिधानं मङ्गलम् । वस्तुतस्तु

आ प्राभाकरयज्वनः स्वयमभिव्यक्तीभवद्ब्रह्मणा-
माचारैश्चरितार्थितश्रुतिगिरामाजानशुद्धात्मनाम् ।
कौण्डिन्यव्यपदेशपूतयशसां यद्ब्राह्मणानां चिरा-
त्संघोऽयं सफलीकरोति नयनं तन्नः परं मङ्गलम् ॥ ३ ॥

(प्रविश्य हृष्टः)

**विदूषकः**—

तुह णन्दी वा बम्हणसेवा वा होदु मङ्गलं किं वि ।
मह उण मङ्गलमेदं जं लद्धा मोदआ इमिणा ॥ ४ ॥ (क)

**सूत्रधारः**—सखे रोमन्थक, अद्य किल लङ्केश्वरनर्मसुहृदो महोदरस्य भूमिका निष्प्रमादमभिनेतव्येति प्रागेव दत्तं ते मोदकपारितोषिकम् ।

**विदूषकः**—कहं अज्ज णच्चिदव्वम् । अह वा ईरिसी एव्व दुज्जीविआ सेलूसोपजीवआणम् । (ख)

**सूत्रधारः**—अयि, मन्यसे किंनिमित्तोऽयमारम्भ इति ।

**विदूषकः**—हुं, किंणिमित्तो त्ति । मह क्खु महाबम्हणस्स मोदओवाअणपुव्वं अङ्गसभाअणं कादुं त्ति । (ग)

**सूत्रधारः**—सत्यमयमेव तस्य तस्य स्वार्थनिमित्तः प्रतिभाति । पश्य ।

दत्तोपायनमोदकं द्विजनुषामग्रार्चनं त्वादृशां
संदर्भे परिशोधनं कवयितुः सत्प्रीणनं मादृशाम् ।

---

(क) तव नान्दी वा ब्राह्मणसेवा वा भवतु मङ्गलं किमपि ।
मम पुनर्मङ्गलमेतद्यल्लब्धा मोदका अनेन ॥

(ख) कथमद्य नर्तितव्यम् । अथवेदृश्येव दुर्जीविका शैलूषोपजीवकानाम् ।

(ग) हुं, किंनिमित्त इति । मम खलु महाब्राह्मणस्य मोदकोपायनपूर्वं रङ्गसभाजनं कर्तुमिति ।

कीर्तिर्नाटकनायकस्य सदसः सद्यः परा निर्वृतिः
कस्य स्वार्थकृते न शंस भुवने नाट्यक्रियारम्भणम् ॥ ९ ॥

**विदूषकः**—होदु एव्वं दाव एदम् । को उण एत्थ बम्हघोसपरिपूरिए जण्णवाडे तुह सङ्गीदअं सुणिस्सदि । तुमं उण कण्डूलचलणो कहं णच्चिदव्वं त्ति परिब्भमन्तो मं खेदेसि । (क)

**सूत्रधारः**—नन्वेत एव महाब्राह्मणाः संततयजमानतया निरूढयजमानशब्दास्तत्रभवतश्चराचरगुरोरैरावताराधितचरणारविन्दस्य भगवतः परमेश्वरस्य परिसंनिधानमुपक्रान्तविविधमहाक्रतूपनिमन्त्रितानामनेकदेशान्तरसमागतानामखिलकलाकलापनिकषाणां महाजनानामादरमतिमहान्तमनुरुन्धानाः समादिशन्ति ।

**विदूषकः**—किं इमादो जण्णवाडादो णडकुसीलवा ओसरन्तु त्ति।(ख)

**सूत्रधारः**—(सस्मितम् ।) नन्वध्वरशोभायै वयमाहूताः ।

**विदूषकः**—होदु । कीरिसो उण आदेसो । (ग)

**सूत्रधारः**—यथा विदित एव हि तत्रभवानसत्कुलगुरोरभिनवसौभरेरवनितलब्रह्मणः प्राभाकरदीक्षित इति सुगृहीतनाम्ना पवित्रितजगत्त्रयस्य महर्षेरवतार इव द्वितीयः कुलभूषणमस्माकं कृष्णसूरिः ।

**विदूषकः**—तदो तदो । (घ)

**सूत्रधारः**—अस्ति तस्य किल सूनुरायुष्मानस्माकं गुर्भरूपो वत्समहादेवः ।

**विदूषकः**—अत्थि । सुणीअदि गोट्ठीसु । (ङ)

---

(क) भवत्वेवं तावदेतत् । कः पुनरत्र ब्रह्मघोषपरिपूरिते यज्ञवाटे तव संगीतकं श्रोष्यति । त्वं पुनः कण्डूलचरणः कथं नर्तितव्यमिति परिभ्रमन्मां खेदयसि ।

(ख) किमस्माद्यज्ञवाटान्नटकुशीलवा अपसरन्त्विति ।

(ग) भवतु । कीदृशः पुनरादेशः ।

(घ) ततस्ततः ।

(ङ) अस्ति । श्रूयते गोष्ठीषु ।

**सूत्रधारः**—स किल बालजनसुलभेन चापलेन कविगणनामिच्छन्नाटकमिति यदेतदभिनवमभिनिर्वर्तितवान्, तदद्य कर्मान्तरेषु युष्माभिः प्रयुज्यमानमार्या यावत्परिशोधयन्तीति ।

**विदूषकः**—णं पुढमं दाव रावणपिअवअस्सस्स महोदरस्स भूमिआ अभिणेदव्वेत्ति णिमन्तअन्तेण तत्तहोदा अब्भुअदप्पणं क्खु णाडअं अभिणेदव्वं त्ति आअक्खिदं होइ । दाणिं उण णिजकुलपुत्तअस्स कइणो णाडअं पओअणिज्जं त्ति जजमाणा आदिसन्ति । कहं एदम् । (क)

**सूत्रधारः**—इदमेव तदद्भुतदर्पणं नाम ।

**विदूषकः**—जुज्जइ जुज्जइ । अह कहं एत्थ एव्व अत्तणा लालणिज्जे वि एदाणं ओधिरिअपक्खवाआ दोसपरिसोहणेसु मज्झत्थदा । (ख)

**सूत्रधारः**—अयि, मा मैवम् ।

आशङ्किते सकृदसत्यपि वाच्यलेशे
स्वस्त्रीसुतेष्वपि जनैः परिशोधनानि ।
शुद्धिप्रकर्षपिशुनान्यनुमन्यमाना
मध्यस्थतापि ममतैव सतां विमृष्टा ॥ ६ ॥

किं च ।

अपि स्वैराचारैः कलुषमितरेषां शमयतः
परश्लाघायत्ता भवति महतः स्वेषु शुचिता ।
अहल्यावैकल्यक्षपणपदरेणोरपि विभोः
प्रमाणं वैदेहीचरितपरिशुद्धौ हुतवहः ॥ ७ ॥

---

(क) ननु प्रथमं तावद्रावणप्रियवयस्यस्य महोदरस्य भूमिकाभिनेतव्येति निमन्त्रयमाणेन तत्रभवताद्भुतदर्पणं खलु नाटकमभिनेतव्यमित्याख्यातं भवति । इदानीं पुनः निजकुलपुत्रकस्य कवेर्नाटकं प्रयोजनीयमिति यजमाना आदिशन्ति । कथमेतत् ।

(ख) युज्यते युज्यते । अथ कथमत्रैवात्मना लालनीयेऽप्येतेषामवधीरितपक्षपाता दोषपरिशोभनेषु मध्यस्थता ।

**विदूषकः**—होदु । आरिअभट्टप्पमुहेहिं पुव्वाआरिएहिं विरइएसु सत्थगन्थसंदब्भेसु सुलहे कम्मन्तरविणोदे एदाणं किं एदेण कव्वबन्धपरिसीलणेण । (क)

**सूत्रधारः**—अविमृश्येदमुदीरितमार्येण ।

वेदो यः स हि शास्त्रमस्य तु पुनस्तत्वार्थमा जैमिने-
　रद्याप्यार्यवचांसि वास्तवदृशा सर्वाण्युपस्कुर्वते ।
तेषां यत्र मुखे रसो हृदि चमत्कारः प्रसादोऽखिले
　तन्मात्रं परिमुच्य वाक्यमितरत्सर्वं तु शास्त्राणि ते ॥ ८ ॥

तदास्तामेतत् । प्रस्तूयतां प्रकृतम् । अपि धृतानि ते पाठ्यानि ।

**विदूषकः**—अह इं । किं दु दाणिं एव्व मोदआणं परिपूरिओ मे पिचण्डिओ । कहं दाणिं एव्व णच्चिदव्वम् । (ख)

**सूत्रधारः**—अयि, मा भैषीः । नन्वत्र रूपके गूढप्रणिधिना हनूमता निवेदितेषु निखिलेषु वैरिमर्मसु तत्क्षणनिबद्धेन सेतुना निस्तारितसागरमखिलमेव वलीमुखबलमधित्यकासु त्रिकूटस्य निबिडितलङ्कापुरगोपुरं निवेशितवत्येव महाराजरामदेवे समन्ततस्तत्कालविजृम्भितानि महाविमर्दसूचकानि निमित्तानि बहुमन्यमानस्य कुमारलक्ष्मणस्य भूमिकैव प्राथमिकी । तद्विश्राम्यतु भवान्यावत्प्रवेशो दशाननस्य । तत्कालप्रयोक्तव्यानि खलु कानिचिदेव केवलवाचिकानि ब्राह्मण इति परिहृत्याङ्गहारं पाठितोऽसि ।

**विदूषकः**—सोत्थि होदे । ता इदो एव्व कावेरीपरिसरे जजमाणाणं अण्णसत्तसालं पविसिअ विस्समामि । (ग)

---

(क) भवतु । आर्यभट्टप्रमुखैः पूर्वाचार्यैर्विरचितेषु शास्त्रग्रन्थसंदर्भेषु सुलभे कर्मान्तरविनोद एतेषां किमेतेन काव्यबन्धपरिशीलनेन ।

(ख) अथ किम् । किंत्विदानीमेव मोदकानां परिपूरितं मे उदरम् । कथमिदानीमेव नर्तितव्यम् ।

(ग) स्वस्ति भवते । तत इत एव कावेरीपरिसरे यजमानानामन्नसत्रशालां प्रविश्य विश्राम्यामि ।

**सूत्रधारः**—अहमप्यनन्तरकरणीयाय सज्जीभवामि ।

(इति निष्क्रान्तौ ।)

**प्रस्तावना ।**

---

(ततः प्रविशति लक्ष्मणः ।)

**लक्ष्मणः**—(सर्वतोऽवलोक्य । साशंसम् ।)

स्वस्त्यद्य सुप्रभातं हन्त निमित्तान्यमूनि दृष्टानि ।
अपि रण इति वा शृणुयां मनसा वा वैरपारमपि यायाम् ॥ ९ ॥

अथवा दूरे तावदेतत् । संधित्सति नाम राजा तारेयमुखात् । किं नु खलु कथयामि ।

तन्नैव स्मृतमाश्रुतं सदसि यद्रक्षःकुलोन्मूलनं
तज्जीर्णं हृदि यद्विभीषणवशे संकल्पिताः सिंहलाः ।
अन्यत्प्रस्तुतमद्य नूतनतया यत्किंचिदार्येण मे
मानी संधिकथां करोति हृदि कस्तद्वैरमूलं स्मरन् ॥ १० ॥

भवतु । निर्वर्तितं हि मे भगवतः सूर्यस्योपस्थानमागस्त्येन मन्त्रेण । यावदार्यमवलोकयामि । (परिक्रम्यावलोक्य च ।) एष निवासतया परिगृहीतस्य महतः सालतरोरधस्तादन्वास्यते जाम्बवता । अस्य हि

मद्वक्त्रेऽपि यदा दधाति न पदं दृष्टिः समग्रं ह्रिया
यद्वैयर्थ्यमिव व्यनक्ति विततश्वासः स्वगात्रेष्वपि ।
मूर्धा शश्वदकाण्डशुष्कहसितैर्यच्चाग्रतः कम्पते
तन्मन्ये परिवर्तते निशिचरन्यक्कारशल्यं हृदि ॥ ११ ॥

भवतु । उपसर्पामि ।

(ततः प्रविशति यथानिर्दिष्टो रामः ।)

**रामः**—(स्वगतम् ।)

न्यक्कारस्य करिष्यते प्रतिकृतिः शत्रोः शिरःकर्तनै-
र्वंशस्योन्मथनेन जातिहननैरन्येन वा केनचित् ।
दृष्टिं कोणयतो मुखं नमयतो धिग्वीरगोष्ठीजुषः
प्राप्तस्यास्य मम प्रमाददनुषो वाच्यस्य का निष्कृतिः ॥ १२ ॥

(नेपथ्ये ।)

ततः परमग्निसंक्रान्तिरादिष्टा ।

**रामः**—किं नाम ।

**जाम्बवान्**—देव, पूर्वेद्युः किल मेघनादेन सकुटुम्बकमेव विभीषण-गृहमग्निसात्क्रियतामित्यादिष्टमिति ब्रुवन्नमात्यसंपातिरिव श्रूयते ।

**रामः**—कष्टम् । अत्याहितं प्रियसुहृदः ।

(ततः प्रविशतः विभीषणामात्यौ ।)

**प्रथमः**—सखे संपाते, ततस्ततः ।

**संपातिः**—सखे अनल, ततश्च दुरात्मनो मेघनादस्य व्यवसितं त्रि-जटामुखादाकर्ण्य सद्य एव देवस्य कुटुम्बकमादाय गूढेन पथा मैनाके नि-वेश्य निवृत्तवानस्मि ।

**अनलः**—साधु संपाते, साधु ।

**संपातिः**—क्व पुनरिदानीं प्रस्थितोऽसि ।

**अनलः**—देव, विभीषणादेशाद्रामदेवान्तिकम् ।

**संपातिः**—तदेहि तावत् । उपसर्पावः ।

(उपसृत्य प्रणमतः ।)

**जाम्बवान्**—भद्र संपाते, दिष्ट्या वर्धसे सफलेन स्वामिकार्याभि-निवेशेन ।

**रामः**—भद्र, किमन्यत्प्रष्टव्यम् । अवैकल्यमेव हि वयस्यविभीषणस्य ।

**उभौ**—देवप्रसादात् ।

**रामः**—दिष्ट्या दिष्ट्या ।

(सर्वे हर्षं नाटयन्ति ।)

**लक्ष्मणः**—(स्वगतम् ।) उपहसामि तावदेतान् । (उपसृत्य ।) आर्य, अभिवादये ।

**रामः**—वत्स, इत आस्यताम् ।

**लक्ष्मणः**—(उपविश्य ।) कोऽयमिदानीमस्थाने हर्षोद्रेकः । महता खलु निमित्तेन भवितव्यम् ।

**जाम्बवान्**—कुमार, बाढम् ।

**लक्ष्मणः**—तर्हि पृच्छामि ।

जीवग्राहमरिः किमद्य ससुतज्ञातिर्गृहीतो रणे

**जाम्बवान्**—कियदेतत्कुमारकोपलेशस्य ।

**लक्ष्मणः**—

क्षिप्ता सागरसंप्लवे हरिवरैरुन्मूल्य लङ्कैव किम् ।

**जाम्बवान्**—इदं तावदिदानीं कर्तव्यम् ।

**लक्ष्मणः**—अहो मे युद्धाधिरोहिणी तृष्णा यदनालोचितप्रस्तावमन्यदन्यत्पृच्छामि । इदं तु कालोचितं हर्षकारणं भविष्यति । यदुत

तारेयोपहृतां कथंचिदपि नः संधिप्रसक्तिं चिरा-

दार्यामोक्षमृते तु राक्षसपतेः संमन्वते मन्त्रिणः ॥ १३ ॥

**जाम्बवान्**—कियदुपहसितं कुमारेण ।

**रामः**—(स्वगतम् ।) हा प्रिये जनकराजनन्दिनि, अथवा अये हृदय, कथं प्रसङ्गादनुस्मृत्यैव तां विक्लवमसि। ननु प्रतिलभ्यतां सीता। अथ करिष्यते यथाकाममुपालम्भः । (प्रकाशम् ।) श्रुतं तावदार्यमिश्रैः संधिर्नाम स पुनरार्यामोक्षमृते नाम । तं च कथंचिदपि राक्षसपतेर्मन्त्रिणः संमन्वते नाम ।

**जाम्बवान्**—अपि च देव, ततश्च नामायमस्माकं हर्षः ।

**अनलः**—नन्वयं देवस्य विभीषणस्य कुटुम्बकवृत्तान्तश्रवणेन—(इत्यर्धोक्ते ।)

**लक्ष्मणः**—भद्र, काममभिनन्दित एव मया कुटुम्बकवृत्तान्तः । किंतु तारेयप्रेषणं प्रत्यस्माकमयमुपोद्धातः ।

**जाम्बवान्**—नन्वसौ देवेन लङ्कामुपमर्दयिष्यता रिपुष्वप्रमादनिवेदकः प्रहितः ।

**लक्ष्मणः**—स्थाने खलु नैकृतिकेष्वपि परेषु महावीरतायाः सदृशमार्येण । जनस्तु संधित्सयेति तत्संभावयति ।

**रामः**—(निश्वस्य ।) अस्तु तावत् । (परितोऽवलोक्य ।) नास्ति खल्वत्र बाह्यो जनः । यतो निःशङ्कमावेद्यते हृदयखेदः ।

परेण भार्या प्रसभं हृतेति सा तस्य गेहे सुचिरं स्थितेति ।
तत्प्राप्तियत्नोऽपि च संधिनेति रामस्य जीवन्मरणान्यमूनि ॥ १४ ॥

**सर्वे**—(कर्णौ पिधाय ।) शान्तं पापं शान्तं पापम् । प्रतिहतममङ्गलं प्रतिहतममङ्गलम् ।

**लक्ष्मणः**—(स्वगतम् ।) कथं यदृच्छाविक्षिप्तेन चेतसा क्षणमिव समुच्छ्वसतो निरन्तराबद्धसंवेगदारुणमामज्जकीलितमजानता मया पुनरपि परिघट्टितं हृदयशल्यमार्यस्य । (प्रकाशम् ।) आर्य, नार्हसि महार्हमात्मानमस्थाने गर्हितुम् ।

**उभौ**—किं नाम व्याहृतं देवपादैः ।

**जाम्बवान्**—भद्रौ, किं नामेति । नन्वेत एव निखिलभुवनपरित्राणमहार्घजीविता महान्तो यद्येवमादिशन्ति ।

**रामः**—सत्यं निखिलभुवनपरित्राणमहार्घमेव जीवितं रामस्य ।

एकस्त्रीपरिरक्षणेऽपि जडतामेतां प्रमादोत्तरां
येन प्रागपि जानतैव विधिना राज्यात्परिभ्रंशितम् ।
संप्राप्तेऽपि पराभवे कुलभुवां प्राचामवाचामपि
व्रीडायै चिरदेहधारणमिदं संमन्यते केवलम् ॥ १५ ॥

**उभौ**—कथमतिवर्तन्ते मन्युसंरब्धानि देवस्य जल्पितानि ।

**जाम्बवान्**—(सहसोत्थाय प्रणम्य ।) मा तावत् । कष्टमनुक्षणकदर्थिता एव वयं प्राकृतेनेव पराभवः पराभव इति धूमायमानैः स्वामिपादैः । नन्वसकृदावर्तितविश्वत्रयविजयदृप्तेषु महावीरेषु चापगुणारोपणसमसमयसमारोपितशासनस्य तत्रभवतो महापुरुषधौरेयस्य दर्शनभयगूढचारिणा केनापि दिवान्धेनेव दिवाकरस्य कीदृशोऽयं पराभवो नाम ।

**लक्ष्मणः**—सम्यगुपपादितमनुक्षणकदर्थिता इत्यार्येण जाम्बवता ।

जाल्मश्चौर्यमिदं चकार किल यस्तस्याद्य दृष्टं पदं
संप्रत्येव स दण्ड्यते च सगणो यत्किंचिदास्तामिदम् ।
किंतु व्यक्ततयावबुध्य तदिदं लज्जान्धकूपे चिरादस्थाने खलु ताम्यता ननु वदाम्यार्येण दूयामहे ॥ १६ ॥

**रामः**—वत्स, किमुच्यते चौर्यमिति । साधुरयं पन्थाः स्वदोषगोपनेषु । पश्य ।

वैरोपदर्शितपथेषु मुहुः परेषां
सर्वप्रकाररचितेषु पराभवेषु ।
मायेति चौर्यमिति वञ्चनमित्यशक्तै-
राच्छाद्यते सहज एव निजः प्रमादः ॥ १७ ॥

**अनलः**—देव, मायाप्रसङ्गादिदमनुस्मारितोऽस्मि ।

**लक्ष्मणः**—(स्वगतम् ।) दिष्ट्या कथान्तरं प्रस्तुतममात्यानलेन । (प्रकाशम् ।) आर्य, नन्वयमाकर्णितविज्ञापनाक्षरः प्रतिप्रेष्यतां महाराजविभीषणस्यान्तिकम् ।

**रामः**—(निश्वस्य ।) आस्तां तावदयमान्तरः कुम्भीपाको रामस्य । भद्र किमस्ति संदेशः प्रियसुहृदो विभीषणस्य ।

**अनलः**—देव, अथ किम् । विज्ञापनावसरं तु नाधिगच्छामि ।

**रामः**—अयि भद्र,

अर्थान्कार्यौपयिकानावेदयितुं हितैषिणा राज्ञः ।
नावसरः प्रतिपाल्यो विशेषतो विग्रहावतीर्णस्य ॥ १८ ॥

**जाम्बवान्**—युक्तमाह देवः ।

**अनलः**—इदं तावत्स्वामिपादान्प्रणम्य देवविभीषणो विज्ञापयति—'स्वामिपादादेशादतर्कितानीतेन महता गोलाङ्गूलबलेन निकुम्भिलाभिधानं कुमारदुर्गमुपनिपीडयता परिज्ञातो मया लङ्कायामध्यवसायः ।'

**रामः**—कीदृशः ।

**अनलः**—'मायाप्रायं योद्धव्यमिति तदर्थं च मयशम्बरविद्युज्जिह्वप्रमुखमानीयते पैरेरादिमायाविकुलम् ।'

**लक्ष्मणः**—मायेति नाम कापि महती खल्वियं बिभीषिका राक्षसानाम् ।

**रामः**—स्थाने हि ते निजेनैव बलेन जेतुमिच्छन्ति । मायाबला हि राक्षसी जातिः । अपि च ।

दृष्टः शस्त्रविमर्दनिर्दयभुजो रामः कुठारायुधः
दृष्टो योजनबाहुरद्भुतजवद्वन्द्वाहवैकव्रती ।
दृष्टः पर्वतवृष्टिदुर्दिनरणच्छ्लाघी च वाली मया
द्रष्टव्याः खलु सांप्रतं पुनरिमे मायाविनो राक्षसाः ॥ १९ ॥

(इति चिन्तयति ।)

(ततः प्रविशति वानरवेषः शम्बरः ।)

**शम्बरः**—(स्वगतम् । हुंकृत्य ।)

दृष्टा एव जनस्थाने पत्नीं हारयता त्वया ।
मायिनो राक्षसा हन्त द्रक्ष्यन्ते सांप्रतं च ते ॥ २० ॥

(परिक्रामन् ।) कथमनावृत एवायमुपसर्पामि । अथवा अस्ति वैदेहीविरहातुरस्य महाराजलङ्केश्वरस्य परिहासविनोदनाय प्रागेव धृतोऽयं मे वानरवेषः । (आत्मानं विलोक्य ।)

धिग्जातिरीदृगपि जीवति जीवलोके
हासाय केवलमशेषजगज्जनानाम् ।
एतां कथंचिदपि वा विषहे जुगुप्सां
वेषोऽप्ययं बत विडम्बयितुं न शक्यः ॥ २१ ॥

तथाहि ।

उत्प्लुत्य धावनमकाण्डभयापसर्पः
पुच्छावधूतिरसकृद्भ्रुकुटिक्रिया च ।
इत्यादि शिक्षितमभूदखिलं कथंचि-
देका तु सा किलिकिला मम दुर्ग्रहैव ॥ २२ ॥

भवतु । प्राप्तावसरं विधास्यामि । (उपसृत्य । दृष्ट्वा ।) कथमेतावप्यत्रैव विभीषणानुचरौ । भवतु । यावदेतावप्यपसर्पतस्तावद्वृक्षान्तरितः प्रस्तावमनुपालयामि । (तथा करोति ।)

**अनलः**—देव, सावशेषं मे विज्ञापनम् ।

**रामः**—भद्र, ततस्ततः ।

**अनलः**—ततश्च प्रागेव संग्रामावतरणात्किमपि संकेतयितव्याः सर्वे सैनिका इति।

**जाम्बवान्**—देव, कदाचिद्वानरवेषेण राक्षसा विचरेयुः।

**शम्बरः**—कथमहं परिज्ञातोऽस्मि। अथवा संभावना खल्वस्य भल्लूकस्य।

**जाम्बवान्**—ततश्च स्वयमेव महाराजविभीषणेन स्वपरविवेचकः संकेतः कर्तव्य इति।

**शम्बरः**—कथं संकेतकरणमनुमन्त्र्यते। विभीषणश्च माययाप्यस्माकमधिकोऽसुसंपादामेव संकेतमुद्रां विधास्यति। कथमिदं परिज्ञास्यामः। अथवा अस्ति महाराजलङ्केश्वरस्य श्वशुरेण दानवेन्द्रेण दर्शनोपदीकृतो महामणिरद्भुतदर्पणो नाम।

प्रतिफलति यत्र सर्वं वस्तु यदा योजनत्रितयात्।
तत्तत्क्रियाश्च सर्वा विना पुनर्मानसीं वृत्तिम्॥ २३॥

तदत्रैव स्फुटीभविष्यति यदेते किंचिच्चेष्टेरन्।

**जाम्बवान्**—भद्र संपाते, किमिदमाकर्णितं महाराजविभीषणेन मेघनादस्य दौर्जन्यम्।

**संपातिः**—इतः स्वामिपादानुज्ञया विज्ञापयिष्यामि।

**जाम्बवान्**—आः, पश्यत दुरात्मनो मेघनादस्य दौर्जन्यम्।

**रामः**—किमाश्चर्यमार्यस्य।

पितृव्ये राजपुत्राणां ज्ञातिद्वेषो विशिष्यते।
आनन्तर्यस्य यत्साम्यमभ्यसूयापदं हि तत्॥ २४॥

**लक्ष्मणः**—मेघनादो मेघनाद इति महती खलु गणना तत्रभवतो जाम्बवतः।

**जाम्बवान्**—कुमार, नहि नहि दौर्जन्यमस्य प्रभवति।

**लक्ष्मणः**—सत्यमेतत्।

प्राप्याप्यरीन्कथंचिद्यदि वयमेवं भवेम तूष्णीकाः।
तेषां दौर्जन्यमिति प्रभवति तच्चेति किं चित्रम्॥ २५॥

**रामः**—वत्स, यावदङ्गदो निवर्तते ।

**शम्बरः**—कुतः पुनरङ्गदस्य जीवतो निवृत्तिः । यतः स किल यदि भिद्यमानो न घटेत, ततस्तन्नियमनाय कृतमेव तत्र संविधानकममात्यमाल्यवता ।

**अनलः**—देव, अङ्गदावलम्बिनी च काचित्किंवदन्ती ।

**लक्ष्मणः**—(सावज्ञम् ।) यत्किल तमधिकृत्य भेदः प्रस्तूयते इति ।

**अनलः**—अथ किम् ।

**रामः**—कालः खल्वयमुपायानां प्रयोगस्य ।

**जाम्बवान्**—भद्रौ, विचार्यतां सर्वमपि स्वेषु परेषु वा मर्म ।

**उभौ**—यथोक्तमार्येण । (इति परिक्रामतः ।)

**रामः**—भद्रौ, इतस्तावत् ।

**उभौ**—(प्रतिनिवृत्य ।) आज्ञापयन्तु स्वामिपादाः ।

**रामः**—मद्वचनाद्वक्तव्यस्तत्रभवान्वयस्यबिभीषणो वयस्यसुग्रीवश्च—'सर्वथा अप्रमत्ताभ्यां परिभ्रमितव्यम्' इति ।

धुर्यौ मनोरथस्य हि सुग्रीवविभीषणौ यतश्चरतः ।
स किलास्माकं पन्थाश्चक्राणामिव परिभ्रमताम् ॥ २६ ॥

**उभौ**—यदाज्ञापयन्ति स्वामिपादाः । (इति निष्क्रान्तौ ।)

**शम्बरः**—अयमवसरो ममात्मानं दर्शयितुम् । गृहीतश्चायमङ्गदभेदप्रस्तावः । (ससंभ्रममुपसृत्य । लक्ष्मणस्य कर्णे ।) एवमिव ।

**लक्ष्मणः**—मूर्ख, कथमियतैव संविग्नोऽसि ।

**शम्बरः**—(स्वगतम् ।) कथमियतैवेति ब्रवीति । अहो धीरता क्षत्रियडिम्भस्य । (प्रकाशम् ।) कातरा खलु वानरप्रकृतिः ।

**रामः**—किमाह दधिमुखः ।

**लक्ष्मणः**—आर्य, न किंचिदन्यत् । वालिसूनुः किल पित्र्यं पन्थानमिच्छति ।

**रामः**—किमनुप्रविष्टः परपक्षम् ।

**शम्बरः**—देव, अथ किम् ।

**रामः**—भवतु कोषः । फलं तु ज्ञातुमिच्छामि ।

**शम्बरः**—अप्रतिपक्षं च कपिराज्यं पितृवधवैरनिर्यातनं च ।

**रामः**—साधुसमयप्रतीक्षाः खलु मानिनः कृतामर्षाः ।

**लक्ष्मणः**—किमेकेन तावदङ्गदेन ।

सर्वा वानरवाहिनीयमथवा भूचारिणः प्राणिनो
यद्वानुप्रविशन्तु राक्षसबलं लोकास्त्रयः सेश्वराः ।
प्राकाराट्टशिलाविवट्टितशिखाशीर्णस्फुलिङ्गैः शरै-
रार्यभ्रूरचनां विनैव निमिषा लङ्केयमादीप्यते ॥ २७ ॥

**जाम्बवान्**—(विमृश्य ।) बहुच्छलानि रक्षांसि यत्किंचित्प्रथयन्ति तदनृतमिव प्रतिभाति ।

**रामः**—अनृतमेवैतत् ।

**लक्ष्मणः**—

अनृतमिदमृतं वा तेन किं नस्तदास्तां
प्रकृतमनुसरामो यन्निमित्तः प्रयासः ।
ननु रिपुपुरमेतन्मृग्यमाणं चिराय
त्रितयमिव पुराणां धूर्जटेरग्रतस्ते ॥ २८ ॥

**रामः**—यथोक्तं वत्सेन ।

(सर्वे उत्तिष्ठन्ति ।)

**शम्बरः**—(स्वगतम् ।) कथमन्यदेव किंचिदेतैरुपक्रम्यते । (किंचित्पर्याकुलस्तिष्ठति ।)

**जाम्बवान्**—(अपवार्य ।) देव, यथायमयथातथेङ्गितः, तथा मन्ये मायागृहीतवेषो राक्षस इति ।

**रामः**—(दृष्ट्वा । अपवार्य ।) साधु, निपुणं दृष्टम् ।

**शम्बरः**—(स्वगतम् ।) नूनमिमौ मयि निचिकित्सेते । का पुनरत्र प्रतिपत्तिः ।

**जाम्बवान्**—तदा निर्णयादयं बन्धनीयः ।

**रामः**—यथा रोचते भवते ।

**शम्बरः**—(स्वगतम् ।) भवतु । एवं तावत् । (प्रकाशम् ।) देव, सुग्रीवभक्तिर्मां मुखरयति । वालिपुत्रस्य परपक्षानुप्रवेशो नाम महदातङ्कस्थानं महाराजसुग्रीवस्येति बलवदस्मि पर्याकुलः । परमतः प्रमाणं देवपादाः ।

**जाम्बवान्**—एहि तावत् । अत्र प्रतिकरिष्यते । (शम्बरं हस्ते गृहीत्वा निष्क्रान्तः ।)

**रामः**—वत्स, तदावामप्युपलभ्य सुग्रीववृत्तान्तमुत्तरमनुसंधास्यावः ।

(इति निष्क्रान्ताः सर्वे ।)

**इति प्रथमोऽङ्कः ।**

---

द्वितीयोऽङ्कः ।

(प्रविश्य)

**शम्बरः**—(सहर्षोद्रेकम् ।) दिष्ट्या खलु दाशरथिप्रहितं कार्यलेखमवमुक्तमत्पाणिरादाय हस्ताभ्यामवहितेन चेतसा यावदनुवाचयति तावद्यदृच्छासंनिपतितं सुग्रीवपरिचारकं दधिमुखमेव झटिति गोचरीकृत्य तिरोभवता मया वञ्चितोऽयं जरद्भल्लूकः ।

(ततः प्रविशति दधिमुखं हस्ते गृहीत्वा जाम्बवान् ।)

**जाम्बवान्**—(सविमर्शम् । स्वगतम् ।)

किमेष रजनीचरः किमपि मायया दर्शय-
　त्यथो नु परमार्थतो दधिमुखो गृहीतो भवेत् ।
इति प्रबलसंशयाकुलितचेतसासौ मया
　कथं नु परिमुच्यतामथ कथं नु वा बध्यताम् ॥ १ ॥

अथवा संदिष्टं हि मे देवेन लेखमुखात् । यथा निकुम्भिलामुपरुन्धानस्य वयस्यविभीषणस्य संकेतमुद्राकरणेष्वनुप्रेक्षकेण भवता भवितव्यमिति । तदनेनापदेशेन विभीषणान्तिकमेनमुपनयामि । स एव ज्ञास्यत्येतस्य तत्त्वम् । (इति परिक्रामति ।)

**शम्बरः**—तिरोहित एव चिकीर्षितमस्य ज्ञास्यामि । (इत्यनुसरति ।)

**दधिमुखः**—(स्वगतम् ।) कथं यदृच्छादृष्टमात्रमपर्यवसितप्रणामक्रियमेव मां हस्ते कृत्वा कुत्रापि प्रस्थितमार्येण । (प्रकाशम् ।) आर्य, अभिवादये ।

**जाम्बवान्**—(स्वगतम् ।) कथं सहावस्थानेऽपि प्रणामः । भवतु । (प्रकाशम् ।) भद्र, चिरं जीव ।

**दधिमुखः**—आर्य, अपि ज्ञायते कथमस्मिन्नुद्देशे महाराजरामदेव इति ।

**जाम्बवान्**—(स्वगतम् ।) भवतु । पश्यामि । (प्रकाशम् ।) भद्र, किंनिमित्तम् ।

**दधिमुखः**—कुमारतारेयग्रहणप्रवृत्तिमाकर्ण्य सद्य एव लङ्कामभिप्लवमानेन स्वामिना सुग्रीवेणाहमादिष्टः—'विज्ञाप्यतामयं वृत्तान्तो देवाय' इति ।

**जाम्बवान्**—(स्वगतम् ।) कथमन्यदेवेदानीमस्य वचनम् । अकृतकविस्रम्भश्चायमविक्रियमाणः कथयन्परमार्थ इव मे प्रतिभाति । ततश्च पूर्वमनेन राक्षसाविष्टेन भवितव्यम् । अथवा अगस्त्यमन्त्रप्रभावान्नावेशशङ्का च रक्षसां वानरेषु । तत्कथमेतत् । भवतु । पृच्छामि तावदेनम् । (प्रकाशम् ।) अयि भद्र,

> ब्रूषे सद्यो यस्त्वमसत्पुरस्ता-
>     त्तारेयस्यारातिपक्षप्रवेशम् ।
> स त्वं सद्यस्तद्विरुद्धप्रकारं
>     किंचिच्चेदं जल्पसीत्यद्भुतं नः ॥ २ ॥

**शम्बरः**—(सहस्ततालं विहस्य ।) अन्धेनेव सह चक्षुष्मान्क्रीडामि ।

**दधिमुखः**—तर्हि मद्रूपधारिणा केनापि राक्षसेन संक्षोभाय विप्रलब्धा यूयमिति तर्कयामि ।

**जाम्बवान्**—हुं, केनापीति । ननु स एव भवानिदानीं नीयते मया ।

**दधिमुखः**—(सस्मितम् ।) अहमेव तर्हि राक्षस इति गृहीतोऽस्मि ।

**शम्बरः**—(सगर्वम् ।) न केवलं गृहीतः, अपि तु बध्यसे च ।

**जाम्बवान्**—(सोपश्लेषम् ।) भद्र, नहि नहि । संकेतमुद्राकरणाय विभीषणान्तिकं गच्छामः ।

**दधिमुखः**—भवतु । शङ्का हि गुणः संकटेषु । द्रष्टव्यस्तत्रभवानशेषमायातत्त्ववेदी महाराजविभीषणः । सुग्रीवप्रवृत्तिस्तु कुतो विज्ञास्यते देवेन ।

**जाम्बवान्**—नन्विदानीमेव भवन्तं प्रथमग्राहितसंकेतमुद्रं विसर्जयिष्यामि ।

(इति परिक्रामतः ।)

**शम्बरः**—कथमयं न दण्ड्यते, प्रत्युत विभीषणान्तिकमुपनीयते । (विचिन्त्य ।) भवतु । विभीषणः खलु परायणमेतेषामस्मन्मायानिस्तरणे । तदप्राप्तविभीषणमेव दधिमुखमन्तरा विभीषणीभूय घातयन्मणिप्रभावाधिगतसंकेतमुद्रो निःशङ्कं राजपुत्रयोरभियोगविलम्बमाचरन्नन्तरदर्शी भवामि । किं च ।

यत्तारेयं निगृह्णन्ति प्रहस्ताकम्पनादयः ।
स्वयं राजा सहामात्यैः सुग्रीवं चैकमागतम् ॥ ३ ॥

तदपि मे प्रस्तुतोपकाराय । विपर्यये तु कालोचितं विधास्यते । इयता च कालेन निर्वर्तितकाद्रवेयावाहनः कुमारमेघनादः सिद्धिवटमूलादुत्तिष्ठेत् । ततः सुसमाहितं भविष्यति । (इति निष्क्रान्तः ।)

**जाम्बवान्**—(विचिन्त्य । निश्वस्य ।) भद्र, एवमष्टादशस्वपि तीर्थेषु आवश्यकशङ्कानुषङ्गादखिलद्वेषपदं भवति राजकार्यैकतन्त्रो मन्त्रिजनः । पश्य ।

शङ्क्यः कार्यपरीप्सया परिजनो राजापि नन्वन्ततः
　स्यादेवं सति कष्टमेव न मिथः शङ्केत कः शङ्कितः ।
शङ्का राजहृदि व्यनक्ति यदविश्वासोत्तरङ्गं भयं
　तत्प्राणान्तिकमेव हन्त धिगहो दुर्जीवितं मन्त्रिणाम् ॥ ४ ॥

**दधिमुखः**—आर्य, कियदुत्प्रेक्षसे महाराजरामदेवेऽपि ।

**जाम्बवान्**—भद्र, सम्यगनुबोधितोऽस्मि। सुष्ठु न चिन्तनीयान्येव विमृश्यकारिणा रामदेवेन राजन्वतामस्माकमन्यराजन्यमन्त्रिजनसुलभानि तादृशानि दुरितानि। अयं हि।

क्षोदन्न क्षमते हिताय घटते मित्रेषु दत्ते मनः
शङ्कास्थानविवर्जनैर्विवृणुते विश्वास्यतामात्मनः।
नानिश्चित्य करोति नापि कुरुते मन्त्रैर्विना निश्चयं
स्वातन्त्र्यैकफलं बलोर्जितमपि स्वाम्यं नयत्यङ्गताम्॥ ९॥

तदीषत्करमस्य त्रैलोक्यराज्यमपि। किं पुनर्लङ्काराज्यं यत्प्रतिश्रुतं महाराजविभीषणाय।

**दधिमुखः**—एवमिदम्। (दृष्ट्वा।) कथं महाराजविभीषण इत एवाभिवर्तते।

**जाम्बवान्**—(दृष्ट्वा।) कथं विभीषण एवम्। (विचिन्त्य।) इदं च सुनिष्पादितं दैवेन देवस्य विजयाय। यद्रामरावणयोर्वैरोपशमेऽपि रावणविभीषणयोर्न जीवतोर्वैरोपशमः।

**दधिमुखः**—साधूक्तमार्येण।

**जाम्बवान्**—कथमस्य निकुम्भिलोपरोधादिहागमनम्। भवतु। उपसर्पावः।

(इति निष्क्रान्तौ।)

**इति विष्कम्भः।**

---

(नेपथ्ये।)

सर्वथा कुशलमस्तु राज्ञे सुग्रीवाय।

(प्रविश्य।)

**रामः**—(धनुरास्फाल्य।) क्व मे प्रियवयस्यः।

(पुनर्नेपथ्ये।)

यदयमेक एवेदानीम्

उत्प्लुत्य प्रविशति च क्षणेन लङ्का-
मुद्भ्रान्तप्रतिभटमुच्यमानमार्गः।

उत्पाताम्बुद इव शोणितानि वर्ष-
न्नादित्यात्पतति च दारुणः कबन्धः ॥ ६ ॥

**रामः**—(ऊर्ध्वं पश्यन् ।) अहो, साहसं वयस्यस्य ।

(प्रविश्य ।)

**लक्ष्मणः**—(त्वरितं परिक्रामन् ।) आर्य, कृतं कृतं विलम्बनेन किमेतदालोक्यते । ननु यत एव महाराजसुग्रीवस्तत एव खल्वावयोरवस्थितिः ।

**रामः**—वत्स, कः संदेहः ।

(इति परिक्रामतः ।)

(ततः प्रविशत्याकाशात्पतनमभिनयन्राक्षसः ।)

(राक्षसो मूर्च्छां नाटयति ।)

**रामः**—(दृष्ट्वा ।) कथमयमाकाशात्पतितो राक्षसः । नूनमनेन संग्रामनिर्धूतेन भवितव्यम् । अभियोक्ता च कश्चिदस्य वानरः स्यात् ।

**लक्ष्मणः**—यथोक्तमार्येण । तथा ह्यस्य

उरःपीठो मर्मत्रुटनविलुठत्प्राणविधुतो
नखानामाघातं वदति दशधा दारिततटः ।
विशीर्यद्दन्तालिव्यतिकरहठच्छिन्नरसन-
स्फुटन्नुन्मग्नाक्षः कथयति च मूर्धातलहतिम् ॥ ७ ॥

शृणुमस्तावत्किमप्यसौ दृढवेदनोन्मत्तः प्रलपति । कदाचित्सुग्रीवप्रवृत्तिरुपलभ्येत ।

(इति तथा कुरुतः ।)

**राक्षसः**—(तदवस्थ एव ।) आः पाप वानरापसद, पतितमिदानीं ते शिरः ।

**रामः**—(सवितर्कम् ।) को हि नामायं वानरो भवेत् ।

(प्रविश्य दधिमुखवेषः)

**शम्बरः**—(स्वगतम् ।) दिष्ट्यावकाशो मायाविष्करणस्य । (उपसृत्य । प्रकाशम् । सवैक्लव्यम् ।) देव, जानीहि यस्येदमिति । (छिन्नं शिरो दर्शयति ।)

**रामः**—(दृष्ट्वा । सवितर्कम् ।) वत्स, पश्य कस्येदं वानरस्येति ।

**लक्ष्मणः**—(दृष्ट्वा ।) नन्वयमार्यनियोगेन पुरा मयैव बद्धः पट्टबन्धः ।

**रामः**—हा वयस्य वानरेन्द्र, कथमेतद्विपर्यस्त इव जीवलोकः ।

**लक्ष्मणः**—आर्य, कथमविचार्यैव विक्लवोऽसि ।

**रामः**—

श्रुत्वा च भिन्नं तारेयं सुहृदः साहसं च तत् ।
प्रवृत्तिं च विचिन्त्येमां पापमाशङ्कते मनः ॥ ८ ॥

**लक्ष्मणः**—ननु निश्चितमेतन्मायाविकल्पितमिति ।

**रामः**—वत्स, सर्वत्र कथमन्यथाभावः ।

**शम्बरः**—अस्तु तावदयमाश्वासः । अहं पुनरिदमेव स्वामिशिरः शिरसा वहन्भृगुपतनेन स्वामिसत्कारं प्रत्यनृणीभवितुमिच्छामि ।

**रामः**—भवतु । नातिक्रान्तमद्यापि विचार्यतामेतत् ।

**लक्ष्मणः**—(स्वगतम् ।) ऋजुतया खल्वार्यः सर्वत्र प्रत्येति । (प्रकाशम् ।) अहो, व्यर्थयसि किमात्मानं भृगुपतनेन । ननु तत एव मृत्युः श्रेयान्भृत्यानां यत एव स्वामिनः ।

**शम्बरः**—सुष्ठु भणितं कुमारेण । (सबाष्पगद्गदम् ।)

पादेन हन्त मम पश्यत एव योऽसौ
भर्तुः शिरो मृदितवान्पितृवैररोषात् ।
धिक्तस्य वास्तु मम वा ननु जीवलोको
देवस्य बाल इति तत्र न चेद्दया स्यात् ॥ ९ ॥

**रामः**—

तारेयमस्य किमपि स्पृशति प्रलाप-
स्तस्यापि नन्वरिषु संवदते प्रवेशः ।
कष्टं बत प्रलपितैः किमकाण्ड एव
तत्साहसं कृतवता सुहृदा हताः स्मः ॥ १० ॥

**शम्बरः**—देव, कथमकाण्ड इति वञ्चितेन किं कर्तव्यम् ।

**रामः**—कथं वञ्चना नाम ।

**शम्बरः**—नन्वस्य देवादेशेन दक्षिणद्वारे नलनीलतारप्रमुखमुपनिवेशयत एव वानरकानीकमागत्य केनापि मद्रूपधारिणा राक्षसेन कर्णे किमपि कथितमासीत् ।

सद्यः किमित्यमात्यानां यो विमर्शक्षणो मिथः।
तस्मिन्नलक्षितोत्पातः स दृष्टिपथमत्यगात्॥ ११ ॥

**रामः**—अत्याहितेन भवितव्यं रहस्येन।

**शम्बरः**—देव, तच्च रहस्यं पश्चादवगमिष्यामि। तारेयः किल गृहीतुमारब्ध इति।

**रामः**—अतः खलु मामनापृच्छ्यैव कृतं साहसं पुत्रवत्सलेन।

**शम्बरः**—स च मया राक्षसस्वामिपादान्तिकाद्विभीषणान्तिकमभिगच्छता दृष्टो विभीषणाय निवेदितो बद्धश्च।

**रामः**—

किं तेन हस्तबद्धेन तथाभूते तु तादृशे।
हृष्यामो हारितगजा विड्राहग्रहादिमे॥ १२ ॥

**लक्ष्मणः**—क्वेदानीमार्यो जाम्बवान्।

**शम्बरः**—कुमार, क्वेदानीमिति न जानामि। तदैव महाराजविभीषणेन दत्तसांकेतिकस्वहस्तमुद्रः प्रत्यागच्छन्नन्तरा गन्धमादनादिममाकर्ण्य वृत्तान्तमायासाय केवलमुत्तरगोपुरोद्देशमभिप्लुतवानसि।

(रामलक्ष्मणौ संकेतमुद्रां दृष्ट्वा परस्परमवलोकयतः।)

**शम्बरः**—यतः।

लङ्केन्द्रेण रणार्तिविह्वलतरैरङ्गैर्बलैश्च स्वयं
पित्रेव प्रतिपाल्यमानसमरक्रीडाभटीशालिनः।
तारेयस्य विवल्गितान्यरिबलावष्टम्भसेतोः पथा
निस्तारं पितृवैररोषजलधेर्निष्पन्नमेवावदन्॥ १३ ॥

**लक्ष्मणः**—अश्रद्धेयमेतत्।

**रामः**—नन्वेकाकिनो बलवतोऽपि बहवः संशयाय।

**लक्ष्मणः**—(सासूयमिव।) आर्य,

सत्यं बहुभिरेकाकी वयस्यो निहतः परैः।
श्रद्धत्स्व मन्थानगिरिं पर्यलुम्पन्पिपीलिकाः॥ १४ ॥

**रामः**—(स्मितं कृत्वा।) दृष्टविभीषणस्वहस्तमुद्रेऽपि दधिमुखे किंनिबन्धनेयमश्रद्धा वत्सस्य।

**लक्ष्मणः**—हुं, किंनिबन्धनेति स्यादयं वराको मायाविभिर्मोहित इति।

**शम्बरः**—देवस्थाने खल्वियमश्रद्धा विदितसुग्रीवपराक्रमस्य कुमारस्य।

भर्तुस्तावद्युगपदुदिते सर्वलोकाभियोगे-
ऽप्यश्रद्धेयं भयमिति ननु ज्ञातमेतावतैव।
यत्सेनानीनिशिचरपतेस्तुल्य एष प्रहस्तो-
ऽप्येवं यादृच्छिकभुजलघुक्षेपमात्रावधूतः॥ १५॥

**लक्ष्मणः**—कथमयं प्रहस्तहतकः।

**रामः**—प्रहस्त इति सेनाध्यक्ष इति साशङ्कमाम्रेडितान्येव शश्वदमून्यक्षराणि वयस्यविभीषणेन।

**शम्बरः**—स एवायं माणिभद्रस्य जेता। किमेतेन।

एवं रावणमेव घूर्णनजवव्यत्यस्तवक्त्रावली-
निष्पर्यायविनिर्यदास्रमसकृत्किं न क्षितावक्षिपत्।
किं वा न व्यधुनोद्घनोरुपवनैरेवापरानाशरा-
न्धिक्छायापिहितस्तु तं शरमयैर्नागैर्बबन्धेन्द्रजित्॥ १६॥

तदन्तरे च तावद्बीभत्सकर्मा तारेयः स्वयमेव रावणकरादाच्छिद्य चन्द्रहासम्—(इत्यर्धोक्ते बाष्पस्तम्भं नाटयति।)

**रामः**—अलमलमतः परं कथितेन। ननु सफलामर्षस्तारेयः। (सावेगम्।) हा महाराज, हा मम प्रतिज्ञामहार्णवकर्णधार, हा मम त्रैलोक्यसाधनमहामात्य, हा मम दुर्जातबन्धो, हा सर्वप्राकाररामममयवयस्य, वानरेन्द्र।

तैस्तैस्ते साहसारम्भैर्वेपमानेन चेतसा।
यत्तदाशङ्कितं पापं तस्य जज्ञे विनिश्चयः॥ १७॥

(इति धनुरवलम्ब्य विह्वलस्तिष्ठति।)

**लक्ष्मणः**—(स्वगतम्।)

असावपदिशन्किंचित्प्रस्तुवन्किंचिदद्भुतम्।
तस्मिन्निदर्शयन्किंचित्संमोहयति मामपि॥ १८॥

(प्रकाशम् ।) आर्य, समाश्वसिहि समाश्वसिहि ।

**शम्बरः**—(स्वगतम् ।) दिष्ट्यायं प्रमुग्ध एव रामहतकः । सन्निहिता चेयं गुर्वी शिला । तदनया सफलयामि महान्तमिममायासम् । (आदातुमिच्छन् । दृष्ट्वा ।) कथं प्रकृतिस्थ एव लक्ष्मणहतकः । अहो निःस्नेहनिष्ठुरं हृदयमस्य यदस्मिन्नपि महाशोकानलोष्मण्यश्मेव न किंचिदपि विक्लिद्यते । अथवास्य बलवती मय्यसंभावना ।

**लक्ष्मणः**—आर्य, समाश्वसिहि समाश्वसिहि । नन्वतिक्रामत्यवसरो धैर्यं प्रकाशयितुम् ।

नष्टश्चेद्द्विपदादर्शः कुत्राभिव्यज्यतां धृतिः ।
न चेन्नैशं तमस्काण्डं को वेद ज्योतिरोषधेः ॥ १९ ॥

**रामः**—(आश्वस्य ।) वत्स, इतः परमाश्वस्यापि किं करोमि मन्दभाग्यः ।

**लक्ष्मणः**—ननु निवेदितमेव दधिमुखेन रावणतारेयप्रमुखमरातिचक्रमुत्तरगोपुरोद्देशे निखिलमेकत्र वर्तत इति । ततः स एव तावदभिसंधाय यातव्यः ।

**रामः**—(निश्वस्य ।) वत्स,

तारेयानयुतं हन्मि नियुतं रावणानपि ।
ततः किमुपलभ्येत सकृदेतादृशः सुहृत् ॥ २० ॥

तथापि सपरिवारराक्षसकुलोच्छेद एव हि सर्वप्रकारस्यापि पारं वैरस्य । तदादिश पन्थानम् ।

**लक्ष्मणः**—इत इतस्तावदार्यः ।

(इति परिक्रामतः ।)

(प्रहस्तः संज्ञा लभते ।)

**शम्बरः**—(स्वगतम् ।) कथं प्रवृत्त एव पुनरप्यभियोगः । (प्रकाशम् । अनुसरन् ।) देव, नन्विदमेव विज्ञापयितुमुपक्रान्तवानस्मि ।

**रामः**—भद्र, ततस्ततः ।

**लक्ष्मणः**—ननु गच्छतैव श्रोतव्यम् ।

**शम्बरः**—एवमेष निर्वर्तितनृशंसकर्मा रक्षोमध्यकृतवल्गनो मां दृष्ट्वैव ।

परावष्टम्भेन छलितवति तातं बत चिरा-
न्निरूढा सुग्रीवेच्छलनविधयैव प्रतिकृतिः ।
इति स्वैरं दर्पस्खलितपदमुद्घुष्य बहुशो
ममाग्रे पादेन प्रसभमभिचिक्षेप तदिदम् ॥ २१ ॥

(इति च्छिन्नं शिरोऽङ्के निधाय मूर्च्छति ।)

**रामः**—भद्र, समाश्वसिहि समाश्वसिहि । किं न कुर्युरमर्षिता वैरिणः ।

**शम्बरः**—(आश्वस्य । ससंभ्रममुत्थाय ।) देव, तदेनं बटुं कुमारावष्टम्भेन पशुमारं मारयितुमनुज्ञानुग्रहदानेन प्रसीदन्तु स्वामिपादाः । (इति पादयोः पतति ।)

**रामः**—नन्वादेष्टव्यम् । अभ्यर्थितोऽसि । वत्स, युवाभ्यामतिनिपुणं विमृश्य यथोचितमप्रमत्ताभ्यामनुष्ठातव्यम् ।

**लक्ष्मणः**—(विमृश्य ।) यथा दधिमुखेन रक्षोमध्यकृतवल्गनो दृष्टस्तारेयस्तथा मन्ये कापि राक्षसैरुपदर्शितमायेति यथा खलु परिमोहितः प्रलपति वराको यत्किंचित् ।

**शम्बरः**—(स्वगतम् ।) अयं बटुरशक्य इवातिसंधातुम् । कथमिदानीम् ।

(नेपथ्ये कलकलः । सर्वे आकर्णयन्ति ।)

**शम्बरः**—(स्वगतम् ।)

नूनं पश्चिमगोपुरप्रमथनप्रत्येकदत्तेक्षणै-
र्भग्नोत्क्षिप्तगृहीतशैलशिखरैः कीशैर्हनूमन्मुखैः ।
कुप्यत्सप्तमरुत्परस्परहतिव्यत्यस्तसप्तार्णवी-
कल्लोलैः प्रलयक्षितेरिव तलं लङ्कापुरं ग्रस्यते ॥ २२ ॥

भवतु । एवं तावत् । (प्रकाशम् ।) देव, यथायमामथ्यमानमहार्णवध्वनिगम्भीरभीषणः कोलाहलः प्रतीचीं दिशं बधिरयति, तथा मन्ये मारुतिप्रमुखानामपि श्रुतोऽयं वृत्तान्त इति ।

(आकाशे ।)

वयं हि यस्यागमनं चिराय युद्धैकलुब्धाः प्रतिपालयामः ।
आलक्ष्यते वालिसुतः स दूरात्प्राप्तोऽद्य कालो भुजशालितायाः ॥ २३ ॥

**शम्बरः**—(श्रुत्वा । स्वगतम् ।) कथमागत एव स दुरात्मा तारेयः । (विचिन्त्य ।) आः, आगच्छतु । दधिमुखवदेनमपि वञ्चयंल्लक्ष्मणक्रोधस्य पात्रीकरोमि । (प्रकाशम् ।) देव, दुरात्मनस्तारेयस्य दर्शनेन दृष्टः किलायमास्फोटो यूथपानाम् ।

कुमारस्त्वेष मां तावन्मायान्ध इति मन्यताम् ।
तारेयेणैव यावन्मे शिरश्छिन्नं न दृश्यते ॥ २४ ॥

कुमार कुमार,

ननु निशिचरशाठ्ये सर्वथा शङ्कितव्ये
व्यपगतपरिशङ्कं स्वैरचारोद्धतस्य ।
तव सहजरुषो यः पञ्चवट्यां प्रमादः
परिदहति दुरन्तस्तस्य खल्वेष पाकः ॥ २५ ॥

तिष्ठ तावत् । (पदान्तरे स्थित्वा ।) तदिदानीम्

कतिचन कुलपुत्रा वालिपुत्रं भजेर-
न्कतिचन बत मायामोहितं मन्वते माम् ।
प्रतिकरणमतोऽस्मिञ्ज्ञातमूलेन मे स्या-
दपि तु सफलयामि स्वामिपिण्डोपयोगम् ॥ २६ ॥

(इति परिक्रामति ।)

**रामः**—भद्र, नन्वावामप्यनुपदमागतावेव । वत्स, तदावामप्यस्य पदमनुसरन्तावुत्तरमेव गोपुरं प्रति प्रतिष्ठावहे, यत्किल दर्शनीयरणकर्मा दशाननः स्वयं रक्षति ।

(इति परिक्रामतः ।)

**प्रहस्तः**—(उत्थाय ।) आः पाप वानरापसद, क्व नु जीवन्गमिष्यसि । (इति स्खलितं परिक्रामति ।)

**शम्बरः**—(स्वगतम् ।) कथं प्रवृत्तमेव सर्वतः प्राकारमर्दनं हरियूथपैः ।

अस्तु तावदेवम्। (प्रकाशम्।) भो भोः स्वामिसत्कारस्मरणश्लाघनीयमहिमानः प्लवङ्गमयूथपाः,

असावास्तां लङ्कापुरवरणरोधः क्षणमिह
स्वपक्षादुद्भूतं शृणुत पुनरत्याहितमिदम्।
अवष्टभ्य क्षुद्रो निशिचरबलं वालितनयः
प्लवङ्गानां शृङ्गं दलयति च धिग्जीवति च नः॥ २७॥

(इति निष्क्रान्तः।)

**रामः**—

आभिः प्रवृत्तिभिरसाववसादितैव
हन्त प्रियस्य सुहृदः पुनरीक्षणाशा।
किंतु स्वयं भवति मे मनसः प्रसादो
यद्वा स भाविनि जयेऽपि भवेन्निमित्तम्॥ २८॥

तत्कृतमनेन विदलितहृदयेन विचारेण।

**लक्ष्मणः**—आर्य, नन्वियमिषुपातसंनिकृष्टैव रक्षसामेकावासस्थानं लङ्का।

इमं क्षणं राक्षसजातिमात्रमुन्मूलयामो वयमेकतानाः।
किं कस्य वृत्तं रणसीमनीति पश्चादिदं साधु विचारयामः॥ २९॥

**रामः**—यथोक्तं वत्सेन। (इति परिक्रामति।)

**लक्ष्मणः**—(स्वगतम्।) अपि नाम पुनरविघ्नितमेव झटित्युत्तरगोपुरोद्देशमार्यमुपानयेयम्। (प्रकाशम्।) इत इतस्तावदार्यः।

**रामः**—कथं परागत एव दधिमुखः।

**प्रहस्तः**—(सरोषम्।) यावदेनं वानरापसदमन्विष्य मूर्धानमुत्पाटयामि।

**रामः**—तद्वत्स, त्वरिततरं संभावयावः।

(इति निष्क्रान्ताः सर्वे।)

**इति द्वितीयोऽङ्कः।**

तृतीयोऽङ्कः ।

(ततः प्रविशति लक्ष्मणः ।)

**लक्ष्मणः**—(स्वगतम् । सहर्षोत्साहम् ।) नन्वसाविदानीमार्यः

मन्दं पदानि हि ददत्प्रतिपत्तिशून्या-
न्यादीपितो हृदि रुषा मुहुरुत्कयेव ।
क्षुद्रैरनुक्षणकदर्थितयापि गत्या
प्राप्तव्यदेशमिमराडिव नीत एव ॥ १ ॥

तदीषत्करमध्वशोषनयनम् । (प्रकाशम् ।) इत इतस्तावदार्यः ।

(ततः प्रविशत्युन्मनायमानावस्थो रामः ।)

**रामः**—

दूरं हन्त परागतो दधिमुखस्तारेय धीरोऽसि रे
हा सुग्रीव जहासि मामथ पुरस्ताद्दृश्यते गोपुरम् ।
जीवन्तीं यदि लोकयेय दयितां न्यङ्क्षेऽपि धिग्जीवितं
किं वत्स त्वरसे ममैव हि कृतो भागस्त्वया रावणः ॥ २ ॥

**लक्ष्मणः**—(स्वगतम् ।) कथमनवस्थिताभिश्चित्तवृत्तिभिरार्यस्य निशाचरकुलकदनसंरम्भो गभीर एव सुदूरमारोप्यते । (प्रकाशम् ।) आर्य, किमेतेन रावणमात्रेण । त्रैलोक्यकण्टकोच्छेद एव ननु ते संविभागः । तदेहि तावदमुना त्रिकूटशिखरभागेन ।

**रामः**—(दृष्ट्वा ।) वत्स, किमधिरूढावेव त्रिकूटशिखरमावाम् ।

**लक्ष्मणः**—आर्य, किं न पश्यसि ।

ननु धनुरनुगण्डमग्रेवसज्यावसज्य त्वया
गिरिरयमखिलोऽधिरूढो निरालम्बदूरोन्नतः ।
धुरि निजनिजयूथपालोच्चलद्बालसालम्बना ·
लघुकपिपृतनायमेनं दुरारोहमारोहति ॥ ३ ॥

किं च ।

प्रागुष्णीष इव त्रिकूटशिरसि व्यालोकि यो रेखया
लङ्काया वरणः स एष हि भवत्यभ्रंलिहैः संक्रमैः ।

यश्च ग्रस्तहरित्स एष जलधिर्लेखावशिष्टाकृतिः
कीशैर्धूत इवासितोत्तरपटः शैलस्य संलक्ष्यते ॥ ४ ॥

**रामः**—(दृष्ट्वा ।) इयमग्रे लङ्का ।

अस्याः पश्य विलङ्घ्यते हरिवरैरसत्कृते हेलया
प्रायः कृच्छ्रविलङ्घ्य एष वरणस्त्वन्मार्गणानामपि ।

**लक्ष्मणः**—

दग्धुं सज्जशरानले त्वयि जनस्थानात्तदानीमिमां
दुर्वारा धिगहो रुरोध करुणा स्त्रीबालवृद्धाश्रया ॥ ५ ॥

**रामः**—(स्वगतम् ।) अस्यां हि रुद्धया तया वराकया चिरादन्धीकृता दृष्टिरियं रामस्य । अथवा ।

नन्वद्यैव विमुञ्चति स्वयमियं दृष्टिश्चिरात्संज्वरं
साले दारितमात्र एव सहसा दृश्येत यद्वल्लभा ।
एष त्वस्तपुनर्विरोपणकथो हृन्मर्मविस्फोटको
यद्ब्रह्माण्डविदारणेऽपि न सुहृत्तादृग्विधो दृश्यते ॥ ६ ॥

**लक्ष्मणः**—आर्य, किमन्यच्चिन्तयसि । नन्वयं लक्षीकृतो गोपुरोद्देशः । (इति धनुरामृशति ।)

(नेपथ्ये ।)

हन्त हन्त, दिष्ट्या खलु तत एव मृत्युः श्रेयान्भृत्यानां यत एव स्वामिन इति कुमारलक्ष्मणोपदिष्टेनैव वर्त्मना सफलो हि मे भर्तृपिण्डोपयोगः ।

**रामः**—(श्रुत्वा ।) वत्स, दधिमुखस्येवायमार्तस्वरः ।

(पुनर्नेपथ्ये ।)

हनूमन्मुख्यानां कथमपि च सुग्रीवसुहृदां
मनस्तैस्तैः सान्त्वैर्मयि सपदि नीतं प्रवणताम् ।
अथ स्युः क्षुद्राश्चेदसहनतया व्युत्थितधियो
निजं मार्गं तेषामुपदिशतु सोऽयं दधिमुखः ॥ ७ ॥

**लक्ष्मणः**—आर्य, पश्य पश्य ।

हत्वा धिग्दधिमुखमेव वालिसूनु-
विक्षिप्य प्रणुदति शश्वदस्य शीर्षम् ।
आवेगस्खलितपदैरमर्षशोक-
क्रोधान्धैरनुकलमीक्षितः प्लवङ्गैः ॥ ८ ॥

**रामः**—कथं वराको झटित्येव शत्रुवशं गतः । (सश्लाघम् ।) साधु रे वालिपुत्र, साधु ।

मथ्नासि सहजं शत्रुं स्वं चावर्जयसे कुलम् ।
कण्टकांश्चोपमृद्नासि काले साधु प्रगल्भसे ॥ ९ ॥

(ततः प्रविशति तारेयवेषः शम्बरः ।)

(शम्बरः 'हनूमन्मुख्यानाम्' (३।७) इति पूर्वोक्तं पठित्वा शिरो विक्षिपति ।)

**लक्ष्मणः**—अहो निर्भयः कपिडिम्भः, यदार्यनिकटेऽपि वल्गति । (इति खड्गं परामृशति ।)

**शम्बरः**—(स्वगतम् ।) प्रहरेदेव कदाचिदयं लक्ष्मणो वैधवेयः । रामस्तु राजा महापुरुषः स्वजनतयोपनतेनानुमनुते शत्रावप्यत्याहितम् । तदेनमनुसरँल्लक्ष्मणस्य क्रोधमादीपयामि यावत्सन्निहितो भवति तारेयः । (प्रकाशम् । राममुपसृत्य प्रणम्य ।) देव, किंचिदस्ति विज्ञापनीयम् ।

(रामः परिक्रामति ।)

**शम्बरः**—(अनुसरन् ।)

परावष्टम्भेन छलितवनिता तं बत चिरा-
न्निरूढा सुग्रीवे छलनविधयैव प्रतिकृतिः ।

**लक्ष्मणः**—अहो निर्भयः कपिडिम्भः, यदार्यनिकटेऽपि वल्गति । यच्च भूयोऽपि सुहृद्वधमहापातकमुद्घोषयति । (इति खड्गमाकर्षति ।)

**शम्बरः**—

पदं तावत्पित्र्यं भवतु मम मा वापरमितः
पदातेरस्य त्वच्चरणभजनैर्जीर्यतु वपुः ॥ १० ॥

**रामः**—हा वयस्य वानरेन्द्र, कथमीदृशस्ते दशाविपाकः । यत्र खलु तारेयशिरःकर्तनेनापि न प्रतीकारः । यदिदमसदृशतया तादृशस्य ते तिरस्कार इव ।

**लक्ष्मणः**—हुं, तिरस्कार इति । ननु क्षपणीय एव सर्वः परपक्षः तदयमग्रावतारः खड्गस्य । (इति खड्गमुद्धुनोति ।)

**शम्बरः**—देव, अति हि नाम दूयसे वयस्येऽतीति । ननु विहितैव ते हितैकतानता वयस्यस्य ।

जानीषे खलु तेन तातमथने तैस्तैश्छलोपक्रमै-
र्धिग्धिक्चीरविगर्हिते पथि तनु त्वं चापि संचारितः ।
एतस्मिन्निहते तवैव सुकृतैरेषा कथं व्यग्रता
लङ्कासंगरसाह्यकर्मणि पुनर्दोर्द्वन्द्वमस्त्येव मे ॥ ११ ॥

किं च ।

पुत्रान्घ्नन्ति विवासयन्ति च पितॄन्भ्रातॄंश्च राज्येच्छया
राज्ञामेष कुलक्रमस्तदधुना किं कुर्महे क्षम्यताम् ।
सुग्रीवोऽस्त्वथवाङ्गदोऽस्तु भवतः कार्यार्थिनस्तेन किं
लङ्कासंगरसाह्यमेष्यति स ते यः स्यात्प्लवङ्गेश्वरः ॥ १२ ॥

**रामः**—(स्वगतम् ।)

अभ्यस्त एष बहुशोऽतिविनीतवृत्ति-
रद्य त्वपूर्व इव हन्त विचेष्टते यत् ।
तज्जोषमेव सकलं हृदि मर्षयन्तः
कार्यार्थिनो हि समये सति विक्रियन्ते ॥ १३ ॥

(प्रकाशम् ।) अयि भो विदग्धभाषिन्, सुष्ठु युज्यमानमुपन्यस्तम् । किंतु न वयं सहायकामाः । असांप्रतं च भवादृशानां प्रथमोपकारिषु परेषु विप्रलम्भः । ततो घटस्व तैरेव । मम तु गतैव वयस्यव्यवहारस्य समुचितिस्थानमाकृतिः । (इति धनुरवलम्ब्य मुह्यति ।)

**लक्ष्मणः**—(विहस्य ।) सत्यमियं मायैव । अथवा ।

ईदृशैरेष चरितैः सत्यं वालिसुतो यदि ।
यदि वा राक्षसो मायी सर्वथा वध्य एष नः ॥ १४ ॥

(इति प्रहर्तुमिच्छाति ।)

**शम्बरः**—कथमिदानीम् । (सदृष्टिक्षेपम् ।) कथमत्यासन्न एव सेनार-

जोभिलक्षितसन्निपातस्तारेयः । तदमुमेव तावदस्य क्रोधान्धस्य सौमित्रेरनन्तरीकृत्य तिरोभवन्पश्यामि । (तथा कर्तुमिच्छति ।)

(प्रविश्य पटाक्षेपेण)

**प्रहस्तः**—आः पाप वानरापसद, पतितमिदानीं ते शिरः । (इति बाहुभ्यां शम्बरं गृह्णाति ।)

**लक्ष्मणः**—आः, कोऽयमन्तरात्पतति । (इति विमृशति ।)

(प्रविश्य सन्निपत्य)

**सुग्रीवः**—(स्वगतम् ।)

प्रत्यक्षं राक्षसेन्द्रस्य प्रहस्तादीन्विधून्वता ।
हन्त दूरावपातो मे वत्सेन विफलीकृतः ॥ १५ ॥

अथवा ।

कक्षापीडनपीडितैर्निशिचरैः साकं प्रहस्तादिभि-
र्व्योम्नि स्यन्दनमिन्द्रजेतुरवशभ्रष्टस्य निर्धून्वता ।
यद्वत्सेन किमप्यदर्शि पृथुकक्रीडा तदेतत्फलं
वेगक्षिप्तदशास्यमौलिविततेर्दूरावपातस्य नः ॥ १६ ॥

(इति दृष्ट्वा सरभसं किंचिदपक्रम्य । प्रकाशम् ।)

सुग्रीवेऽपि मयि स्वयं कथमसिं धत्ते कुमारो रुषा

**लक्ष्मणः**—(खड्गमुपसंहरन् ।) किं नाम सुग्रीव इति ।

**प्रहस्तः**—आः पाप, चिरस्य खलु कालस्य मद्भुजपञ्जरान्तरमनुप्रविष्टोऽसि । उत्पाटयामि ते मूर्धानम् ।

**सुग्रीवः**—

सुग्रीवेऽपि मयि स्थिते निशिचरो गृह्णाति वत्सं कथम् ।

**लक्ष्मणः**—दिष्ट्या, आर्य, अलमलं व्यासङ्गेन । इह कोऽप्ययमग्रे सुग्रीव इत्यात्मानमाम्रेडयति ।

**सुग्रीवः**—(दृष्ट्वा ।)

देवो हन्त कथं विमुञ्चति धनुः संधारितैरङ्ककैः

**रामः**—सुग्रीव इत्यमृतबिन्दुसंधितान्यतीतस्यापि वत्सस्य नामाक्षराणि मामाप्याययन्ति ।

**सुग्रीवः**—

कष्टं केन मदत्ययं कथयता देवः कदर्थीकृतः ॥ १७ ॥

(उपसृत्य प्रणमति।)

**रामः**—(दृष्ट्वा।) कथं वयस्य एव।

**सुग्रीवः**—कः संदेहः।

**रामः**—

यथा दृष्ट्वैव हन्तेममन्तरात्मा प्रसीदति।
तथा प्रियवयस्येन भवितव्यमनेन मे ॥ १८ ॥

एहि वयस्य साहसिक, एहि।

**सुग्रीवः**—नन्वेष दासः प्रणमामि। (पुनः प्रणमति।)

**लक्ष्मणः**—आर्य, मा कुरु सहसा कुत्रापि विश्वासम्।

**रामः**—वत्स, अद्यापि कथमश्रद्धा। ननु वदामि वयस्य एवायमिति।

**सुग्रीवः**—कष्टमतिकृच्छ्रप्रत्यापनीयः संवृत्तोऽस्मि। (पुनश्च प्रणमति।)

**रामः**—(आलिङ्गय।)

यैरारम्भि हृदि स्पृहा परिभवोत्तारे शरीरेऽपि मे
यानि द्रागनुमार्जयन्ति भरतानाश्लेषदुःखं चिरात्।
दृष्ट्वा यानि समस्तबन्धुविरहक्लेशोऽपि न स्मर्यते
दिष्ट्या तानि मयाङ्गकानि सुहृदो लब्धानि दीर्घायुषः ॥ १९ ॥

(इति हर्षपारवश्यमभिनयति।)

**सुग्रीवः**—हन्त, लज्जयेव मीलयति मामतिवत्सलतया देवपादानामस्थानप्रवृत्ता मुहुरत्युक्तिः। (हर्षलज्जापारवश्यमभिनयन्।) नन्विह प्रच्छायशीतले शिलातले देवमाश्वासयामि। (रामं शनैरपनयन्निष्क्रान्तः।)

**लक्ष्मणः**—आर्य, ननु वदामि मा कुरु सहसा कुत्रापि विश्वासम्। महानयं विचारावसरः। (सहैव निष्क्रान्तः।)

**प्रहस्तः**—आः पाप, चिरस्य खलु कालस्य मद्भुजपञ्जरान्तरमनुप्रविष्टोऽसि। उत्पाटयामि ते मूर्धानम्। तदिह विषमशिलासंकटे निपात्य यथासमीहितं संपादयामि।

**शम्बरः**—कथं जाम्बवत्करात्कथमपि परिभ्रष्टः पुनरपि गृहीतः संप्रमुग्धोऽस्मि । (इति पर्याकुलः प्रहस्तेन नीयमानो निष्क्रान्तः ।)

इति तृतीयोऽङ्कः ।

---

चतुर्थोऽङ्कः ।

(ततः प्रविशति जाम्बवान्दधिमुखश्च ।)

**जाम्बवान्**—(विमृश्य ।) भद्र, किमाह भवान् ।

नाहं ब्रवीमि रघुपुंगवसंनिधाने
तारासुतस्य दशकण्ठबलप्रवेशम् ।
तन्निग्रहं गदितुमापतितस्तु दृष्टो
लेखावलोकसमयेऽस्मि पथि त्वयेति ॥ १ ॥

तर्हि वक्तव्यं स तावदङ्गदस्य परपक्षानुप्रवेशवादी राक्षसो लेखावलोकनाय मया मुक्तहस्तस्त्वद्रूपधारी त्वामेव तावत्कालिकयादृच्छिकसंनिधानमन्तरीकृत्य मे तिरोभूत इति ।

**दधिमुखः**—ननु वदामि तिरोभूतश्च विभीषणीभूय घातयितुमुपक्रान्तवानिति च ।

**जाम्बवान्**—भद्र, एवमिदम् । अत एव किल मुद्रितेषु सर्वेषु वानरेषु दधिमुखस्त्वेको नागत इति स्वयमेव स्मृतं महाराजविभीषणेन ।

**दधिमुखः**—उपपद्यते । अथ युष्मन्मुखाकर्णितमद्बन्धनवृत्तान्तेन च किं प्रतिपन्नम् ।

**जाम्बवान्**—किमन्यत् । वञ्चितौ युवां केनापि मद्रूपधारिणा राक्षसेनेति । (विहस्य ।) यावन्मोचितोऽसि । भद्र,

नैतन्मनसि कर्तव्यं यत्त्वं कार्यानुरोधिना ।
नियन्त्रितो मया मोहादेतावन्तमनेहसम् ॥ २ ॥

**दधिमुखः**—उपकृतं नन्वार्येण ।

वधाय रक्षः प्रहितोऽप्यार्यो रोधेन केवलम् ।
प्रतीक्षमाणो रामाज्ञां प्राणान्रक्षितवान्मम ॥ ३ ॥

**जाम्बवान्**—भद्र, तदा च स हि दुरात्मा भवद्बन्धनानन्तरमेव सेनानिवेशावलोकनव्याजान्निःसृतो न ज्ञायते महाराजरामदेवसंनिधाने कुमारलक्ष्मणस्य पुरश्च किमाचरतीति । तदेहि तावत् । त्वरिततरं संभावयावः ।

(परिक्रामतः ।)

**दधिमुखः**—कथमुपलब्धव्या प्रवृत्तिः स्वामिनः सुग्रीवस्य ।

**जाम्बवान्**—ननु तदिदानीमेव कमपि मणिमद्भुताकारमम्बरतलपरिभ्रष्टोऽयमवलोक्यतामिति महाराजविभीषणाय निवेदयित्रा कथितममात्यसंपातिना । यथा ग्रहणप्रवृत्तं सामात्यमवधूय दशाननमवप्लुतो रामदेवसमक्षं देवसुग्रीव इति ।

**दधिमुखः**—तर्हि यावदस्य प्रत्यनन्तरीभवामि ।

**जाम्बवान्**—कथमुत्तरगोपुरोद्देशमनुपतितो महाराजरामदेवः । तदुपसर्पावः ।

(उत्प्लवननाटितकेन निष्क्रान्तौ ।)

**विष्कम्भः ।**

---

(ततः प्रविशति शम्बरं गृहीत्वा प्रहस्तः ।)

**प्रहस्तः**—(साटोपम् ।)

आः पाप स्फुरसि वृथैव चेष्टसे किं
तारेयापसद पुनर्न तेऽस्ति मोक्षः ।
नन्वेष त्वरितबृहत्प्रहस्तबाहा
यन्त्रान्तर्निगलित एव कण्ठनालः ॥ ४ ॥

तदिह विषमशिलासंकटे निपात्य मूर्धानमुत्पाटयामि ।

**शम्बरः**—(स्वगतम् ।) कथं सेनापतिरेव तारेयबुद्ध्या मे कण्ठं व्यारुजति । व्याहतं खलु सर्वं मूर्खेण । (प्रकाशं भ्रुवा संज्ञापयति ।)

**प्रहस्तः**—कथमिह वयस्यः शम्बरः । मां तु सैव तारेयग्रहणवासना तद्वेषधारिणि वयस्यशम्बरेऽपि व्याकुलयति । (इति मुञ्चति ।)

(प्रविश्य)

**लक्ष्मणः**—आर्य, अलमलं व्यासङ्गेन । श्रूयतामनयोः संलापः ।

(प्रविश्य)

**सुग्रीवः**—कुमार, किमत्र श्रोतव्यम् । का प्रसक्तिरिह वत्सतारेयस्य । ननु स एवायं दुरात्मा शम्बरः ।

(प्रविश्य)

**रामः**—कथमयं शम्बरः । तत्तस्मिन्नुपपद्यते सर्वमिदं संमोहनम् ।

**प्रहस्तः**—सखे शम्बर, सफलय तावत्तारेयवेषधारणपरिश्रममभिलषितानुष्ठानेन । अहमपि तमेव वानरापसदमन्विष्य मूर्धानमुत्पाटयामि । (इति निष्क्रान्तः ।)

**सुग्रीवः**—गृह्यतामयं दुरात्मा तारेयवेषधारी शम्बरः प्रहस्तश्च ।

**रामः**—किमनेन मूर्च्छान्धेन गृहीतेन प्रहस्तहतकेन ।

(ततः प्रविशति जाम्बवान्दधिमुखश्च ।)

**जाम्बवान्**—किं नाम शम्बर इति । नूनमनेनैव तावदसकृत्संमोहकेन भवितव्यम् । (शम्बरं गृहीत्वा ।) विजयतां देवः ।

(दधिमुखः सर्वान्प्रणमति ।)

**रामः**—कथमार्यो जाम्बवान् ।

**लक्ष्मणः**—आर्य, दिष्ट्या ते दधिमुखश्च ।

**रामः**—दिष्ट्या दिष्ट्या ।

**शम्बरः**—(स्वगतम् ।) कथं पुनरप्युपागतोऽयं जरद्भल्लूकः । न शक्यमिदानीं जीवता प्रतिगन्तुम् ।

**सुग्रीवः**—आर्य जाम्बवन्, अभिवादये ।

**जाम्बवान्**—दिष्ट्या वयमायुष्मता साहसिकेन सनाथाः स्मः ।

**रामः**—आर्य, किं ब्रूमः साहसं वयस्यस्य योऽयमपरिज्ञाप्यैव मे रिपुचक्रमध्यमेक एवावप्लुतः ।

**सुग्रीवः**—नन्वसौ दधिमुख एव मया वत्सतारेयग्रहणप्रवृत्तिमाकर्ण्य सद्य एव लङ्कामभिप्लवमानेन संदिष्टः । विज्ञाप्यतामयं वृत्तान्तो देवायेति ।

**दधिमुखः**—अस्मि संदिष्टो महति सेनासंमर्दे देवपादानन्विच्छन्नार्यजाम्बवतो यावदवलोकपथमापतितस्तावदनेन दुरात्मना—(इत्यर्धोक्ते ।)

**जाम्बवान्**—देव, अतिमहदस्ति वक्तव्यमनेन दुरात्मना। यदावयोराचरितं संमोहनम्। (इति शम्बरं निर्दिशति।)

**लक्ष्मणः**—आवयोरपीति वक्तव्यम्।

**रामः**—तर्हि विस्रब्धोपविष्टैरस्माभिश्रवणीयोऽयमुपोद्घातः।

**लक्ष्मणः**—क्व पुनरिदानीं तारेयः।

**सुग्रीवः**—

अवधूय प्रहस्तादीनापतन्नभ्रवर्त्मना।
अन्तरा मेघनादाद्यैरद्यायमभियुज्यते॥ ५॥

**रामः**—कथमयं प्रहस्तो वत्सतारेयेणैव निर्धूतः।

**लक्ष्मणः**—ननु तदिदमुद्घोषितमेव तारेयवेषमात्रदर्शनगृहीतशम्बरेण तद्ग्रहणवासनारणरणिकग्रस्तेन प्रहस्तेन। अयं तु दुरात्मा सुग्रीवं वयस्त्यापनाय समरमुपपादयन्नन्यथैवेदमुदाहृतवान्।

**रामः**—एवमिदम्। अथ कीदृशो मेघनादाभियुक्तस्य तारेयस्य वृत्तान्तः।

**सुग्रीवः**—यादृशः प्रहस्तादिभिरभियुक्तस्य।

**रामः**—किमनेन सोऽपि निर्धूतः।

**सुग्रीवः**—अथ किम्।

**लक्ष्मणः**—साधु रे वालिपुत्र, साधु।

**रामः**—महावीरः खल्वसौ मेघनादः। तस्य किमेतेन। ततस्ततः।

**सुग्रीवः**—ततश्च निजनिजयुवराजयोः प्राथमिकाविमौ जयपराजयौ दृष्ट्वैव।

सद्यः सांध्यमरीचिदत्तबहलीभावैरियं वानरै-
राक्रान्ता परितः पुरी पलभुजामेकौघतामागतैः।
सद्यश्च क्षणदाचरैस्तत इतः सर्वाभिसारोद्यतै-
रारब्धः समरः प्रवृत्ततिमिरप्रस्तारविस्तारितैः॥ ६॥

तत्र महति समरोत्सवे वत्समतिचिरविप्रयुक्ता देवपादा इति यथोपनतकतिपयसहायमेव नियुज्य नासीरे सरभसमापतन्ननेन दुरात्मना मृषा मद-

त्ययकथकेन वृथैव विक्लवीकृतानुपलब्धवानसि देवपादान् । अस्तु वा तावदेवम् ।

अनुचरविरहेऽपि सतामात्मौपयिकीक्रिया चलत्येव ।
नहि धूमविरतिखिन्नो विरमति शुष्कवनदाहतो वह्निः ॥ ७ ॥

**रामः**—वयस्य, किंबहुना । मत्पादस्पृष्टिकया मा पुनरीदृशानि साहसानि कृथाः ।

**शम्बरः**—(स्वगतम् ।) कथमयं सुग्रीवः । आकृतिसादृश्यादयमेव मे तारेय इत्यभिज्ञातः । (प्रकाशम् ।) विमृशन्तु स्वामिपादाः ।

**लक्ष्मणः**—कृतमनया पञ्चिकया । ननु प्रवृत्त एव सङ्ग्रामः ।

**रामः**—तदेहि वत्स, निशावतरणरमणीयभीषणं हरिराक्षससेनयोरायोधनमवलोकयन्तो दशाननाभियोगमनुपालयावहे ।

**जाम्बवान्**—का पुनरस्य प्रतिपत्तिः शम्बरस्य ।

**लक्ष्मणः**—नन्वयमुत्खात एव खङ्गः । (प्रहर्तुमिच्छति ।)

**रामः**—किमस्मिन्हस्तगृहीते शम्बरे शस्त्रव्यापारेण ।

**सुग्रीवः**—तर्हि किष्किन्धायामेव गुहायां दृढबन्धने पातयितव्यः ।

**रामः**—आसङ्ग्रामसमापनादेवमस्तु । इदं तु विचिन्त्यते कथमस्य विभीषणस्वहस्तमुद्राविन्यासलाभ इति ।

**जाम्बवान्**—देव, किमिदमाश्चर्यमस्मिन् । यतः शतमाय एष शम्बरः ।

**रामः**—साधु रे शम्बर, साधु ।

**शम्बरः**—(स्वगतं विमृश्य ।) बद्धेऽपि मयि शक्यमिदानीं यातुधानैरुच्छ्वसितुं यदेष निर्वर्तितकाद्रवेयावाहनः कुमारमेघनादः सिद्धिवटमूलादुत्थितः स्वयमभ्यमित्रीणश्च संवृत्तः । भवत्वेवं तावत् । (प्रकाशम् ।) ननु विज्ञापयामि विमर्शन्तु स्वामिपादा इति । यतः ज्ञायते खलु नैकृतिकत्वं निशाचराणां तदेते खलु प्रथमस्वीकृतसुग्रीववधमहोपकारस्य प्रत्युपकारमन्तरेणैव भवत्पादमूलसेवनमसहमानाः सुग्रीव इति जाम्बवानिति । दधिमुख इति किमपि दर्शयन्तो भवन्तं व्याकुलयन्ति ।

**लक्ष्मणः**—धिक् प्रलापः।

**जाम्बवान्**—भद्र, सत्यमेव वयं यातुधाननैकृतिकाः। त्वं किल वालिसूनुस्तारेयः। तदेहि तावदवस्थाप्यसे पित्र्ये पदे किष्किन्धायाम्। (इति शम्बरेण सह निष्क्रान्तः।)

**रामः**—आश्चर्यमाश्चर्यम्।

यत्सत्यमभितः स्तब्धैरिन्द्रियैरिन्द्रजालवत्।
अद्भुतैकरसावृत्तिरन्तर्मीलयतीव माम्॥ ८॥

(नेपथ्ये कलकलः।)
(सर्वे आकर्णयन्ति।)
(पुनर्नेपथ्ये।)

यावत्तारेययादृच्छिकहतिशिथिलान्यम्बरस्रग्विभूषा-
शस्त्राङ्गत्राणि भृत्याः कथमपि न समीकुर्वते शक्रजेतुः।
तावत्संतर्जयन्नः स च कलितकरास्फालघोराट्टहास-
व्यासक्तां क्रोधमूर्च्छामिव तिमिरमयीमाशु मायां विवेश॥ ९॥

किं च।

द्राक्च द्यौः किं हरिद्भ्यः किमु किमु धरणेर्ज्ञायते नैव तत्वं
दीपे नष्टेऽन्धकारैरिव बलमहिभिश्छाद्यते वानराणाम्।
व्यामूर्च्छद्वेदनानां द्विरिह कथयितुं वाचि लुप्तैव शक्तिः
तन्नः कर्णानुकर्ण्या ननु झटिति महाराज रामः शृणोतु॥ १०॥

**रामः**—(आकर्ण्य।) वत्स, समागतस्ते वीरगोष्ठीविनोदसंविभागश्चिरकालकाङ्क्षितो राक्षसलोकयुवराजः।

**लक्ष्मणः**—आर्य, भवेदेवं यद्यसौ न पलायेत।

**रामः**—वत्स, मा मैवम्।

चिराय देवासुरलोकनाथैर्मनोरथप्रार्थितदुर्लभानि।
उत्कर्षमायोधनसाधनानि शंसन्ति वीर्यार्जितमिन्द्रजेतुः॥ ११॥

तथाहि पश्य।

घोरा दत्तवराः शरा विषधरास्तन्त्रास्त्रयोः कौशलं
मायाविश्वविधायिनी दिवि रथः साङ्ग्रामिकः कामगः।

तन्नैसर्गिकमूर्जितं भुजबलं साङ्गं तदस्त्रं विधे-
रेष्वेकैकमलं जगन्ति मथितुं सर्वाणि चेत्किं पुनः ॥ १२ ॥

**सुग्रीवः**—देवनिपातभूयिष्ठा एव सर्वे सनायकाः कपिसैनिकाः । किं बहुना ।

यथाग्रे घोरफूत्कारा भोगिबाणाश्चरन्त्यमी ।
तथा निर्जितसैन्योऽसावस्मानेवाभिवर्तते ॥ १३ ॥

**रामः**—एवमिदम् । (सर्वतोऽवलोक्य ।) अतिविचित्रं खल्वायोधनमस्य वीरस्य ।

न हेषारथ्यानां न खुरपुटकोटीपटपटो
न मौर्वीनिर्घोषो न रथचरणक्रेङ्कितमपि ।
अपि प्रत्यासन्नं वदति युवराजं पलभुजा-
मसौ विष्वङ्मूर्च्छन्भुजगशरफूत्कारपवनः ॥ १४ ॥

तथाहि ।

ताम्रे कद्रुदृशि प्लवङ्गवदने पृष्टस्फुलिङ्गोत्करो
गोलाङ्गूलमुखे कियत्सिमिसिमाकारीवनश्मश्रुणि ।
भल्लूकेषु च रोमशेषु ततया दृश्यः क्षणं ज्वालया
मूर्च्छन्निन्द्रजितं व्यनक्ति फणिनां फूत्कार एवागतम् ॥ १५ ॥

तद्वयस्य, पर्यवस्थापय पलायितुमप्यशक्तां हरिवाहिनीम् ।

**सुग्रीवः**—यावदाश्वास्य हरिवाहिनीमाविश्य गगनतलमन्विष्य निपातयामि मायानिगूढमेनं दुरात्मानम् । (उत्प्लवननाटितकेन निष्क्रान्तः ।)

**दधिमुखः**—यावदिमं वृत्तान्तं महाराजविभीषणाय निवेदयामि । (इति परिक्रामति ।)

**रामः**—भद्र दधिमुख, मद्वचनादुच्यतां वयस्यसुग्रीवः मा कुरु जातु साहसमिति ।

**दधिमुखः**—यदाज्ञापयन्ति देवपादाः । (इति निष्क्रान्तः ।)

**लक्ष्मणः**—कथमवप्लुतमात्र एव निबद्धनिश्चेतन आपतितो महाराजसुग्रीवः । का कथा दधिमुखस्य ।

**रामः**—अहो बलमस्त्रराजस्य ।

येषां मन्दरमन्थरज्जुरपि सा वोढुं भुजानक्षमा
ते सुग्रीवहनूमदङ्गदनलप्रष्ठाः प्लवङ्गेश्वराः ।
यैः सर्वे युगपन्निबद्धपतिता निश्चेष्टनिश्चेतना-
स्तेऽमी शक्रजिता तपोबलजिता मन्त्रात्मका भोगिनः ॥ १६ ॥

तद्वत्स, महागरुडमस्त्रामनुसंधातव्यम् । (विकटं परिक्रम्य ।) भो भो हरियूथपाः, न भेतव्यं न भेतव्यम् । अयमहमागत एव ।

**लक्ष्मणः**—अहो मायातिरोधानमात्रगर्वितो राक्षसापसदः ।

नन्वेतस्मिन्खलु कथमपि व्योमगर्भान्तराले
संच्छन्नेनाप्यसकृदमुना सर्वथा धावितव्यम् ।
एतद्विष्वक्तशरशतान्योन्यसंघट्टरिङ्ग-
ज्ज्वालास्फालैः स्फुटतु पतितः पुङ्खवातोत्तरङ्गैः ॥ १७ ॥

(निष्क्रान्ताः सर्वे ।)

**इति चतुर्थोऽङ्कः ।**

---

पञ्चमोऽङ्कः ।

(ततः प्रविशति माल्यवान् ।)

**माल्यवान्**—(निश्वस्य ।) भोः, कष्टं कष्टम् ।

इह देहिषु विस्फुरणं क्षणिकमिति प्रायशो वादः ।
तदिदं दैवहतेषु प्रत्यक्षं राक्षसेष्वेव ॥ १ ॥

(प्रविश्य)

**मयः**—(निश्वस्य ।) सुष्ठु दृष्टमार्यकेण ।

वत्सेनाद्य निबध्यते नरयुगं बद्धैव तद्वाहिनी-
त्युक्तानि श्रुतिमक्षराणि विविशुर्यावन्न लङ्कापतेः ।
तावत्तत्क्षणकल्पितोत्सवहतिप्रक्षोभिरक्षोभटां
लङ्कामेव हठेन विष्वगविशन्नुल्काकरा वानराः ॥ २ ॥

**माल्यवान्**—सखे दानवराज, किमुच्यते नरयुगमिति । मा मैवं मंस्थाः । पश्य ।

अनस्तिप्रत्यस्त्रे पशुवदवशानां दिविषदा-
मपि प्रायो यस्मिन्बत सहनमेव प्रतिविधिः ।
तदेतन्नागास्त्रं तृणमिव विधूतं यदि तदा
वदामो रामाख्यं ननु किमपि तत्त्वं नरवपुः ॥ ३ ॥

किं बहुना ।

देवोऽसाविति शैवचापदलने सामान्यतो योऽभव-
त्क्षत्रारेर्विजये पुनः परिमितो विष्णुः शिवो वेति यः ।
सोऽयं दाशरथौ हठोपनमतस्तार्क्ष्यस्य साक्षात्सतः
साचिव्ये सति हन्त विष्णुरिति मे तर्कः प्रसादं गतः ॥ ४ ॥

(चिरात्स्मृत्वा परितोऽवलोक्य ।) सखे दानवराज,

अपि स्मरसि सङ्ग्राममस्माकममरैः सह ।
अपि स्मरसि वा तस्मिन्नच्युतस्य विजृम्भितम् ॥ ५ ॥

**मयः**—मातामह, कथं न स्मर्यते ।

नन्वेतत्तटमर्णवस्य तदिदं कूटं त्रिकूटस्य च
द्वारं चापि तदेतदेव विकटं लङ्कापुरस्योत्तरम् ।
देशेष्वेषु जवप्रणुन्नगरुडेनाविद्धपञ्चायुधे-
नार्यौ मालिसुमालिनौ युगपदेवासादितौ विष्णुना ॥ ६ ॥

(माल्यवान्मुह्यति ।)

**मयः**—मातामह, समाश्वसिहि समाश्वसिहि । हन्त, युगादिचरित्राण्यद्य स्मृत्वा हरेः प्रमुग्धोऽसि । अद्य तु यत्कर्तव्यं तत्र न ते वर्तते बुद्धिः ।

**माल्यवान्**—(आश्वस्य ।) ननु प्रकृतैवेयं प्रस्तुता चिन्ता । पश्य ।

कुन्ताघातपलायमानगरुडस्कन्धापवृत्तार्धया
मूर्त्या चक्रमुदीरयन्युधि यथारूपो मयालोकितः ।
मानुष्योचितमानया ननु तथारूपोऽयमालोक्यते
तद्व्यक्तं दनुकेकसीदितिसुतद्रोही स रामायते ॥ ७ ॥

**मयः**—एवमिदम् ।

माया मायेति वृथा महतीयं दुष्प्रसिद्धिरस्मासु ।
नारायणे निविष्टं ननु मायातत्त्वसर्वस्वम् ॥ ८ ॥

तथाहि ।

वराहाकारः सन्यदकृत हिरण्याक्षदलनं
नृसिंहः संहारं यददित हिरण्यस्य कशिपोः ।
बलिं पातालान्तस्तमसि रुरुधे वामनतया
स किं वा नो कुर्याददितिसुतपक्षैकपतितः ॥ ९ ॥

अन्यच्च ।

दनुजदितिजरक्षःपक्षभूरिप्रयत्ना-
दुदितममृतलक्ष्मीकौस्तुभैरावृताद्यम् ।
निखिलमपि सुराणामेव पक्षे चिकीर्षुः
तदितरजनमोहं मोहिनीभूय चक्रे ॥ १० ॥

**माल्यवान्**—सुप्रसिद्धमेतत् । तथा च श्रूयताम् ।

एकश्चतुर्धा जातो यस्तस्यांशः पञ्चमो ह्ययम् ।
सर्वनाशाय सीतेति संमोहयति रावणम् ॥ ११ ॥

**मयः**—उपपद्यते । तत्किमयमर्थो महाराजदशाननाय कदाचिदनुदर्शितो मातामहेन ।

**माल्यवान्**—सखे दानवराज, जानासि खलु रावणस्य साहसिकलक्षणामाजानसिद्धामत्युद्धतां प्रकृतिम् । अस्य हि

अश्रुतिः सकृदुक्तेऽर्थे द्विरुक्ते मुखजिह्मता ।
भूयो विज्ञाप्यमाने तु भुग्नभ्रूकुटिवीक्षितम् ॥ १२ ॥

अतः खलु विभीषणः कार्यवादी निराकृतः ।

**मयः**—अलमलमनेन समयपरित्यागमहापातकिनः स्मरणेन विभीषणस्य ।

**माल्यवान्**—समयपरित्यागमहापातकितापि ते जामातुरेव ।

**मयः**—कियानयं पक्षपातो विभीषणे मातामहस्य ।

विस्मृत्य चिरसत्कारं व्याजयन्नीषदप्रियम् ।
बलेष्वभ्यन्तरीभूतो बद्धवैरस्य यो रिपोः ॥ १३ ॥

**माल्यवान्**—अत्र को दोषो विभीषणस्य । यतः ।

यथास्य न स्याद्व्युत्थानमेवं नास्माभिरीहितम् ।
व्युत्थाने तु कृते तस्य विना रामं न जीवनम् ॥ १४ ॥

**मयः**—तर्हि समानीयतामयमुचितेन तेन संविधानेन ।

**माल्यवान्**—नन्वतिक्रान्त एव तत्समानयनस्यावसरः । पश्य ।

रक्षःश्रीयुवराजभावसमतानिष्पन्नयासूयया
तस्मिन्निन्द्रजिता मुहुः प्रकटितं यद्वैरमत्यूर्जितम् ।
तद्रूढं परिवर्धयन्दशमुखस्तैस्तैर्भयोपक्रमै-
र्बन्धुक्षोभभिया विहाय निधनं व्युत्थानमस्यैहत ॥ १५ ॥

**मयः**—किं बहुना ।

मायैकसारचित्तानामस्माकमिह संगरे ।
विभीषणस्य व्युत्थानं यत्तद्द्वारमपावृतम् ॥ १६ ॥

**माल्यवान्**—सुष्ठु कार्यज्ञ एवासि ।

**मयः**—आश्चर्यम् ।

यद्भ्रात्रोरनयोश्चित्तमेकं प्रीतिवशादभूत् ।
वध्यघातकभावे तद्वर्तते सांप्रतं मिथः ॥ १७ ॥

तत्किं मूलमनयोरेतावतश्चित्तभेदस्य ।

**माल्यवान्**—न किंचिदन्यत् ।

प्रत्यर्पणाय सीतायाः पठन्रामगुणानयम् ।
पक्षपातीति देवस्य परिज्ञातो विभीषणः ॥ १८ ॥

**मयः**—एवमेवैतत् ।

स्नेहनिवृत्तिरसूयाकोपो वैरस्यमीर्ष्येति ।
अप्रियवादिषु राज्ञामन्तःकरणानि भिद्यन्ते ॥ १९ ॥

**माल्यवान्**—एवमनुक्षणोपारूढचित्तभेदश्च । ('रक्षःश्री–'(५।१५)इत्यादि पठित्वा।) व्युत्थितस्य च तस्य नैव रामादन्यत्रशरीरत्राणं प्रयोजनं च । ततश्च ।

उभयोश्च तयोः समेतयोः सहजप्राकृतयोः सपत्नयोः ।
अपवादविनाकृतं चिराद्युगपत्स्येत्स्यति दण्डपातनम् ॥ २० ॥

**मयः**—(विहस्य ।) निसर्गनिरवग्रहस्य महाराजलङ्केश्वरस्यापि केयमपवादाशङ्का । तथापि कुम्भकर्णप्रहस्तादिषु तस्य काचिदस्ति मनागवहित्था ।

**माल्यवान्**—एवमिदम् ।

(प्रविश्य)

**पुरुषः**—जेदु मादामहो । पहत्थवहामरिसिओ महाराअलङ्केसरो सअं एव्व समराहिमुहो पत्थिओ समादिसइ । जह पडिवालिज्जउ सव्वदो सगोवुरो लङ्काउरप्पाआरो । पडिबोधिज्जउ चिरसुत्तो कुमारकुम्भअण्णो । पडिरक्खिज्जउ पमदवणे तिअडामुहाहिं अप्पमत्ताहिं जाणई रक्खसीहिं त्ति । (क)

**माल्यवान्**—(श्रुत्वा । सनिर्वेदं विहस्य ।) सखे दानवराज, श्रुतः किल ते जामातुरादेशः । (निश्वस्य ।)

मृत्युरेषा हि लङ्काया मिथिलाधिपतेः सुता ।
प्रसह्य दशकण्ठेन भवने परिपाल्यते ॥ २१ ॥

**मयः**—मातामह, यद्भावि तद्भवतु । अनुष्ठीयतां राजानुयोगः ।

**माल्यवान्**—(निश्वस्य ।) का गतिः । कः कोऽत्र भोः ।

प्रबोधयतु यूपाक्षः कुम्भकर्णं सकिंकरः ।
रक्षत्वशोकवनिकां राजमित्रं महोदरः ॥ २२ ॥

कुमारमेघनादो ब्रह्मास्त्रमन्त्रसाधनादिषु प्रवृत्त एव स्वयं व्यापारेषु । अतिकायप्रमुखश्च कुमारवर्गः सर्वत्र संक्रमेषु संनद्धः परिभ्रमतु ।

---

(क) जयतु मातामहः । प्रहस्तवधामर्षितो महाराजलङ्केश्वरः स्वयमेव समराभिमुखः प्रस्थितः समादिशति । यथा प्रतिपाल्यतां सर्वतः सगोपुरो लङ्कापुरप्राकारः । प्रतिबोध्यतां चिरसुप्तः कुमारकुम्भकर्णः । प्रतिरक्ष्यतां प्रमदवने त्रिजटामुखाभिरप्रमत्ताभिर्जानकी राक्षसीभिरिति ।

**मयः**—सुष्ठु संविभक्ता एव गुप्तयो लङ्कायाः।

**माल्यवान्**—अथ कथमद्यापि समरादेकापि नागता वार्ता।

**मयः**—अस्ति नन्वद्भुतदर्पणो महामणिरस्मदुपनीतः। तदत्रैव द्रष्टव्यो निखिलोऽपि समरवृत्तान्तो मातामहेन।

**माल्यवान्**—(सनिर्वेदम्।) सोऽपि रामस्यैव हस्तमभिसंक्रामितः।

**मयः**—(सावेगम्।) कथं कथं सोऽपि रामस्यैव हस्तमभिसंक्रामितः।

**माल्यवान्**—ननु वदामि सोऽपि रामस्यैव हस्तमभिसंक्रामित इति।

**मयः**—अहो प्रमादो दशाननस्य।

**माल्यवान्**—किमनेन कर्तव्यम्। यतः।

आकस्मिकप्लुतकपीन्द्रपदाभिघात-
निर्धूतरावणकिरीटतटच्युतेषु।
आशावपातिषु मणिष्वयमेक एव
संपातिना स्वयमदर्शि बिभीषणाय॥ २३॥

तेन चापि परिज्ञातमहिमामणिरद्भुतः।
कालोचिततया सद्यः करं रामस्य लम्भितः॥ २४॥

**मयः**—आर्य, कथय कथय कथं कथमस्य न केवलमद्भुतदर्पणस्य मणेरस्मदपभ्रंशः। प्रत्युत शत्रुहस्तपातश्च।

अस्त्रागमो गाधिसुतादगस्त्याद्धनुरागमः।
अस्मत्प्रमादाच्च मणेरद्भुतस्य समागमः॥ २५॥

**माल्यवान्**—नन्विदमेवास्य यदृच्छाघटितं जयसूचकं रामस्य।

अस्मासु बद्धवैरत्वादमरा ऋषयस्तथा।
सामर्थ्यानुगुणं रामे सांग्रामिकमकल्पयन्॥ २६॥

अन्यच्च।

वृद्धौ वृद्धौ रघुपतेरस्माकं च क्षये क्षये।
प्रकाशं विचरिष्यन्ते पाकारिप्रमुखाः सुराः॥ २७॥

**मयः**—मातामह, कास्ति शक्तिरमराणामन्येषां वा महाराजलङ्केश्व-

रस्य किंकरेष्वपि स्पष्टमपराद्धुम् । (दृष्ट्वा ।) कथं समरादिव समायाति विद्युज्जिह्वः ।

**माल्यवान्**—तदेतन्मुखादुपलभ्य समरवृत्तान्तमुपनियुज्य च विजयाय कुम्भकर्णमेघनादावुत्पश्यामश्च कार्यशेषम् ।

(इति निष्क्रान्तौ ।)

**इति विष्कम्भः ।**

(ततः प्रविशति विद्युज्जिह्वः ।)

**विद्युज्जिह्वः**—आदिष्टोऽस्मि समरगतेन महाराजलङ्केश्वरेण । यथा—

रामश्च कुम्भकर्णेन लक्ष्मणश्चेन्द्रवैरिणा ।
यथा भवेतां सुदमौ तथा बाणैर्मया कृतौ ॥ २८ ॥

तदनयोरतिकृपणयोरुपरि निपतन्ती लज्जते मद्बाहुसृष्टा बाणवृष्टिः । अतश्च तयोः समापनाय नियुज्य वत्सकुम्भकर्णमेघनादौ त्वरिततरमहमागत एव । आगतस्य च

वैदेही यदि परिरम्भणं वचो वा
दृष्टिं वा वितरति तावकैरुपायैः ।
तल्लाभं घटयति ताटकासुते यः
संमोदः स बहुगुणो मम त्वयि स्यात् ॥ २९ ॥

इति । (दृष्ट्वा ।) तत्र सहायतया निर्दिष्टो महाराजलङ्केश्वरस्य नर्ममित्रं महोदर इत एवाभिवर्तते ।

(प्रविश्य)

**विदूषकः**—आदिट्ठोह्मि समराहिमुहपत्थिएण महाराअलङ्केसरेण । जह अइ वअस्स महोदर, जं वअस्सविज्जुज्जीहो अणुचिट्ठइ तत्थ तुए सहाएण होदव्वम् । (संस्कृतमाश्रित्य 'वैदेही' (५।२९) इत्यादि पठित्वा परिक्रामन् ।) दिट्ठिआ चिरस्स संपुण्णो मे अज्ज एसो अपूरिअपुव्वो पिचण्डभरो । ता संणिहं गच्छम्मि । (बाहुभ्यामुदरं परिगृह्य परिक्रामति ।) (क)

---

(क) आदिष्टोऽस्मि समराभिमुखप्रस्थितेन महाराजलङ्केश्वरेण । यथा अयि वयस्य महोदर, यद्वयस्यविद्युज्जिह्वोऽनुतिष्ठति तत्र त्वया सहायेन भवित-

**विद्युज्जिह्वः**—दिष्टया समागत एवायमखिलब्रह्मराक्षसकुलमहोपाध्यायो महाराजलङ्केश्वरस्य कामार्थतीर्थमर्मज्ञो नर्मसुहृन्महोदर इत एवाभिवर्तते । य एष

मज्जास्नेहविनिष्पक्वमांसमोदकखादनैः ।
विजिह्मितमुखो मन्दं विह्वलं चाभिवर्तते ॥ ३० ॥

आर्य महोदर, इत इतस्तावत् ।

**महोदरः**—कहं मए पच्चग्गमंसमोदआणं परिपूरिअपिचण्डएण पवणतणअबाहूरुवेअपरिभञ्जिअपावअसंकुले एत्थ पमदवणे सरभसं आहिण्डिदव्वम् । (क)

**विद्युज्जिह्वः**—एवमेतत् ।

भग्नोऽत्र चैत्यप्राकारो वृक्षैरामूलितैर्वृतः ।
कुरुते रोधमभितः कुम्भकर्णो यथा हतः ॥ ३१ ॥

**महोदरः**—सन्तं पव्वं सन्तं पव्वम् । किं णाम जप्पिअं अज्ज विज्जुज्जीहेण । (ख)

**विद्युज्जिह्वः**—कथं प्रमादादेव परिस्खलितं मे वचनम् ।

**महोदरः**—को एत्थ पमादो । (ग)

**विद्युज्जिह्वः**—मृतस्य सुप्तस्य न किंचिदन्तरमिति ।

**महोदरः**—अह इं । (घ)

**विद्युज्जिह्वः**—(विलोक्य ।)

---

व्यम् । दिष्टया चिराय संपूर्णो मेऽद्यैषोऽपूरितपूर्वः पिचण्डभरः । तत्संनिधं गच्छामि ।

(क) कथं मया प्रत्यग्रमांसमोदकैः परिपूरितपिचण्डकेन पवनतनयबाहूरुवेगपरिभग्नपावकसंकुलेऽत्र प्रमदवने सरभसमाहिण्डितव्यम् ।

(ख) शान्तं पापं शान्तं पापम् । किं नाम जल्पितमद्य विद्युज्जिह्वेन ।

(ग) कोऽत्र प्रमादः ।

(घ) अथ किम् ।

अथेयं राक्षसीमध्ये शिंशुपायास्तरोरधः ।
राक्षसेन्द्राज्ञया सीता रक्ष्यते राक्षसीजनैः ॥ ३२ ॥

तदितः परं पुरुषान्तरेण न गन्तव्यमिति खलु राजादेशः । तत्त्वया गत्वा मत्समीपमानीयतां वत्सा शूर्पणखा ।

**महोदरः**—(सरोषम् ।) अरेरे अमच्चापसद, कहं दे अहं ण पुरिसो। अह वा किं तुमं एदं जाणासि । पडिसंवच्छरं पसूदा मह बह्मरक्खसी कुण्डोदरी एव्व जाणाइ मे पुरिसत्तणम् । (क)

**विद्युज्जिह्वः**—आर्य, कः संदेहः । किंतु राजदारदर्शनेष्वनियन्त्रणः कृतोऽसि महाराजलङ्केश्वरेण । तत्प्रेषणीया मत्समीपं वत्सा शूर्पणखा ।

**महोदरः**—तह । (इति निष्क्रम्य शूर्पणखया सह प्रविश्य ।) अमच्च, एसा वच्चा सुप्पणहा । (ख)

**विद्युज्जिह्वः**—वत्से शूर्पणखे, संप्रति भवत्या सीतायाः पुरस्तादेवमेवं कर्तव्यम् । (इति कर्णे कथयति । छिन्नं शिरश्चार्पयति ।)

**शूर्पणखा**—तह । (इति गृहीत्वा निष्क्रान्ता ।) (ग)

**विद्युज्जिह्वः**—आर्य महोदर, त्वयापि तदनुगुणमाचेष्टितव्यम् ।

**महोदरः**—एव्वं होदु । (घ)

**विद्युज्जिह्वः**—अहमपि महाराजलङ्केश्वराय तदिदमावेदयामि । (इति निष्क्रान्तः ।)

**महोदरः**—(परिक्रम्य ।) एसो सिंसुवारुक्खो । णं एत्थ एव्व पडिरक्खिज्जइ जाणई रक्खसीहिं । (इत्युपसर्पति ।) (ङ)

---

(क) अरेरे अमात्यापसद, कथं ते अहं न पुरुषः । अथवा किं त्वमेतज्जानासि । प्रतिसंवत्सरं प्रसूता मम ब्रह्मराक्षसी कुण्डोदर्येव जानाति मम पुरुषत्वम् ।

(ख) तथा । अमात्य, एषा वत्सा शूर्पणखा ।

(ग) तथा ।

(घ) एवं भवतु ।

(ङ) एष शिंशपावृक्षः । नन्वत्रैव प्रतिरक्ष्यते जानकी राक्षसीभिः ।

(ततः प्रविशति राक्षसीपरिवृता सीता सरमा च ।)

**सीता**—सहि सरमे, अज्जवि णाअदा पिअसही तिअडा । (क)

**सरमा**—णं रामरावणाणं अण्णोण्णघडिए संगामे जअपराजए दट्ठूण खु ताए आअन्दव्वम् । जइ दे तुवरेदि अप्पा समरवुत्तन्तं परिण्णादुं ता अहं गदुअ तं घेत्तूण तुरिअं आअच्छम्मि । तुमं विस्सद्धा भविअ मुहुत्तअं पडिवालेहि । (इति निष्क्रान्ता ।) (ख)

**सीता**—(साशङ्कम् ।) किं मे कहइस्सइ पिअसही तिअडा समरवुत्तन्तम् । माआविमोहणो क्खु एसो हदासो रक्खसावसदो । (इति पर्याकुला तिष्ठति ।) (ग)

(प्रविश्य)

**शूर्पणखा**—(ससंभ्रममुपसृत्य । सहर्षम् ।) अइ जाणइ, दिट्ठिआ वड्ढसि भत्तुणो रावणस्स विअएण । भग्गो दे रामसमाअममणोरहो सहि, एदेहिं । (इति च्छिन्नं शिरो धनुश्च दर्शयति ।) (घ)

**सीता**—(दृष्ट्वा ।) हा हदम्मि मन्दभाइणी । (इति मुह्यति ।) (ङ)

**राक्षस्यः**—समस्ससिहि समस्ससिहि जाणइ । (च)

**शूर्पणखा**—(स्वगतम् ।) दिट्ठिआ पणट्ठा से सण्णा । (प्रकाशम् ।) समस्ससिहि समस्ससिहि जाणइ । दिट्ठिआ पणट्ठो दे पापसेसो ।

---

(क) सखि सरमे, अद्यापि नागता प्रियसखी त्रिजटा ।

(ख) ननु रामरावणयोरन्योन्यघटिते सङ्ग्रामे जयपराजयौ दृष्ट्वा खलु तयागन्तव्यम् । यदि ते त्वरयत्यात्मा समरवृत्तान्तं परिज्ञातुं तदहं गत्वा तां गृहीत्वा त्वरितमागच्छामि । त्वं विश्रब्धा भूत्वा मुहूर्तं प्रतिपालय ।

(ग) किं मे कथयिष्यति प्रियसखी त्रिजटा समरवृत्तान्तम् । मायाविमोहनः खल्वेष हताशो राक्षसापसदः ।

(घ) अयि जानकि, दिष्ट्या वर्धसे भर्तू रावणस्य विजयेन । भग्नस्ते रामसमागममनोरथः सखि, एताभ्याम् ।

(ङ) हा हतास्मि मन्दभागिनी ।

(च) समाश्वसिहि समाश्वसिहि जानकि ।

सुप्पसण्णो भअवं पुण्णसंभारो । जाए तुह तेल्लोक्केसरो मह भादा अणुरूवो भट्टा संवुत्तो । (क)

**राक्षस्यः**—(सभयम् ।) कहं पणट्ठा से सण्णा । णं दीसइ णिस्सासो। ता को एत्थ विआरो । (ख)

**शूर्पणखा**—किंणिमित्तो विआरो तुह्माणम् । णं सोभणो उवलद्धो अह्माणं माणुसस्स मंसाहारो । (ग)

**राक्षस्यः**—(सभयं सरोषं च शूर्पणखां निर्भर्त्सयन्त्यः ।) अयि मूढे अणत्थआरिणि सुप्पणहे, भक्खणणिमित्तं तुह्मेहिं मारिदा जाणइत्ति परिकुविदो भट्टा जीवन्तीओ एव्व अह्मे कुक्कुराणं भक्खणं कारिस्सदि । ता समरगअस्स भत्तुणो पुरदो एदं जाणईउत्तन्तं णिवेदह्म । तदो जं होइ तं होदु। (इति ससंभ्रमं सर्वा निष्क्रान्ताः ।) (घ)

(प्रविश्य)

**त्रिजटा**—सहि सरमे, सीदादेवीं उज्झिअ कहं पत्थिदासि । (ङ)

---

(क) दिष्ट्या प्रणष्टास्याः संज्ञा । समाश्वसिहि समाश्वसिहि जानकि । दिष्ट्या प्रणष्टस्ते पापशेषः । सुप्रसन्नो भगवान्पुण्यसंभारः । यया तव त्रैलोक्येश्वरो मम भ्रातानुरूपो भर्ता संवृत्तः ।

(ख) कथं प्रणष्टास्याः संज्ञा । ननु दृश्यते निःश्वासः । तत्कोऽत्र विचारः ।

(ग) किंनिमित्तो विचारो युष्माकम् । ननु शोभन उपलब्धोऽस्माकं मानुषस्य मांसाहारः ।

(घ) अयि मूढे अनर्थकारिणि शूर्पणखे, भक्षणनिमित्तं युष्माभिर्मारिता जानकीति परिकुपितो भर्ता जीवन्तीरेवास्मान्कुक्कुराणां भक्षणं कारयिष्यति । तत्समरगतस्य भर्तुः पुरत एतं जानकीवृत्तान्तं निवेदयामः । ततो यद्भवति तद्भवतु ।

(ङ) सखि सरमे, सीतादेवीमुज्झित्वा कथं प्रस्थितासि ।

(प्रविश्य)

**सरमा**—सहि तिअडे, तुमं चिराअसि त्ति अण्णेसिदुं पिअसहीए सीदादेवीए एव्व पेसिदह्मि । कीरिसो समरउत्तन्तो रामरावणाणम् । (क)

**त्रिजटा**—को अण्णो। सअं एव्व संगामधुरंधरे महाराअरामदेवे । ता एहि । जाणईसमक्खं एव्व सव्वं णिवेदइस्सम् । (ख)

**सरमा**—(सस्मितम् ।) सहि, तुह मुहप्पसादो एव्व सव्वं णिवेदेइ । तह वि तत्थ एव्व सुणिस्सं वित्थारम् । (ग)

**उभे**—(उपसृत्य । सहर्षम् ।) सहि जाणइ, दिट्ठिआ वड्ढसि भत्तुणो समरविअअमहूसवेण । (घ)

**सरमा**—(दृष्ट्वा ।) कहं गाढणिद्दापरवसा विअ एसा लक्खिज्जइ । (ङ)

**त्रिजटा**—सहि, कुदो एदाए तवस्सिणीए महाराअरामदेवविरहदिअहादो आरम्भिअ णिद्दावआसो । ता सुप्पणहाए किं वि अच्चाहिदं आअरिदं हवे । सा क्खु अमच्चविज्जुज्जीहेण सह विअणे किंवि मन्तअन्ती आसी । सो वि ईरिसेसु भीरुअणकदत्थणेसु सअं एव्व णिच्चसंणद्धो । किं उण भत्तुणो णिओएण । (च)

---

(क) सखि त्रिजटे, त्वं चिरयसीत्यन्वेष्टुं प्रियसख्या सीतादेव्यैव प्रेषितास्मि । कीदृशः समरवृत्तान्तो रामरावणयोः ।

(ख) कोऽन्यः । स्वयमेव सङ्ग्रामधुरंधरो महाराजरामदेवः । तदेहि । जानकीसमक्षमेव सर्वं निवदेयिष्यामि ।

(ग) सखि, तव मुखप्रसाद एव सर्वं निवेदयति । तथापि तत्रैव श्रोष्यामि विस्तारम् ।

(घ) सखि जानकि, दिष्ट्या वर्धसे भर्तुः समरविजयमहोत्सवेन ।

(ङ) कथं गाढनिद्रापरवशेवैषा लक्ष्यते ।

(च) सखि, कुत एतस्यास्तपस्विन्या महाराजरामदेवविरहदिवसादारभ्य निद्रावकाशः । तच्छूर्पणखया किमप्यत्याहितमाचरितं भवेत् । सा खल्वमात्यविद्युज्जिह्वेन सह विजने किमपि मन्त्रयमाणासीत् । सोऽपीदृशेषु भीरुजनकदर्थनेषु स्वयमेव नित्यसंनद्धः । किं पुनर्भर्तुर्नियोगेन ।

**सरमा**—सहि, अहं वि तह एव्व मन्तेमि। (क)

**त्रिजटा**—सहि, चिट्ठदु एदम्। पेक्ख दाव पाणसंसअं आवण्णं पिअसहिं जाणइम्। (अश्रूणि वर्तयति।). (ख)

**सरमा**—णं भत्तुणो तेल्लोक्कदुल्लहं विअअमहूसवं अ आणन्ती महातवस्सिणी संतप्पइ। पडिवाहेम णम्। (ग)

(उभे सीताया उरसि ललाटे च हस्तं दत्तः।)

**त्रिजटा**—सहि जाणइ, अहवा देवि जाणइ, णं भणामो दिट्ठिआ वड्ढसि भत्तुणो विअअमहूसवेणेत्ति। (घ)

**सरमा**—जाणइ, णं भणामो दिट्ठिआ वड्ढसि भत्तुणो विअअमहूसवेणेत्ति। (ङ)

**सीता**—(नयने शनैरुन्मील्य।) ता इदं एव्व भत्तुणो सीसअं धणुं अ परिरम्भिअ इमादो दारुपव्वदादो अत्ताणं ओधूणिअ णिव्वुदा भविस्सम्। (धनुश्च शिरश्च परामृशन्ती। दृष्ट्वा।) कहं एदं वि मे मन्दभाइणीए अदंसणं गअम्। (पुनर्मुह्यति।) (च)

**उभे**—(सबाष्पम्।) समस्ससिहि समस्ससिहि पिअसहि, अज्ज पणट्ठा दे अधण्णदा। अज्ज सुप्पसण्णो भअवं पुण्णसंभारो। (छ)

---

(क) सखि, अहमपि तथैव मन्त्रये।

(ख) सखि, तिष्ठत्वेतत्। पश्य तावत्प्राणसंशयमापन्नां प्रियसखीं जानकीम्।

(ग) ननु भर्तुस्त्रैलोक्यदुर्लभं विजयमहोत्सवं च जानती महातपस्विनी संतप्यते। प्रतिवाहयाम एनाम्।

(घ) सखि जानकि, अथवा देवि जानकि, ननु भणामो दिष्ट्या वर्धसे भर्तुर्विजयमहोत्सवेनेति।

(ङ) जानकि, ननु भणामो दिष्ट्या वर्धसे भर्तुर्विजयमहोत्सवेनेति।

(च) तदिदमेव भर्तुः शीर्षं धनुश्च परिरभ्यास्माद्दारुपर्वतादात्मानमवधूय निर्वृता भविष्यामि। कथमेतदपि मे मन्दभागिन्या अदर्शनं गतम्।

(छ) समाश्वसिहि समाश्वसिहि प्रियसखि, अद्य प्रणष्टा तेऽधन्यता। अद्य सुप्रसन्नो भगवान्पुण्यसंभारः।

**त्रिजटा**—णं मणस्सिलातिलअकप्पणफलअकवोलचुम्बणं लज्जालुनीए वि मए अज्जउत्तस्स एक्कवारं अप्पडिसिद्धं आसि त्ति तुए एव्व कहिअवअणाहिण्णाणं धारेन्ती किं दे अहं सच्चं तिअडह्मि । आदु अहं पि दे माआ । (क)

**सीता**—(समाश्वस्य सलज्जं त्रिजटामालिङ्गय ।) पिअसहि, कीस मं लज्जालुणं भूयो वि लज्जावेसि । (ख)

**सरमा**—सहि तिअडे, दाणिं एव्व विज्जुज्जीहकप्पिदेण सुप्पणहाए दंसिएण माआसंमोहणेण मुच्छिअं कहं वि अह्मवअणबीअसंगमेत्तएण पुणो वि पच्चुज्जीविआं तेल्लोक्कणाहं वि दाणिं अणाहं जाणइं णारुहसि तवस्सिणिं उवालद्धुम् । (बाष्पं विकिरति ।) (ग)

**त्रिजटा**—सहि, सच्चं भणइ सरमा । ता सुणाहि भत्तुणो इदं पुढमं रावणविअअउत्तन्तम् । (घ)

**सरमा**—सहि तिअडे, किं परोक्खेण कहणेण । पच्चक्खं एव्व दंसेहि सव्वं रामरावणाणं अण्णोण्णसमरवुत्तन्तं पिअसहिए जाणइए । (ङ)

---

(क) ननु मनःशिलातिलककर्तनफलककपोलचुम्बनं लज्जालुकयापि मयार्यपुत्रस्यैकवारमप्रतिषिद्धमासीदिति त्वयैव कथितवचनाभिज्ञानं धारयन्ती किं तेऽहं सत्यं त्रिजटास्मि । अथवाहमपि ते माया ।

(ख) प्रियसखि, किमिति मां लज्जालुकां भूयोऽपि लज्जयसि ।

(ग) सखि त्रिजटे, इदानीमेव विद्युज्जिह्वकल्पितेन शूर्पणखया दर्शितेन मायासंमोहनेन मूर्छितां कथमप्यस्मद्वचनबीजसङ्गमात्रेण पुनरपि प्रत्युज्जीवितां त्रैलोक्यनाथामपीदानीमनाथां जानकीं नार्हसि तपस्विनीमुपालब्धुम् ।

(घ) सखि, सत्यं भणति सरमा । तच्छृणु भर्तुरिदं 'प्रथमं रावणविजयवृत्तान्तम् ।

(ङ) सखि त्रिजटे, किं परोक्षेन कथनेन । प्रत्यक्षमेव दर्शय सर्वं रामरावणयोरन्योन्यसमरवृत्तान्तं प्रियसख्यै जानक्यै ।

**त्रिजटा**—जइ अणुमण्णेदि एसा पिअसही जाणई। (क)

**सीता**—(सकौतूहललज्जं त्रिजटामालिङ्ग्य।) सहि तिअडे, तुमं कहेहि कहं मए दिट्ठव्वम्, ण दट्ठव्वं वा चिरदिट्ठस्स अज्जउत्तस्स वच्चलक्खणस्स वा वीराइदम्। (ख)

**त्रिजटा**—(सस्मितम्।)अयि लज्जालुणि, माआविजम्भिअं खु एदम्।(ग)

**सीता**—(सलज्जौत्सुक्यम्।) सहि, चित्तप्पडिकिदिमाआसुचिरदिट्ठो एव्व अज्जउत्तो सवच्चो दट्ठव्वो। (घ)

**सरमा**—आं आं। सहि जाणइ, कहिं विपज्जवत्थावेहि अत्ताणम्। (ङ)

**सीता**—सहिवअणगोरवादो गहिदो क्खणो। (च)

**सरमा**—ता इदो एव्व दारुपव्वदतिरोधाणे सिंसवारुक्खन्तरिआ भविअ पेक्खदु जाणई। दंसेह्मि जं से दंसणिज्जं जाव ण को वि अण्णो जणो एत्थ आअच्छइ। (छ)

**त्रिजटा**—एव्वं एदम्। (ज)

**सरमा**—सहि जाणइ, तहिं एव्व उवसप्पामो। (झ)

---

(क) यद्यनुमन्यत एषा प्रियसखी जानकी।

(ख) सखि त्रिजटे, त्वं कथय कथं मया द्रष्टव्यम्, न द्रष्टव्यं वा चिरदृष्टस्यार्यपुत्रस्य वत्सलक्ष्मणस्य वा वीरायितम्।

(ग) अयि लज्जालुके, मायाविजृम्भितं खल्वेतत्।

(घ) सखि, चित्रप्रतिकृतिमायासुचिरदृष्ट एवार्यपुत्रः सवत्सो द्रष्टव्यः।

(ङ) आं आं। सखि जानकि, कुत्र विपर्यवस्थापयात्मानम्।

(च) सखीवचनगौरवाद्गृहीतः क्षणः।

(छ) तदित एव दारुपर्वततिरोधाने शिंशपावृक्षान्तरिता भूत्वा पश्यतु जानकी। दर्शयामि यदस्या दर्शनीयं यावन्न कोऽप्यन्यो जनोऽत्रागच्छति।

(ज) एवमेतत्।

(झ) सखि जानकि, तत्रैवोपसर्पामः।

**सीता**—णं विहेअह्मि पिअसहीणम् । (क)

(निष्क्रान्ताः सर्वे ।)

**इति पञ्चमोऽङ्कः ।**

षष्ठोऽङ्कः ।

(नेपथ्ये ।)

सहि जाणइ, अवहिदा पेक्ख दाव । भत्तुणो रावणस्स विअअमहूसवं दे दंसेमि । जाव सुप्पणहा अण्णदो गच्छइ । (ख)

(प्रविश्य ।)

**रावणः**—कथमस्मद्विजयमहोत्सवं दर्शयितुमारभते त्रिजटा सीतायै ।

(प्रविश्य ।)

**महोदरः**—भो वअस्स, अह इं । (ग)

**रावणः**—(सहर्षम् ।) सखे महोदर, मद्बोधितेन वयस्यविद्युज्जिह्वेन मायया दर्शितरामधनुःशिरोवृत्तान्तं सीताचित्तभेदाय त्रिजटया दर्शयितुं नूनमयमारभ्यते ।

**महोदरः**—वअस्स, अह इं । (घ)

**रावणः**—तदालोक्य त्रिजटायाः सीताविस्रम्भकौशलमाश्वास्य चानन्यशरणतया मदेकशरणां वैदेहीमवतीर्य समरभुवमवमथ्नामि रामहतकम् ।

(प्रविश्य)

**लक्ष्मणः**—आर्य, प्रलपत्येष वैधवेयः प्राणात्यये ।

(प्रविश्य)

**रामः**—भवतु । पश्य वत्स, तदद्भुतदर्पणेनैव मणिना किमाचारो दशाननः किमद्यापि न निर्यातीति ।

---

(क) ननु विधेयास्मि प्रियसख्योः ।

(ख) सखि जानकि, अवहिता प्रेक्षस्व तावत् । भर्तू रावणस्य विजयमहोत्सवं तव दर्शयामि । यावच्छूर्पणखान्यतो गच्छति ।

(ग) भो वयस्य, अथ किम् ।

(घ) वयस्य, अथ किम् ।

**लक्ष्मणः**—(दृष्ट्वा।) आर्य, कुतोऽस्य निष्क्रमणमन्तःपुरविहारोद्यतस्य जाल्मस्य।

**महोदरः**—भो वअस्स, किं दे पाणसंसअकरेण समरेण। (क)

**रावणः**—(सादरम्।) अथ किमुपायान्तरं मन्यते भवान्।

**महोदरः**—माआमयी का वि सीदा रामस्स पच्चप्पणीआ। तं गेह्णिअ पडिणिवुत्ते ससेण्णे रामे णिरासा पुणो वि तस्स समाअमे भवन्तं एव्व अणण्णसरणा चिररोधकदत्थिदा सेविस्सदि जाणई। (ख)

**लक्ष्मणः**—आर्य, यक्षानुरूपो बलिरिति यत्किंचिदुपायमुपदिशति कामान्धस्य जात्यन्धः।

**रामः**—वत्स, मा मैवम्। बुद्धिशाल्येवायं महोदरः। यदयमनुवर्तते समयेषु राजानम्। यच्च सीताप्रत्यर्पणेन विना नैव तव जीवितलाभ इति भङ्ग्यन्तरेण स्वामिनं प्रबोधयति।

**रावणः**—(सरोषम्। हुंकृत्य।)

धिङ्मूर्ख कातरमहोदरमाययापि
प्रत्यर्पणं वदसि मे जनकात्मजायाः।
तद्ध्यायतस्त्रिभुवनेशवधूषु दत्ता-
स्वालेख्यशेषमवरोधगृहं भवेन्मे ॥ १ ॥

**महोदरः**—सीदामेत्तपच्चप्पणपणबन्धेण पुणोवि अद्दोहमित्तभावं पडिवण्णे ससेण्णे पडिग्गए तुह जह पुरं तेल्लोक्कविजएच्छाविहारो णिप्पच्चूहो चिरस्स संपज्जइ। (ग)

---

(क) भो वयस्य, किं ते प्राणसंशयकरेण समरेण।

(ख) मायामयी कापि सीता रामस्य प्रत्यर्पणीया। तां गृहीत्वा प्रतिनिवृत्ते ससैन्ये रामे निराशा पुनरपि तस्य समागमे भवन्तमेवानन्यशरणा चिररोधकदर्थिता सेविष्यते जानकी।

(ग) सीतामात्रप्रत्यर्पणपणबन्धेन पुनरप्यद्रोहमित्रभावं प्रतिपन्ने ससैन्ये प्रतिग्रहे तव यथा पुरं त्रैलोक्यविजयेच्छाविहारो निष्प्रत्यूहश्चिरस्य संपद्यते।

**रामः**—(सश्लाघम् ।) साधु रे महोदर, साधु ।

न माल्यवान्नैव विभीषणो वा न कुम्भकर्णो न पुनः प्रहस्तः ।
हितं ब्रुवाणो हृदयानुरोधी सत्यं त्वमेवास्य सुहृद्वयस्यः ॥ २ ॥

**लक्ष्मणः**—किमत्र प्रतिपद्यते मूढो दशाननः ।

**रावणः**—वयस्य, किं बहुना । परिज्ञात एव मयायं तवाभिसंधिः, यदर्जुनवालिभ्यामिव सह सख्यमिच्छति मे वयस्यो रामेण ।

**महोदरः**—अह इं । (क)

**रावणः**—(सश्लाघम् ।) सखे महोदर, न केवलं महाकामतन्त्रेषु मे सचिवोऽसि । अपि तु महाराज्यतन्त्रेऽपि । ततश्च श्रूयतां कार्यभागः ।

त्रैलोक्याभयदानदुर्व्यसनिनौ नैवार्जुनेन्द्रात्मजौ
तेनैतौ सुसमाहितौ ननु मया स्वस्वैककार्यार्पणात् ।
रामस्तु त्रिजगत्पतित्वदुरहंकारप्रकारोन्नतः
तत्तद्विश्वहृतैः सहैव तु धनैः सीतार्पणे शाम्यति ॥ ३ ॥

**महोदरः**—णं उववण्णं मन्तिदम् । (ख)

**रावणः**—ततश्च विभीषणस्यापि रामसंकल्पितं प्राप्तमेव मया सह द्वैराज्यं लङ्कायाम् ।

**महोदरः**—एव्वं एदम् । (ग)

**रावणः**—तथा च नित्यानुषक्तमेव वैरमनुक्षणरामकोपकरमस्माकं विभीषणेन स्यात् । अनिर्वासितोऽपि विभीषणः प्रहरेदेव नश्छिद्रेषु ।

**रामः**—वत्स, श्रूयतामस्य बुद्धिनिष्कर्षः कार्येषु ।

**लक्ष्मणः**—भवतु । दृश्यतां द्रष्टव्यम् ।

**महोदरः**—वअस्स, जदि एव्वं सीदापच्चप्पणावसरे एव्व कादव्वो एसो अह्मेहिं एक्को पणबन्धो । (घ)

---

(क) अथ किम् ।

(ख) ननूपपन्नं मन्त्रितम् ।

(ग) एवमेतत् ।

(घ) वयस्य, यद्येवं सीताप्रत्यर्पणावसर एव कर्तव्य एषोऽस्माभिरेकः पणबन्धः ।

**रावणः**—भवतु। कीदृशः।

**महोदरः**—इदो वरं अह्माणं विभीसणेण सह समाओओ ण संभाविज्जइ। ता तुह्मेहिं अङ्गीकिदो एसो सिह्मलराजादो विप्पइट्ठे जत्थकुत्थ वि रज्जे तुह्मेहिं एव्व णिवेसणिज्जो त्ति। (क)

**लक्ष्मणः**—किमत्रोत्तरं पण्डितंमन्यस्य।

**रामः**—श्रोतव्यमेवैतत्।

**रावणः**—न साधु समर्थितं भवता।

स्थापितोऽपि क्वचिद्रक्षो राज्यहिंसां करिष्यति।
आर्थं हि तेन द्वैराज्यं राक्षसाधिपतेर्मम ॥ ४ ॥

**महोदरः**—एव्वं जाणन्तो वि तत्तभवं अतिबलेण संपादिअवन्दो अप्पडिसमाहेअं इत्थिआवेरम्। (ख)

**रावणः**—कृतं गतानुकथनेन। इदानीं तु

रामलक्ष्मणसुग्रीवास्त्रयः स्युर्निहता मया।
सीतास्वयंग्रहाश्लेषचिन्तास्तम्भो न चेद्रिपुः ॥ ५ ॥

**लक्ष्मणः**—आर्य, दुःसंकल्पशतदूषितं हृदयमेवास्य भेत्तव्यम्।

(रामो निश्वस्य धनुः पश्यति।)

**रावणः**—तद्वयस्य महोदर, ममात्र वस्तुन्यवश्यसाधनीयतया सुचिरकाङ्क्षिते

त्वदुपायं च सरमात्रिजटारञ्जनानि च।
विद्युज्जिह्वक्रियां चैव वीक्षे सीतानुरञ्जने ॥ ६ ॥

---

(क) इतः परमस्माकं विभीषणेन सह समायोगो न संभाव्यते। तद्युष्माभिरङ्गीकृत एष सिंहलराजाद्विप्रकृष्टे यत्रकुत्रापि राज्ये युष्माभिरेव निवेशनीय इति।

(ख) एवं जानन्नपि तत्रभवानतिबलेन संपादितवानप्रतिसमाधेयं स्त्रीवैरम्।

**महोदरः**—

विज्जुज्जीहसदेण वि तिअडासरमाण णियुद्दो वा वि ।
सीदाभिअअमकज्जे कड्ढइ जोण्णे प्पदरिसम्भि ॥ ७ ॥ (क)

**लक्ष्मणः**—आर्य, श्रूयताम् । आर्या प्रत्यस्य सुचिरनिष्पादितो बुद्धिनिष्कर्षः ।

**महोदरः**—तहवि जदिस्सं दाव । ता इदो एव्व संणिहिदो एसो सिंसवारुक्खो । (विलोक्य ।) कहं एत्थ ण कोवि जणो दीसइ । (ख)

**रावणः**—कथं न कोऽप्यत्र दृश्यते । (सावेगम् ।)

मय्येषा विरहाकुले हनुमता चोरेण किं चोरिता

**लक्ष्मणः**—स्वयं चोरः परानपि चोरानेव समर्थयते ।

**रावणः**—

किं मे शोधयितुं धृतिं त्रिजटया क्रीडेयमारभ्यते ।
किं वा मे रणवेषभीषिततया कुत्रापि गूढा भवे-
दालीभिः सह राक्षसीभिरयि भोः सीता क्व याता भवेत् ॥८॥

**लक्ष्मणः**—आर्य, कृतं कृतमेतेन चिरमुन्मत्तप्रलपितश्रवणेन । यावदस्य कण्ठकूटं भेत्स्यामि । (शरमुद्धर्तुमिच्छति ।)

**रामः**—वत्स, नन्वयुध्यति तस्मिन्नसंबद्धे च किमायुधग्रहणेन । विशेषतस्तावदुन्मत्ते ।

**महोदरः**—वअस्स, माणुसी खु एसा– (इत्यर्धोक्ते ।) (ग)

**रावणः**—(विहस्य ।) सुलभमृत्युर्मानुषी जातिरिति खलु ते काचिदाशङ्का । श्रूयतां तावत् ।

---

(क) विद्युज्जिह्वशतेनापि त्रिजटाशरमयोर्नियुक्तो वापि ।
सीताभिजयमकार्ये कर्षति यौवने प्रदर्शयामि ॥

(ख) तथापि यतिष्ये तावत् । तदित एव संनिहित एष शिंशपावृक्षः । कथमत्र न कोऽपि जनो दृश्यते ।

(ग) वयस्य, मानुषी खल्वेषा ।

वृथापराधशङ्केयं विनीतेऽपि यमे तव ।
सोऽपि कच्चिदनात्मज्ञः सुग्रीव इव भास्करिः ॥ ९ ॥

**महोदरः**—एव्वं एदम् । (क)

**लक्ष्मणः**—आर्य, दृष्टः किल दुर्मतेरुन्मस्तकोऽयमुन्मादप्रकारः ।

**रामः**—वत्स, मा मैवम् ।

दिक्पालान्दशभिर्दशापि वदनैरध्याप्यहो शासतः
वक्तृव्यत्ययजो नतेषु कलहः शान्तः सपत्नीष्विव ।
एकद्वित्रिकटाक्षपातविषयायैकेऽप्यहो जन्तवः
ते भूस्वर्गरसातलेश्वरपदे दत्ताधिकारा इव ॥ १० ॥

**रावणः**—तथा च वयस्य,

त्वदुपायेन सरमा त्रिजटारञ्जनेन च ।
कियदावर्जिता सीतेत्येतद्द्रष्टव्यमद्य मे ॥ ११ ॥

ततश्च समरमवतीर्य रामलक्ष्मणहतकाभियुक्तयोर्वत्सकुम्भकर्णमेघनादयोरोजायितमवलोकयन्नद्यैव समापयामि सुग्रीवभङ्गतः संग्रामकथाम् । (इति परिक्रामति ।)

**लक्ष्मणः**—आर्य, दिष्ट्या खलु रावणकुम्भकर्णमेघनादास्त्रयोऽपि युगपदेव बाणगोचरमापतन्ति ।

**रामः**—वत्स, अथ किम् ।

**लक्ष्मणः**—आर्य, यद्येकामपि मे शृणोषि विज्ञापनाम्

नैकोऽपि जीवन्मोक्तव्यस्त्रिष्वेतेषु च राक्षसः ।
निहत्य त्रीनिमानद्य सद्यो युद्धं समाप्यताम् ॥ १२ ॥

**रामः**—कः संदेहः ।

**लक्ष्मणः**—किं च ।

लङ्कानामनि नर्मणि त्रिजगतां गाढप्ररूढास्त्रयो-
ऽप्येते संप्रति शल्यशङ्कव इव प्रारब्धघोराधयः ।

---

(क) एवमेतत् ।

आकृष्टास्तव बाणकङ्कवदनैर्दिष्ट्याद्य दृष्टाश्चिरा-
देते तत्र पुनर्विशन्ति न यथा कार्यं तथार्यावयोः ॥ १३ ॥

**रामः**—वत्स, एवमिदम् ।

**लक्ष्मणः**—(दृष्ट्वा ।) आर्य, कथमयं दशमुखहतकः स्वयमशोकवनिकाभ्यन्तरमेव प्रविशति । न पुनरद्यापि संग्रामम् ।

**रामः**—वत्स, शोभते खलु कुम्भकर्णमेघनादयोरखिलत्रैलोक्यसारसमुद्धारसंभावितदोःस्तम्भयोरासञ्जितनिखिलसंग्रामभरस्य स्वैरविहारो लङ्केश्वरस्य ।

**लक्ष्मणः**—अस्तु तावत् ।

अन्तस्तिष्ठन्बहिर्वापि लङ्काया दशकंधरः ।
प्रकाशो वाथ गूढो वा बाणगोचर एव ते ॥ १४ ॥

ततश्च कुम्भकर्णमेघनादौ यावदायोधनभुवमवतरतस्तावदालोक्यतामद्भुतदर्पणेनैव मणिना किमाचारो दशानन इति । नन्वयमेव खलु सर्वप्रकारपरिज्ञातव्यचरितः प्रधानशत्रुरस्माकम् । तदत्रैव स्थितावावाम्

आकारेणैव जानीवः कुम्भकर्णस्य चेष्टितम् ।
विभीषणेन ज्ञाप्येत मेघनादविजृम्भितम् ॥ १५ ॥

अथवा मणिरयमद्भुतदर्पण एव निखिलमवगमयति लङ्काया बहिरन्तश्च वृत्तान्तम् । ततश्च तत्तदुचितं प्रतिविधानमाचरिष्यते समयेषु ।

**रावणः**—कथमिह न सीता राक्षस्यो वा । (इति परिभ्रमति ।)

**महोदरः**—(कर्णं दत्त्वा ।) भो वअस्स, कीडापव्वदपेरन्ते सद्दो विअ सुणीअदि । ता तहिं एव्व गच्छह्म । (क)

**रावणः**—के केऽत्र भोः किंकराणाम् । विज्ञाप्यतामस्मत्पुरतः सर्वोऽपि वत्सकुम्भकर्णमेघनादयोः समरवृत्तान्तः समयेषु युष्माभिः ।

**लक्ष्मणः**—आर्य, समरवृत्तान्तज्ञापनाय किमस्य पुरुषान्तरेण । नन्वावामेव शरनिकृत्तपुरःपातिताभ्यां कुम्भकर्णमेघनादयोः शिरोभ्यामावेदयावः समरवृत्तान्तमन्तःपुरविहारिणो लङ्केश्वरस्य ।

---

(क) भो वयस्य, क्रीडापर्वतपर्यन्ते शब्द इव श्रूयते । तत्तत्रैव गच्छावः ।

**रामः**—भवतु। पश्य किमाचारो दशानन इति।

**रावणः**—वयस्य, तदालोक्य सरमायास्त्रिजटायाश्च सीतामधिकृत्य बन्दिविस्रम्भकौशलमाश्वास्य चानन्यशरणतया मदेकशरणां वैदेहीमवतीर्य समरभुवमवमथ्नामि सकपिस्तोमं रामहतकम्। (इति परिक्रामति।)

**लक्ष्मणः**—प्रलपत्येष वैधवेयः प्राणात्यये।

**रामः**—भवतु। पश्य वत्स, तदद्भुतदर्पणेन मणिना किमाचारो दशाननः। किमद्यापि समराय न निर्यातीति।

**लक्ष्मणः**—(दृष्ट्वा।) आर्य, कः पुनरन्यः समाचारो जाल्मस्य।

महोदरेण तेनैव महामात्येन संयुतः।
अशोकवनिकामध्यमाधावत्याकुलैः पदैः॥ १६॥

**रामः**—(दृष्ट्वा।) वत्स, इदं तदशोकवनं नाम।

**लक्ष्मणः**—अथ किम्। अयं च वृक्षः शिंशपा नाम।

**रामः**—साधु वत्स, सर्वमिदं प्रत्यभिजानासि हनूमदावेदितम्।

**लक्ष्मणः**—आर्य, अथ किम्। (स्वगतम्। निश्वस्य।)

अथेयं शिंशपागूढे क्रीडाभूमिधरान्तिके।
रावणप्रहितैरार्या रक्ष्यते राक्षसीजनैः॥ १७॥

(सबाष्पम्।) अम्ब वैदेहि, चिरादभिवर्तते पादकमलयोरयं लक्ष्मणस्य शिरसा प्रणामपर्यायः। (इति प्रणमति।)

**रामः**—(सवैक्लव्यम्।) वत्स, अपि दृष्टिगोचरा सा रामस्य जीवनाडी। (इति मुह्यति।)

**लक्ष्मणः**—(स्वगतम्।) कथमियमार्याय दर्शनीया कथं वा न दर्शनीया। कष्टमतिमहति संकटे पतितोऽस्मि। (प्रकाशम्।) आर्य, समाश्वसिहि समाश्वसिहि।

**रामः**—(आश्वस्य।)

उपस्थिते लोचनयोरुत्सवेऽस्मिन्ममानयोः।
हा हन्त बाष्पासारो यन्नाद्याप्युज्झति वैरिताम्॥ १८॥

**महोदरः**—इदो इदो वअस्सलङ्केसरो ।(क)

**लक्ष्मणः**—(आकर्ण्य ।) आर्य, विलक्षण एवास्य वीरभावः ।

आततायिनि संनद्धे हन्त त्वय्यभिधावति ।
विशङ्कः संभ्रमेणायं विशत्याक्रीडमेव यत् ॥ १९ ॥

**रामः**—(दृष्ट्वा ।) तदत्र वत्स, शस्त्रागारेण भवितव्यं महामन्त्रतन्त्र-मायासाधनस्थानेन वा । यदयमतिवेगवर्धितसंभ्रमविगणितवेषविपर्यासः स्वावरोधविहारमनन्यजनप्रवेशयोग्यमभिधावत्यशोकवनिकाभ्यन्तरम् ।

**लक्ष्मणः**—किं मत्तस्य विपर्यासधावनेऽपि हेतुमुपक्षिपसि ।

**महोदरः**—इदो इदो वअस्सलङ्केसरो । (ख)

**रावणः**—(परिक्रामन् । विचिन्त्य निश्वस्य च ।) वयस्य महोदर,

रामस्य बाणवेगं न चिन्तयेऽहं तृणावपातमिव ।
कामस्य बाणवेगः कथं नु मयि वज्रपाततामयते ॥ २० ॥

**महोदरः**—वअस्स, एदे दुवे वि रामकामा महासंयत्ता जेदव्वा उवट्ठिदा । (ग)

**रावणः**—अथ किम् ।

**महोदरः**—ताणं एक्कअरविणिज्जए वि दुवे वि णिज्जिआ एव्व । (घ)

**लक्ष्मणः**—आर्य, रावणादपि बुद्धिमत्तरो महोदरः ।

**रामः**—वत्स, अथ किम् ।

**रावणः**—सखे महोदर, साधु समर्थितं भवता ।

सीताकृतेऽभियुञ्जाते रामकामावुभौ च माम् ।
सुनिग्रहस्तयोराद्यो मया दुर्निग्रहः परः ॥ २१ ॥

---

(क) इत इतो वयस्यलङ्केश्वरः ।

(ख) इत इतो वयस्यलङ्केश्वरः ।

(ग) वयस्य, एतौ द्वावपि रामकामौ महासंयत्तौ जेतव्यावुपस्थितौ ।

(घ) तयोरेकतरविनिर्जयेऽपि द्वावपि निर्जितावेव ।

**महोदरः**—सुणिग्गहो विसतु रामो। वअस्सेण संपदं किंत्ति ण णिगिण्हीअदि। (क)

**रामः**—साधु पृष्टं महोदरेण।

**लक्ष्मणः**—अथ किम्।

**रावणः**—सखे महोदर, समाकर्ण्यतामयमनितराकर्णनीयो रावणहृदयाभिसंधिः।

सुबाहुमारीचविराधघाती वैरूप्यकारी स्वसुरेव साक्षात्।
मित्रेऽपि मे वालिनि गूढपापः सीतामपेक्ष्यायमुपेक्षितोऽभूत्॥ २२॥

**महोदरः**—णं उववण्णं मन्तिदं वअस्सेण। सीदां अवेक्खिअ उवेक्खिओ रामो त्ति। जदो अमच्चविज्जुज्जीहेण किंवि माआए रामस्स सीसं एदं दिट्ठमेत्तए एव्व झत्ति मोहं उवगदा। ण आणामि अज्जवि सण्णं पडिवण्णा ण वेत्ति। (ख)

**लक्ष्मणः**—(सरोषं सकरुणं च।) आर्य, श्रुतमार्यायाः संमोहनप्रकारसर्वस्वमस्य नर्मसुहृदा समाविष्कृतम्।

**रामः**—वत्स, अथ किम्।

**रावणः**—(साशङ्कम्।) कथमद्यापि संज्ञा न प्रतिपद्यते वैदेही। (सश्लाघम्।) साधु रे विद्युज्जिह्व, साधु।

असाध्यमन्यथा ज्ञात्वा जानक्या वर्जनं मयि।
आरब्धोऽयं त्वया योगो मानुष्यां राक्षसीष्विव॥ २३॥

**महोदरः**—वअस्स, एवं एदं। सुणाहि एत्थ फलिअं अत्थम्। (ग)

---

(क) सुनिग्रहो विशतु रामः। वयस्येन सांप्रतं किमिति न निगृह्यते।

(ख) ननूपपन्नं मन्त्रितं वयस्येन। सीतामवेक्ष्योपेक्षितो राम इति। यतोऽमात्यविद्युज्जिह्वेन किमपि मायया रामस्य शीर्षमेतद्दृष्टमात्र एव झटिति मोहमुपगता। न जानेऽद्यापि संज्ञां प्रतिपन्ना न वेति।

(ग) वयस्य, एवमेतत्। शृण्वत्र फलितमर्थम्।

**लक्ष्मणः**—आर्य, किमिदं वक्ष्यति फलितमर्थं दशाननहतकस्य ।

**रामः**—वत्स, श्रूयतां तावदवहितेन ।

**महोदरः**—वअस्स, एसो मए सव्वहा णिद्धारिदो अत्थो । (क)

**रावणः**—क इव ।

**महोदरः**—जइ रामो जीवइ तदो तुइ भावबन्धं कदावि ण करिस्सदि सीदा । अह पक्खन्तरे सा एव्व ण जीविस्सदित्ति सव्वहा णत्थि दे जाणईणिरूढस्स दुम्मणोरहस्स फलम् । (ख)

**लक्ष्मणः**—आर्य, धिगयमनात्मज्ञो दुर्मनोरथस्य फलमिति समक्षनिन्दामपि न जानाति मोहान्धः ।

**रावणः**—(विहस्य ।)

ननु जानासि लोकेषु नार्यो बन्दीकृता मया ।
प्रायेण वशमानीताः पातिव्रत्यपरा अपि ॥ २४ ॥

**लक्ष्मणः**—आर्य, पापस्य धिक्प्रलापः । अथवा ।

स्वयंकृतेन पापेन स्वं न श्लाघेत किं स्वयम् ।
यतस्तदा प्रभृत्येनमेकोऽपि न नियच्छति ॥ २५ ॥

**रामः**—वत्स, एवमेतत् ।

**लक्ष्मणः**—अथवा आत्मनि विद्यमानमेव रावणस्य चिराद्दण्डनदोषमन्यत्र संभावयामि ।

**रामः**—वत्स, कः संदेहः ।

**महोदरः**—णं मए एव्व सव्वं इदं साहिअं तुह इत्थिआसहस्ससंवणणम् । (ग)

---

(क) वयस्य, एष मया सर्वथा निर्धारितोऽर्थः ।

(ख) यदि रामो जीवति ततस्त्वयि भावबन्धं कदापि न करिष्यति सीता । अथ पक्षान्तरे सैव न जीविष्यतीति सर्वथा नास्ति ते जानकीनिरूढस्य दुर्मनोरथस्य फलम् ।

(ग) ननु मयैव सर्वमिदं साधितं तव स्त्रीसहस्रसंवननम् ।

**रावणः**—अत एव त्वमिहापि कर्मणि नियुक्तोऽसि।

**महोदरः**—(अपवार्य।) कहं मए तिमिरचन्दिआसंभेदो संपादणिज्जो।(क)

**लक्ष्मणः**—श्रुतमार्येण।

**रामः**—अथ किम्।

**महोदरः**—णं रक्खसाणं वि रक्खसो सि। (ख)

**रावणः**—ततः किम्।

**रामलक्ष्मणौ**—किमयमुपदिशति जाल्मस्य।

**महोदरः**—णं बलामोडिअ गहीदाए बलामोडिअ णिरुद्धाए एदाए बलामोडिअ एव्व णिव्वत्तणिज्जो सव्वो मणोरहो त्ति अम्ह जाइधम्मो तत्तहोदाणं ओगओ बहुसो अणुट्ठिदो अ। ता किं एत्थ विलम्बीअदि। (ग)

**लक्ष्मणः**—किमत्र वक्ष्यत्यनात्मज्ञः।

**रामः**—नूनमयं वक्ष्यति गूढमत्र कंचित्प्रतिबन्धम्।

**रावणः**—(विदूषकस्य हस्तं हस्तेनास्फाल्य विकृतं विहस्य।) साधु नर्ममित्रमेवासि लङ्केश्वरस्य। तदाकर्णय। रम्भाबलात्करणेन—(इत्यर्धोक्ते रसपारवश्यमभिनीय।) अहो चिरानुभूतोऽपि तात्कालिक इव मदयति मे हृदयमद्यापि कलितमोदारम्भो रम्भाबलात्कारः।

**महोदरः**—णं सुदो एव्व तुह मुहादो मए तदो कुविदस्स णलउवरस्स सावो। जह अज्जप्पहुदि दसमुहो अकामं जं कंवि इत्थिअं बलामोडिअ अहिरमइ तदो से मुद्धा सहस्सहा होज्जेत्ति। (घ)

---

(क) कथं मया तिमिरचन्द्रिकासंभेदः संपादनीयः।

(ख) ननु राक्षसाणामपि राक्षसोऽसि।

(ग) ननु बलात्कारेण गृहीताया बलात्कारेण निरुद्धाया एतस्या बलात्कारेणैव निर्वर्तनीयः सर्वो मनोरथ इत्यस्माकं जातिधर्मस्तत्रभवतामवगतो बहुशोऽनुष्ठितश्च। तत्किमत्र विलम्ब्यते।

(घ) ननु श्रुत एव तव मुखान्मया ततः कुपितस्य नलकूबरस्य शापः। यथाद्यप्रभृति दशमुखोऽकामां यां कामपि स्त्रियं बलात्कारेणाभिरमते ततोऽस्य मूर्धा सहस्रधा भवितेति।

(रावणो हुंकरोति ।)

**महोदरः**—णं अणुमदं एव्व एदं पुञ्जिअत्थलाबलक्कारकुविदेण पिदामहेण । (क)

**रावणः**—धिङ्मूर्ख, कथं मय्यपि नलकूबरस्य वराकस्य शापः । किं तु

बलाद्भुक्तां मया दृष्ट्वा रुदन्तीं पुञ्जिकस्थलाम् ।
मा बलात्कुरु नारीरित्यन्वशान्मां पितामहः ॥ २६ ॥

**लक्ष्मणः**—आर्य, श्रुतः किल यादृच्छिकोऽयमनयोः संलापः । तत्सर्वथा न शक्य एव स्त्रीमात्रे रक्षोबलात्कार इत्याम्रेडितमद्य संवदते संभाषणं विभीषणस्य ।

**रामः**—(निश्वस्य स्वगतम् ।)

प्रागेव सीतां जानेऽहं पश्यामि च तथैव ताम् ।
किंतु लोकस्य हृदये किमस्तीति विचिन्तये ॥ २७ ॥

(प्रकाशम् ।) भवतु वत्स, दृश्यतां द्रष्टव्यम् । किमाचारो रावण इति ।

**रावणः**—(सानुनयम् ।) तद्वयस्य, त्वया च विद्युज्जिह्वेन च त्रिजटामुखाभिश्च मयि कथमपि झटिति समावर्जनीया जानकी । (इति महोदरं प्रार्थयते ।)

**महोदरः**—भोदु । जतिस्सं दाव । (ख)

**रावणः**—दिष्ट्या प्रसन्नो मे राक्षसकुलमहोपाध्यायः । (सप्रणामम् । हर्षेण वल्गन्मुकुटविपर्यासं शाखासु केशसक्तिं चाभिनीय सरोषम् ।) कथं कपयो बत मामिहाप्यनुपतन्तो विपर्यासितमुकुटेषु सुग्रीवहतकप्रधानाः केशेषु मां गृह्णन्ति ।

**लक्ष्मणः**—आर्य, नूनं प्राथमिकसुग्रीवद्वंद्वयुद्धकृतमुकुटभङ्गस्तत्प्रसञ्जितकेशपाशाकर्षणरणरणकवर्धितरणोन्मादगृहीत एष प्रलपति तादृशमेव यत्किंचित् । तदिदानीम्

आकृष्य केशे हरिभिः प्रसह्य निबध्य कारासु निवेशनीयः ।
तत्रैनमार्यो निजसंविभागं दण्डेन योग्येन चिराद्युनक्तु ॥ २८ ॥

---

(क) नन्वनुमतमेवैतत्पुञ्जिकस्थलाबलात्कारकुपितेन पितामहेन ।

(ख) भवतु । यतिष्ये तावत् ।

**रामः**—(स्वगतम्।) रावणः खल्वसौ। (प्रकाशम्।) वत्स,

निषिद्धमेतत्प्रागेव रणकर्म निरायुधे।
तद्गृहीतायुधः सोऽयं समेष्यत्येव संगरम्॥ २९॥

**लक्ष्मणः**—भवतु। पश्यावः।

**महोदरः**—भो वअस्स, कुदो एत्थ वाणरा। किंदु तुह हरिसणट्टणवसादो इमस्सिं माउलुङ्गविडवे विपज्जत्थमउडसंणिवेसा सज्जन्ति केसा। तदो मोइअ पुणोवि बन्धणिज्जा एदे किरीडबन्धेण। (क)

**लक्ष्मणः**—अस्मत्कर्तव्यमस्य मुकुटभङ्गमग्रतः कृतवानयमशोकवनपादपः।

**रामः**—(स्वगतम्।) अस्तु। किमेतेन। (प्रकाशम्।) भवतु वत्स, दृश्यतां द्रष्टव्यम्।

**रावणः**—(मुकुटबन्धं समीकृत्य।) वयस्य महोदर, तदिदानीम्

त्वदुपायेन सरमात्रिजटारञ्जनेन च।
कियदावर्जिता सीतेत्येतद्द्रष्टव्यमद्य मे॥ ३०॥

ततश्च समरभुवमवतीर्य रामलक्ष्मणहतकाभियुक्तयोर्वत्सकुम्भकर्णमेघनादयोरायोधनहर्षमुत्तम्भयन्नद्यैव समापयामि सुग्रीवभङ्गतः सङ्ग्रामकथाम्। (इति परिक्रामति।)

**रामः**—वत्स, तदावामप्यस्यैव निर्गमनमनुपालयन्तावायोधनधुरंधरानुत्तम्भयावो हरियूथपान्।

**लक्ष्मणः**—यथोक्तमार्येण।

**रामः**—(सकौतुकम्।) अयि वत्स,

एष्यत्येव रणाजिरं दशमुखः शस्त्रास्त्रमायोद्धतः
शक्रारिश्च पुरः समेष्यति कृतब्रह्मास्त्रसंसाधनः।

---

(क) भो वयस्य, कुतोऽत्र वानराः। किंतु तव हर्षनर्तनवशादस्मिन्मातुलुङ्गविटपे विपर्यस्तमुकुटसंनिवेशाः सज्जन्ति केशाः। तन्मोचयित्वा पुनरपि बन्धनीया एते किरीटबन्धेन।

तन्नः कौतुकमाहवाय घटते यत्कुम्भकर्णः स्वयं
यद्येते युगपत्त्रयोऽपि मिलिताः सोऽयं चिरस्योत्सवः ॥ ३१ ॥

**महोदरः**—इदो इदो भवम् । (क)

**रावणः**—विधेयोऽस्मि सांप्रतं वयस्यस्य ।

**लक्ष्मणः**—आर्य, तदावामपि शरनिकृत्तपुरःपातिताभ्यां कुम्भकर्णमेघनादयोः शिरोभ्यामावेदयावः समरवृत्तान्तमन्तःपुरविहारिणो लङ्केश्वरस्य ।

**रामः**—यथा रोचते वत्साय ।

(निष्क्रान्ताः सर्वे ।)

**इति षष्ठोऽङ्कः ।**

सप्तमोऽङ्कः ।

(ततः प्रविशतो रामलक्ष्मणौ ।)

**लक्ष्मणः**—आर्य, नन्वावामपि शरनिकृत्तपुरःपातिताभ्यां कुम्भकर्णमेघनादयोः शिरोभ्यामावेदयावः समरवृत्तान्तमन्तःपुरविहारिणो लङ्केश्वरस्य ।

**रामः**—यथा रोचते वत्साय ।

**लक्ष्मणः**—(विचिन्त्य ।)

देवदानवदैतेयास्तिष्ठन्त्वेते जिता मुहुः ।
अप्यस्त्रदेवता मन्दमभिगच्छत्यमुं भयात् ॥ १ ॥

तदत्र ब्रह्मास्त्रग्रहणपर्यन्तेन समरव्यापारेण भवितव्यमार्यस्य ।

**रामः**—वत्स, एवमिदम् । यतः ।

अनुद्धृतोऽपि तूणीरादुद्यन्ब्रह्मास्त्रसायकः ।
स्वयं समरविश्रान्तिं सूचयत्यात्ममोक्षणात् ॥ २ ॥

**लक्ष्मणः**—आर्य, अथ किम् ।

---

(क) इत इतो भवान् ।

**रामः**—वत्स, पश्य तदद्भुतदर्पणेनैव मणिना किमाचारो दशानन इति ।

**लक्ष्मणः**—(दृष्ट्वा ।) आर्य, कः पुनरन्यः समाचारो जाल्मस्य ।

**रामः**—तत्किमशोकवनिकायामेव चिरमाधावत्यनात्मज्ञः ।

**लक्ष्मणः**—ननूक्तमेव केनचित् 'भ्रष्टस्य कान्या गतिः' इति ।

(ततः प्रविशति रावणो महोदरश्च ।)

**महोदरः**—भो वअस्स, इदो इदो भवम् । (क)

**रावणः**—(परिक्रामन् ।) सखे महोदर,

त्वदुपायेन सरमात्रिजटारञ्जनेन च ।
कियदावर्जिता सीतेत्येतद्द्रष्टव्यमद्य मे ॥ ३ ॥

**महोदरः**—भो वअस्स, किं दे अण्णेहिं उवाएहिं । णं कामरूवो सि । (ख)

**रावणः**—(सस्मितम् ।) सखे, विदितस्तवाभिप्रायः । रामवेषेणैव भवता रामानुरक्ता संमोहनीया जानकीति ।

**महोदरः**—अथ इं । (ग)

**लक्ष्मणः**—श्रुतमार्येण ।

**रामः**—वत्स, अथ किम् ।

**रावणः**—(निश्वस्य ।)

वञ्चिताः पतिरूपेण मया तास्ताः पतिव्रताः ।
यया हि मायया सास्यां मम कुण्ठीभवत्यहो ॥ ४ ॥

**लक्ष्मणः**—श्रुतमार्येण ।

**रामः**—वत्स, कः संदेहः पातिव्रत्ये सीतायाः, पावनत्वे च भगवत्या भागीरथ्याः । (स्वगतम् ।) किं तु लोकः प्रमाणीकर्तव्यः ।

**महोदरः**—भो वअस्स, सीदारत्तो उम्मत्तोसि । सीदावेसाहिं एव्व अ-

---

(क) भो वयस्य, इत इतो भवान् ।

(ख) भो वयस्य, किं तेऽन्यैरुपायैः । ननु कामरूपोऽसि ।

(ग) अथ किम् ।

(घ) भो वयस्य, सीतारक्त उन्मत्तोऽसि । सीताविषाभिरेवास्माभिर्मोह-

ह्मेहिं मोहणिज्जोत्ति सव्वाहिं मन्दोदरीपमुहाहिं अन्तेउरभामिणीहिं एक्कक्कीहिं गहिदुं आरभिओ सीदाए वेसो काएवि तासु गहिदुं ण सक्को जाओ । (घ)

**लक्ष्मणः**—श्रुतः किलानयोरार्येण संवादः ।

**रामः**—वत्स, किमत्र श्रोतव्यम् ।

प्रागेव जातवृत्तायाः प्रस्तुतानुगुणा कथा ।
किं तु लोकप्रमाणा हि कृत्येष्विक्ष्वाकवो नृपाः ॥ ९ ॥

**रावणः**—सखे, तथा च श्रूयताम् । ('त्वदुपायेन सरमा' इत्यादि पूर्वोक्तं पठति ।)

**महोदरः**—(स्वगतम् ।) कहं मए अण्णेण वा तिमिरचन्दिआसंभेदो संपादणिज्जो । (प्रकाशम् ।) एदु एदु भवं । (क)

(परिक्रामतः ।)

**लक्ष्मणः**—आर्य, श्रुतः किलायमनयोः संलापः ।

**रामः**—वत्स, अथ किम् ।

**महोदरः**—भो वअस्स, एसा जाणई तिअडासरमाहिं सह सहीहिं किंवि मन्तअन्ती चिट्ठइ । (ख)

**रावणः**—वयस्य, तदावामिह तिरोहितावेव शृणुवः सह सखीभ्यामस्या विस्रम्भजल्पितानि ।

(तथा कुरुतः ।)

(ततः प्रविशति त्रिजटासरमाभ्यां सह सीता ।)

**सीता**—सहि तिअडे, दंसेहि जं दंसणिज्जं । एसा अवहिदम्हि । (ग)

---

नीय इति सर्वाभिर्मन्दोदरीप्रमुखाभिरन्तःपुरभामिनीभिरेकैकीभिर्ग्रहीतुमारब्धः सीताया वेषः कयापि तासु ग्रहीतुं न शक्यो जातः ।

(क) कथं मयान्येन वा तिमिरचन्द्रिकासंभेदः संपादनीयः । एत्वेतु भवान् ।

(ख) भो वयस्य, एषा जानकी त्रिजटासरमाभ्यां सह सखीभ्यां किमपि मन्त्रयमाणा तिष्ठति ।

(ग) सखि त्रिजटे, दर्शय यद्दर्शनीयम् । एषावहितास्मि ।

**रावणः**—सखे महोदर, किमियं दिदृक्षते किमियं दर्शयिष्यतीति परवानस्मि कुतूहलेन।

**महोदरः**—तुण्हीभूदो पेक्ख दाव। (क)

**लक्ष्मणः**—नूनमार्यस्य विजयवृत्तान्तमार्यायै दर्शयति त्रिजटा मायायोगेन।

**रामः**—वत्स, ननु कुतूहलस्थानमेतदेतस्याः।

**लक्ष्मणः**—हुं कुतूहलस्थानमिति।

सपुत्रज्ञातिसुहृदो रावणस्य रणे वधम्।
अथवा ग्रहणं शत्रोरार्येयं द्रष्टुमर्हति॥ ६॥

यद्वा तदपि प्रेक्षते समयेषु।

**त्रिजटा**—(उत्थाय।) सहि सरमे, तुमं एव्व एत्थ रावणपुढमसमरवत्थुए मेहणादणाअपासवुत्तन्तं आरम्भिअ दंसणिज्जे एत्थ माआरूवए पीठमद्दिआ भविअ तेसु तेसु रसन्तरेसु पज्जवत्थावेहि पिअसहिं वैदेहिम्। (इति निष्क्रान्ता।) (ख)

**रावणः**—वयस्य, पर्यवस्थापयेतिवचनाद्भयानकरसप्रायेण मच्चरित्रवस्तुकेन मायाविहारेण मया सीतामावर्जयितुमनया समारब्धेन भवितव्यमिति तर्कयामि।

**महोदरः**—णं दक्खामो सव्वं तिरोहिदा एव्व। (ग)

(तथा कुरुतः।)

**लक्ष्मणः**—आर्य, कथमावयोरपि दिदृक्षामुत्पादयत्ययमारम्भः।

**रामः**—नन्वासङ्ग्रामोदयादवश्यप्रतिपालनीयोऽयमस्माभिर्दशाननः। तदेवमस्तु।

---

(क) तूष्णींभूतः प्रेक्षस्व तावत्।

(ख) सखि सरमे, त्वमेवात्र रावणप्रथमसमरवस्तुके मेघनादनागपाशवृत्तान्तमारभ्य दर्शनीयेऽत्र मायारूपके पीठमर्दिका भूत्वा तेषु तेषु रसान्तरेषु पर्यवस्थापय प्रियसखीं वैदेहीम्।

(ग) ननु पश्यामः सर्वं तिरोहिता एव।

(तथा कुरुतः ।)

(प्रविश्य)

**मायालक्ष्मणः**—(सनिर्वेदं दृष्ट्वा निश्वस्य ।) कथं पलायितमेव दुरात्मना मेघनादहतकेन ।

**सीता**—(सलज्जौत्सुक्यम् ।) कहं वच्छलक्खणो एव्व वाहरइ । (क)

**सरमा**—अह इं । (ख)

**रामः**—आश्चर्यमाश्चर्यम् । कथं स एवायं वत्सस्य स्वरयोगः ।

**लक्ष्मणः**—ननु दृष्ट एव मारीचे मायायोगसंपादितो महानार्यस्य स्वरयोगः । तत्किमत्राश्चर्यम् ।

**महोदरः**—वअस्स, कहं उदारगभीरमंसलसरजोओ लक्खणस्स वाहारो । (ग)

**रावणः**—ननु परिचितपूर्व एवायमस्माभिर्लक्ष्मणहतकस्य । (सरोषम् ।) कथं वत्समेघनादस्यापि पलायनमुदाहरति ।

**महोदरः**—वअस्स, सव्वं पेक्ख दाव । (घ)

**विकृतलक्ष्मणः**—नूनमार्यस्यायमनपेक्षितासदायोधनसंविभागचिरबद्धसंरम्भः साहसव्यापारः । कष्टं कष्टम् ।

एतेन स्वयमिन्द्र एव जगृहे वेत्त्येष नागास्त्रम-
प्येकोऽप्येष सहस्त्रवत्प्रतिदिशं गूढश्चरत्यम्बरे ।
इत्थं युद्धतृषातुरेण च मया दत्तो निषङ्गे करः
काकान्वेषिशिरस्पृशा स च रणादार्येण विद्रावितः ॥ ७ ॥

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेवैतत् ।

---

(क) कथं वत्सलक्ष्मण एव व्याहरति ।

(ख) अथ किम् ।

(ग) वयस्य, कथमुदारगभीरमांसलस्वरयोगो लक्ष्मणस्य व्याहारः ।

(घ) वयस्य, सर्वं प्रेक्षस्व तावत् ।

**रावणः**—वयस्य, विद्रावित इति कथमस्मत्पक्षापकर्षोऽप्यनुदर्श्यते सरमया सीतायै।

**महोदरः**—सव्वं पेक्ख दाव उवक्कन्दं एदम्। (क)

**सीता**—सहि सरमे, कहं मुक्को एव्व हदासो सो वच्छेण। (ख)

**सरमा**—दाणिं मुक्को विअ। (ग)

**विकृतलक्ष्मणः**—भवत्वेवं तावत्। (उच्चैः।) भो भो मेघनादप्रभृतयो निशाचरचमूपतयः,

क्वेदं हन्त पलाय्यते क्व नु गतान्मुञ्चेत वो लक्ष्मणो
नन्वार्येण तदेतदाश्रुतमभूद्युष्मत्कुलोन्मूलनम्।
आधावैः किमवश्यमेष्यति वधे तद्ब्रूमहे वो हितं
मा वध्यध्वमिहाध्वरेषु पशुवद्युद्धेष्वकिंचित्कराः॥ ८॥

**रामः**—आसीदियमाघोषणा वत्सस्य।

**प्रकृतरामलक्ष्मणौ**—अथ किम्।

**सीता**—सहि सरमे, इमाए वच्छलक्खणस्स आघोसणाए मह कण्णजुअलं अमिअधाराए विअ पूरिज्जइ। (घ)

**महोदरः**—भो वअस्स, सुदा एसा लक्खणहदअस्स आघोसणा। (ङ)

**रावणः**—वयस्य, किमनया लक्ष्मणहतकस्य वाचाटतया।

**विकृतलक्ष्मणः**—कथमनादृत्यैव मे वचनमन्यत एते धावन्ते। यावदग्रत एताञ्शरजालेन निवारयामि।

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेवैतत्।

---

(क) सर्वं प्रेक्षस्व तावदुपक्रान्तमेतत्।

(ख) सखि सरमे, कथं मुक्त एव हताशः स वत्सेन।

(ग) इदानीं मुक्त इव।

(घ) सखि सरमे, अनया वत्सलक्ष्मणस्याघोषणया मम कर्णयुगलममृतधाराभिरिव पूर्यते।

(ङ) भो वयस्य, श्रुतैषा लक्ष्मणहतकस्याघोषणा।

**सीता**—(सहर्षम् ।) सहि सरमे, ईरिसेण वच्छलक्खणस्स रोसावेसेण पमज्जिओ विअ मे हिअअमण्णू । (क)

**रावणः**—मुधामनोरथो मुग्धायाः ।

**महोदरः**—अह इं । (ख)

(प्रविश्य)

**विकृतरामः**—नन्विदानीं मे ।

**सीता**—(सहर्षम् ।) सहि, जह एसो कुविदकलहंसकण्ठघोसघग्घरमणोहरो णवसुहासारो विअ मह कण्णविवरं चिरस्स पूरेइ तह मण्णे अज्जउत्तो विअ एसो वाहरइ । (ग)

**सरमा**—साहु सहि, चिरस्स पच्चभिजाणासि । (घ)

**महोदरः**—भो वअस्स, अदिगमीरो एसो सरजोओ । (ङ)

**रावणः**—(सविस्मयम् ।) अहो स्वरसंपदुत्कर्षो मानुषस्य ।

जितेषु लोकपालेषु नदन्मे जयदुन्दुभिः ।
अनेन स्वरयोगेन हन्त स्मृतिपथं गतः ॥ ९ ॥

**महोदरः**—(दृष्ट्वा । स्वगतम् ।) ठाणे क्खु इमं उद्दिसिअ सुप्पणहाए जाणइं उद्दिसिअ महाराअरावणस्स अ सव्वाणत्थकरो दुव्वारो मअणविआरो समुप्पण्णो । (प्रकाशम् ।) वअस्स, उववण्णं मन्तिदम् । किंदु सीदं उद्दिसिअ भवन्तं उम्मादइत्तओ सअं उम्मत्तो कामोत्ति मह एसो तक्को । (च)

---

(क) सखि सरमे, ईदृशेन वत्सलक्ष्मणस्य रोषावेशेन प्रमार्जित इव मे हृदयमन्युः ।

(ख) अथ किम् ।

(ग) सखि, यथैष कुपितकलहंसकण्ठघोषघर्घरमनोहरो नवसुधासार इव मम कर्णविवरं चिरस्य पूरयति तथा मन्ये आर्यपुत्र इवैष व्याहरति ।

(घ) साधु सखि, चिरस्य प्रत्यभिजानासि ।

(ङ) भो वयस्य, अतिगभीर एष स्वरयोगः ।

(च) स्थाने खल्वेनमुद्दिश्य शूर्पणखाया जानकीमुद्दिश्य महाराजरावणस्य

**प्रकृतरामलक्ष्मणौ**—साधु साधु ।

**रावणः**—(सावहित्थम् ।) मूर्ख, दृश्यतां द्रष्टव्यम् ।

(नेपथ्ये ।)

हत्वाप्येतान्निशिचरगणानानुपूर्व्येण सर्वा-
न्कामं पश्चादपि दशमुखो हन्त हन्तव्य एव ।
द्रागस्माकं त्वशिथिलबलस्फूर्तिरक्षीणशक्ति-
र्द्रष्टव्योऽसौ सकृदिति चिरादेष तीव्रोऽभिलाषः ॥ १० ॥

**महोदरः**—वअस्स, समरकुदूहली राअउत्तो । (क)

**रावणः**—

विदेहराजस्य सुतामवेक्ष्य विस्रम्भणीयामखिलैरुपायैः ।
दण्ड्योऽपि मुक्तो यदयं ततो मां दिदृक्षते जातु रणेषु रामः ॥ ११ ॥

तदेवमस्तु ।

**महोदरः**—एव्वं एदं । को एत्थ संदेहो । (ख)

**प्रकृतलक्ष्मणः**—दाक्षिण्यपरवशोऽयमार्ये दशाननः ।

**प्रकृतरामः**—वत्स, एवमिदम् ।

**विकृतरामः**—वत्स, किमेतेन पलायमानेषु धनुर्ग्रहणेन ।

(विकृतलक्ष्मणः परिक्रामति ।)

**विकृतरामः**—वत्स, ननु वदामि किमेतेन पलायमानेषु धनुर्ग्रहणेनेति ।

**प्रकृतलक्ष्मणः**—आसीदिदमनुशासनमार्यस्य ।

**प्रकृतरामः**—अथ किम् ।

**सीता**—णिच्चोदारो अज्जउत्तो । (ग)

---

च सर्वानर्थकरो दुर्वारो मदनविकारः समुत्पन्नः । वयस्य, उपपन्नं मन्त्रितम् । किं तु सीतामुद्दिश्य भवन्तमुन्मादयितृकः स्वयमुन्मत्तः काम इति ममैष तर्कः।

(क) वयस्य, समरकुतूहली राजपुत्रः ।

(ख) एवमेतत् । कोऽत्र संदेहः ।

(ग) नित्योदार आर्यपुत्रः ।

**सरमा**—तुमं जाणासि लोओ अ । (क)

**रावणः**—साधु सरमे, वालिवधमुद्धाटयन्ती गूढमुपहससि ।

**महोदरः**—अह इं । (ख)

**विकृतलक्ष्मणः**—(सविमर्शामर्षम् ।) आर्य, श्रूयताम् ।

पलायितव्यं च रणे पलाशैः पलायमाने च धनुर्न धार्यम् ।
उन्मूलनीयानि च तत्कुलानीत्यर्थो महान्विप्रतिषिद्ध एषः ॥ १२ ॥

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेवैतत् ।

**सीता**—उववण्णं मन्तिदं वच्छेण । (ग)

**सरमा**—अह इं । (घ)

**महोदरः**—कहं रक्खसाणं कुलोम्मूलणं एव्व एदेहिं पडिण्णादम् । (ङ)

**रावणः**—(सपरिहासम् ।) अवश्यकर्तव्येऽपि किमनया प्रतिज्ञाविभीषिकया ।

**विकृतरामः**—वत्स, मा मैवम् । एते हि यातुधानयोधाः

द्रागस्वामिषु सङ्गरेषु यदपक्रम्यापि रक्षन्त्यसूं-
स्तत्स्वामिप्रतिपालनाय ननु तत्सर्वस्य सेवाफलम् ।
स स्वामी स्वयमेव चेत्प्रविशति क्रोधाकुलः सङ्गरं
मुञ्चन्त्येव तदग्रतः सुखमसून्न त्वेव तं पण्डिताः ॥ १३ ॥

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेवैतत् ।

**सीता**—सरमे, णं अण्णारिसं एव्व सोअण्णं एदस्स । (च)

---

(क) त्वं जानासि लोकश्च ।

(ख) अथ किम् ।

(ग) उपपन्नं मन्त्रितं वत्सेन ।

(घ) अथ किम् ।

(ङ) कथं राक्षसानां कुलोन्मूलनमेवैतैः प्रतिज्ञातम् ।

(च) सरमे, नन्वन्यादृशमेव सौजन्यमेतस्य ।

**महोदरः**—जुत्तं मन्तिदं खत्तिअकुमालेण । (क)

**रावणः**—वयस्य, इदानीमेकमुपपन्नमेतेषु चिरादस्य प्रलपितेषु ।

**विकृतलक्ष्मणः**—आर्य, तर्हि विनश्यन्तमेव दशाननमनुविनश्येदखिलोऽपि योऽयमस्य परिस्पन्द इत्यार्यस्य स्यादभिप्रायः ।

**विकृतरामः**—वत्स, अथ किम् ।

**प्रकृतरामः**—यथावृत्तमेतत् ।

**सीता**—सहि सरमे, सुट्ठु दिट्ठो अभिप्पाओ अज्जउत्तस्स वच्छलक्खणेण । (ख)

**सरमा**—अह इं । (ग)

**रावणः**—(सरोषम् । 'विनश्यन्तम्' इत्यादि लक्ष्मणोक्तं पठित्वा ।) वयस्य, श्रुतः किल दुरालापो लक्ष्मणहतकस्य ।

अरामलक्ष्मणं लोकमद्यैव न करोमि किम् ।
सीतानुरञ्जनप्रेक्षा चिरं चेन्न रुणद्धि माम् ॥ १४ ॥

**महोदरः**—वअस्स, एव्वं एदम् । पेक्ख दाव पेक्खणिज्जम् । (घ)

(रावणस्तथा करोति ।)

**विकृतलक्ष्मणः**—तदिदानीम्

बाणौघव्यतिकरवह्निदह्यमाना-
द्द्रयामुह्यन्दशवदनः पुरादमुष्मात् ।
निर्यातु द्रुतमवशः स्वयं दवाग्नि-
व्यालीढादिव गिरिकुञ्जतः शरारुः ॥ १५ ॥

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेवैतत् ।

---

(क) युक्तं मन्त्रितं क्षत्रियकुमारेण ।

(ख) सखि सरमे, सुष्ठु दृष्टोऽभिप्राय आर्यपुत्रस्य वत्सलक्ष्मणेन ।

(ग) अथ किम् ।

(घ) वयस्य, एवमेतत् । प्रेक्षस्व तावत्प्रेक्षणीयम् ।

**सीता**—अम्हेहिं दुप्पेक्खणिज्जो वच्छो रोसावेसेण । (क)

**सरमा**—अह इं । (ख)

**रावणः**—अहो दुराटोपो लक्ष्मणहतकस्य ।

**महोदरः**—अहो भीसणो एसो । (ग)

**विकृतरामः**—वत्स, अयुध्यति तस्मिन्नसन्नद्धे च किमायुधग्रहणेन ।

**प्रकृतलक्ष्मणः**—आसीदिदमनुशासनमार्यस्य ।

**प्रकृतरामः**—वत्स, अथ किम् ।

**रावणः**—दयापरवशोऽयमस्मासु स्त्रीशूरः ।

**महोदरः**—साहु वअस्स, साहु । (घ)

**सीता**—(सनिर्वेदम् ।) सहि सरमे, एव्वं एव्व चिराइदं इमस्स वहे अज्जउत्तेण । (ङ)

**विकृतलक्ष्मणः**—आर्य, यद्येवमयुध्यति तस्मिन्नायुधं न ग्राह्यम्, तर्हि जितमयुद्धेनैव दशाननेन स्यात् ।

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेतत् ।

**सीता**—जुत्तं उत्तं वच्छेण । (च)

**सरमा**—अह इं । (छ)

**रावणः**—अहो, बतेदमन्यादृशं पौरुषमस्य मानुषपोतस्य । यस्य किल मते लङ्केश्वरोऽपि युद्धभीरुरेव समर्थितः ।

---

(क) अस्माभिर्दुःप्रेक्षणीयो वत्सो रोषावेशेन ।

(ख) अथ किम् ।

(ग) अहो भीषण एषः ।

(घ) साधु वयस्य, साधु ।

(ङ) सखि सरमे, एवमेव चिरायितमस्य वधे आर्यपुत्रेण ।

(च) युक्तमुक्तं वत्सेन ।

(छ) अथ किम् ।

**महोदरः**—वअस्स, कहं माणुसपोतओ तेल्लोक्कवीरं तत्तभवन्तं जाणाइ । (क)

**रावणः**—एवमेतत् ।

**प्रकृतलक्ष्मणः**—(सोपहासम् ।) अतिस्फुटमेव त्रैलोक्यवीरत्वमस्य जनस्थानचोरस्य ।

**प्रकृतरामः**—भवत्वेवम् ।

**विकृतरामः**—तर्हि स्वस्वयूथपरिवृतैर्यूथपैरेव कदर्थीकर्तव्या सर्वतो लङ्का ।

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेतत् ।

**सीता**—(सहर्षम् ।) तुवरेदु तुवरेदु वच्छलक्खणो । (ख)

**सरमा**—णिव्वत्तिदं क्खु एदं दंसिज्जइ । (ग)

**सीता**—(सलज्जम् ।) सहि, पुणो पुणोवि मं आउलीकरेदि सहीए एसा णिउणदा । (घ)

**महोदरः**—भो वअस्स, कहं जाणईहिअअवक्कठिणदन्तणहेहिं वाणरसिह्मेहिं पूरिज्जइ सव्वदो वि लङ्काउरुद्देसो । (ङ)

**रावणः**—वयस्य, न भेतव्यम् ।

नागाधिपतिभोगाभा ननु सन्ति भुजा मम ।
ये निरुन्धन्ति लङ्काया द्वाराणि विपदामपि ॥ १६ ॥

**प्रकृतलक्ष्मणः**—(विहस्य ।) दृष्टा एव ते नन्वार्यस्य चिरादेकबाणलक्ष्येण वालिना वानरेन्द्रेण बाहवः ।

---

(क) वयस्य, कथं मानुषपोतकस्त्रैलोक्यवीरं तत्रभवन्तं जानाति ।

(ख) त्वरयतु त्वरयतु वत्सलक्ष्मणः ।

(ग) निर्वर्तितं खल्वेतद्दर्शयिष्यति ।

(घ) सखि, पुनः पुनरपि मामाकुलीकरोति सख्या एषा निपुणता ।

(ङ) भो वयस्य, कथं जानकीहृदयवत्कठिनदन्तनखैर्वानरसिंहैः पूर्यते सर्वतोऽपि लङ्कापुरोद्देशः ।

**प्रकृतरामः**—वत्स, मा मैवम् । अस्य हि

त्रैलोक्यविजयौद्धत्यनित्यदुर्ललितस्य सः ।
घुणक्षतलिपिप्रख्यः कादाचित्कः पराभवः ॥ १७ ॥

**प्रकृतलक्ष्मणः**—आर्य, रणरणकग्रस्ततया सत्यमेवेदमवगच्छति त्रिजटया दर्श्यमानमखिलमपि दशाननो महोदरश्च ।

**प्रकृतरामः**—वत्स, एवमेव खल्विदमावयोरपि कदाचित्प्रतिभाति ।

**विकृतलक्ष्मणः**—ततश्च किम् ।

**विकृतरामः**—ततश्च वत्स,

'यामद्यापि स्पृशति चकितो वायुरर्कश्च लङ्कां
तामेवायं कपिशतकदर्थीकृतां मृष्यते किम् ।
तन्मानैकव्यसनविवशो निर्गमिष्यत्यवश्यं
मर्त्यारब्धस्वजननिधनाकर्णनोदीर्णरोषः ॥ १८ ॥

ततश्च ।

तुलितचलितत्रुट्यत्कैलासमूलमहाशिला-
कषणगुणितज्याघाताङ्कां वहन्भुजविंशतिम् ।
चिरधृतरणक्रीडाकण्डूभरानुगुणं जग-
त्त्रयजयमदाविष्टश्चेष्टिष्यते दशकन्धरः ॥ १९ ॥

**प्रकृतरामलक्ष्मणौ**—अन्यूनोऽयमनतिरिक्तश्च कथाभागः ।

**सीता**—हदासे वि रक्खसावसदे केत्तिओ एदस्स बहुमाणो । (क)

**सरमा**—सहि, ईरिसं ते भत्तुणो सोअण्णम् । (ख)

**महोदरः**—सुदं वअस्सेण से सोअण्णम् । (ग)

**रावणः**—(सशिरःकम्पम् ।) किमुच्यते सौजन्यमिति । किंबहुना ।

---

(क) हताशेऽपि राक्षसापशदे कियानेतस्य बहुमानः ।

(ख) सखि, ईदृशं ते भर्तुः सौजन्यम् ।

(ग) श्रुतं वयस्येनास्य सौजन्यम् ।

अनेन सौजन्येनायमर्थी यद्युपतिष्ठते ।
सीतां विनान्यदखिलं दत्तमेव मया भवेत् ॥ २० ॥

**प्रकृतलक्ष्मणः**—आर्य, प्रलपति वराको यत्किंचित् ।

**प्रकृतरामः**—वत्स, तादृशस्तस्य नित्योद्धतः कोऽपि स्वभावभेदः । तद्दृश्यतां द्रष्टव्यम् ।

**विकृतलक्ष्मणः**—(विहस्य ।) चोरेऽपि कथमार्यस्य महती संभावना । नीचेऽपि तस्मिन्नैकृतिके द्वन्द्वयुद्धाशंसा च । यतः ।

युध्यन्वायमयुध्यन्वा सायुधोऽथ निरायुधः ।
तिष्ठन्पलायमानो वा दण्ड्यश्चोरो हि सर्वथा ॥ २१ ॥

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेतत् ।

**सीता**—उववण्णं मन्तिदं वच्छेण । (क)

**रावणः**—वयस्य महोदर,

त्रैलोक्यसारहर्तारं को न जानाति रावणम् ।
स्वस्त्रीसंरक्षणाशक्तश्चोरं मामेष मन्यते ॥ २२ ॥

**प्रकृतलक्ष्मणः**—आर्य, श्रुतं प्रलपितमस्य जाल्मस्य ।

**प्रकृतरामः**—नन्विदमुपपद्यते लङ्केश्वरस्य ।

**विकृतलक्ष्मणः**—भवतु यदभिलषितमार्यस्य । भो भो हरियूथपाः, स्वस्वयूथपरिवृतैरितस्ततः कदर्थीकर्तव्या सर्वतोऽपि लङ्का युष्माभिः ।

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेतत् ।

**सीता**—सहि, कोवावेसदुप्पेक्खणिज्जस्स वि वच्छलक्खणस्स एसो आदेसो मं सुहावेदि । (ख)

**सरमा**—को एत्थ संदेहो । (ग)

---

(क) उपपन्नं मन्त्रितं वत्सेन ।

(ख) सखि, कोपावेशदुष्प्रेक्षणीयस्यापि वत्सलक्ष्मणस्यैष आदेशो मां सुखापयति ।

(ग) कोऽत्र संदेहः ।

**महोदरः**—(सभयम्।) कहं दाणिम् । (क)

**रावणः**—मूर्ख, वृत्तमेव खल्विदमनुदृश्यते ।

(नेपथ्ये कलकलः।)

(सर्वे आकर्णयन्ति ।)

**विकृतलक्ष्मणः**—कथमादिष्टमात्रा एव हरियूथपाः प्रवृत्ता एव सर्वतः प्राकारभङ्गेषु ।

**रावणः**—कः कः–(इत्यर्धोक्ते लज्जया विरमति ।)

**महोदरः**—साहु, झत्ति पडिबुद्धो सि । (ख)

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेवैतत् ।

**सीता**—दिट्ठिआ दिट्ठिआ । (ग)

**सरमा**—सहि, ठाणे खु एत्तिअस्स कालस्स तुह मुहअन्दे वि दिट्ठो ईरिसो पसादो । (घ)

**रावणः**—वयस्य, किंबहुना ।

लङ्कानिरोधकथयायमियान्प्रसादो
यद्येतदाननविधौ चिरकाङ्क्षितो मे ।
तन्माययापि निधनं मम दर्शयित्वा
द्रष्टव्य एव हि समग्रमुखप्रसादः ॥ २३ ॥

**प्रकृतलक्ष्मणः**—अयि मुमूर्षो, किमनेन मायासंपादितेन स्ववधदर्शनेन ।

साक्षादेवार्यबाणैस्त्वं सद्यो मृत्युवशं गतः ।
पश्यस्यार्यामुखाम्भोजे प्रसादस्य समग्रताम् ॥ २४ ॥

---

(क) कथमिदानीम् ।

(ख) साधु, झटिति प्रतिबुद्धोऽसि ।

(ग) दिष्ट्या दिष्ट्या ।

(घ) सखि, स्थाने खल्वेतावतः कालस्य तव मुखचन्द्रेऽपि दृष्ट ईदृशः प्रसादः ।

(पुनर्नेपथ्ये ।)

कैलासाचलकेलिचालनकलानिर्व्यूढदोर्विक्रमः
सर्वोर्वीविजयप्रकाशितमहाशस्त्रास्त्रसारोदयः ।
पातालामरलोकसारहरणप्रख्याततेजोमयो
रक्षोलोकमहेश्वरो विजयते लोकेषु लङ्केश्वरः ॥ २५ ॥

**प्रकृतरामः**—वत्स, दृष्ट एव हि लङ्केश्वरस्य वन्दिस्तुतावपि पराक्रमवस्तुनो याथार्थ्यम् ।

**प्रकृतलक्ष्मणः**—आर्य, अथ किम् । किं तु वञ्चनाप्रायतया नेदं हृदयंगमं वीरलोकस्य ।

**सीता**—सहि सरमे, केत्तिओ चोरस्स वीरवादो । (क)

**सरमा**—आम् । जाणइ, आम् । (ख)

**महोदरः**—भो वअस्स, सुदोवि तुह पहावो रोमञ्चं उप्पादेइ । (ग)

**रावणः**—(निश्वस्य ।) वयस्य, अशकलीकृतशत्रुशरीरस्य कः प्रभावः ।

सहेत नैव स्वप्नेऽपि शत्रुनाम जगत्सु यः ।
तस्य मे पश्यतो लङ्का शाखामृगगणैर्वृता ॥ २६ ॥

तदिदानीं यौगपद्यविहितेन रामलक्ष्मणसुग्रीवविभीषणसमापनेन सद्य एव निरवशेषयामि समरकर्म । (इति परावर्तते ।)

**प्रकृतलक्ष्मणः**—आर्य, कथमयमुत्तिष्ठते पुनरपि कुपितः सङ्ग्रामाय। अपि नामायमितो बहिः पुनरपि सकृदागच्छेत् ।

**प्रकृतरामः**—वत्स, नन्वस्य निर्गममेव हि प्रतिपालयावहे ।

**महोदरः**—वअस्स, दट्ठव्वं दाव दट्ठूण पच्छा जहसमीहिदं करिस्ससि। (घ)

---

(क) सखि सरमे, कियांश्चोरस्य वीरवादः ।

(ख) आम् । जानकि, आम् ।

(ग) भो वयस्य, श्रुतोऽपि तव प्रभावो रोमाञ्चमुत्पादयति ।

(घ) वयस्य, द्रष्टव्यं तावद्दृष्ट्वा पश्चाद्यथासमीहितं करिष्यसि ।

**रावणः**—अननुलङ्घनीयवचनो हि सर्वथा मे वयस्यमहोदरः। (इति निवर्तते ।)

(पुनर्नेपथ्ये ।)

किंच ।

स्वर्गस्त्रैणापहारी हरिदधिपकुलस्त्रीसहस्रापहर्ता
हर्ता मर्त्याङ्गनानामहिपतिदनुजाधीशनारीविहारी ।
रक्षःस्त्रीलक्षचित्तप्रमथनमदनो भिन्नधर्मार्थसेतुः
कामव्यामोहदाहज्वरचिरपथिकग्रामणीरेष भाति ॥ २७ ॥

**महोदरः**—भो वअस्स, सुदो क्खु दे जसोसव्वंकसो पहावो। (क)

**रावणः**—सत्यमनेन वैतालिकवचनेन पुनरपि नवीकृताः स्मः ।

**प्रकृतलक्ष्मणः**—अहो निर्लज्जता राक्षसापशदस्य ।

पशुप्रायविचेष्टोऽयं पौलस्त्यकुलपांसनः ।
स्वयंकृतेन पापेन स्तूयमानेन मोदते ॥ २८ ॥

**प्रकृतरामः**—वत्स, मा मैवम् ।

हृतत्रैलोक्यसारस्य जिताखिलदिशापतेः ।
शोभते राक्षसेन्द्रस्य स्वैरचारो विशृङ्खलः ॥ २९ ॥

**सीता**—हद्धी हद्धी । पावस्स एदस्स पावाआरस्स रक्खसो पुणो पुणो वि सुदिपावतमाइं एदाइं अक्खराइं । (इति कर्णौ पिदधाति ।) (ख)

**सरमा**—आम् जाणइ, किं कादब्बम्। दट्ठब्बो क्खु एदस्स माआदंसिदो समग्गो संगामजओ । (ग)

**महोदरः**—भो वअस्स, तुह विअओ दंसिज्जइ । ता पेक्ख अप्पमत्तो। (घ)

---

(क) भो वयस्य, श्रुतः खलु ते यशःसर्वंकषः प्रभावः ।

(ख) हा धिक् हा धिक् । पापस्यैतस्य पापाचारस्य रक्षसः पुनः पुनरपि श्रुतिपापतमान्येतान्यक्षराणि ।

(ग) आम् जानकि, किं कर्तव्यम् । द्रष्टव्यः खल्वेतस्य मायादर्शितः समग्रः संग्रामजयः ।

(घ) भो वयस्य, तव विजयो दर्शयिष्यते । तत्प्रेक्षस्वाप्रमत्तः ।

**विकृतलक्ष्मणः**—यदादिष्टमार्येण । (इति परिक्रामति ।)

**विकृतरामः**—तदहमपि स्वामिदर्शनावष्टम्भसंभावितात्मभिर्योतुधानप्रधानैरभिनियुज्यमानामुत्तम्भयामि हरिवाहिनीम् ।

(उभौ निष्क्रान्तौ ।)

**सरमा**—सहि जाणइ, सुप्पणहाअमणस्स वेलां परिहरिअ सेसं दक्खिस्ससि । (क)

(इति निष्क्रान्ते ।)

**महोदरः**—भो वअस्स, अह्मे वि गूढत्थिदा एव्व दक्खामो जं एत्थ सेसं । (ख)

**रावणः**—(स्वगतम् ।) ननु कुम्भकर्णमेघनादयोराहित एव वत्सयोरशेषः संग्रामभरः । (प्रकाशम् ।) वयस्य, निशम्यतामयं दशाननस्य मतसिद्धान्तः संग्रहेण ।

मायया स्वशिरच्छेदमपि रामेण कल्पितम् ।
दर्शयित्वापि सीताया दृश्या वक्त्रप्रसन्नता ॥ ३४ ॥

**प्रकृतलक्ष्मणः**—रे रे राक्षसापशद, किमनेन मायान्तर्गडुना ।

आगच्छ बहिरार्योऽयं हन्त च्छेत्ता शिरांसि ते ।
परलोकगतः पश्येः प्रसादं जानकीमुखे ॥ ३५ ॥

**रावणः**—सखे महोदर, इदं च श्रूयताम् ।

यद्वत्सकुम्भकर्णो वहति धुरं बोधितो रणस्यैकम् ।
अन्यां च मेघनादो विहितब्रह्मास्त्रसाधनो वत्सः ॥ ३६ ॥

वयस्य, तदपि मे प्रस्तुतोपकाराय ।

**महोदरः**—एव्वं एदम् । ता एहि । गदुअ पेक्खणिज्जं पेक्खम्ह । (ग)

**रावणः**—तेन हि समयेषु समरवृत्तान्तः परिज्ञास्यते चारमुखेन तदत्र दृश्यतां द्रष्टव्यम् ।

---

(क) सखि जानकि, शूर्पणखागमनस्य वेलां परिहृत्य शेषं द्रक्ष्यसि ।

(ख) भो वयस्य, आवामपि गूढस्थितावेव द्रक्ष्यावो यदत्र शेषम् ।

(ग) एवमेतत् । तदेहि । गत्वा प्रेक्षणीयं प्रेक्षावहे ।

**प्रकृतलक्ष्मणः**—समरवृत्तान्तज्ञापनाय किमस्य चारेण ।

पुरःशरोत्कृत्तनिपातिताभ्यां द्राक्कुम्भकर्णेन्द्रजितोः शिरोभ्याम् ।
अन्तःपुरस्वैरविहारभाजे निवेदयावो रणकर्म राज्ञे ॥ ३७ ॥

**रावणः**—(विचिन्त्य ।) वयस्य, किंबहुना तदहमाश्वास्य वैदेहीमवतीर्य समरभुवं रामलक्ष्मणहतकाभियुक्तयोर्वत्सकुम्भकर्णमेघनादयोरायोधनमवलोकयन्नद्यैव समापयामि सुग्रीवभञ्जतः सङ्ग्रामकथाम् ।

ततश्च स्वयमेवेयं सद्यो नष्टावलम्बना ।
मैथिली हन्त सेवेत मामेव त्रिजगत्पतिम् ॥ ३८ ॥

**महोदरः**—(स्वगतम् ।) अहो दुम्मणोरहो एदस्स । (प्रकाशम् ।) एव्वं एदम् । (क)

(निष्क्रान्ताः सर्वे ।)

**इति सप्तमोऽङ्कः ।**

---

## अष्टमोऽङ्कः ।

(प्रविश्य ।)

**लक्ष्मणः**—आर्य, तदिदानीं

पुरःशरोत्कृत्तनिपातिताभ्यां द्राक्कुम्भकर्णेन्द्रजितोः शिरोभ्याम् ।
अन्तःपुरस्वैरविहारभाजे निवेदयावो रणकर्म राज्ञे ॥ १ ॥

(प्रविश्य ।)

**रामः**—वत्स, एवमिदम् । तदद्भुतदर्पणेनैव मणिना पश्य किमाचारो दशानन इति । नन्वयं सर्वप्रकारपरिज्ञातव्यचरितः प्रधानशत्रुरस्माकम् ।

**लक्ष्मणः**—एवमिदम् ।

(प्रविश्य ।)

**महोदरः**—इदो इदो वअस्सलङ्केसरो । (ख)

(प्रविश्य ।)

**रावणः**—सखे महोदर,

---

(क) अहो दुर्मनोरथ एतस्य । एवमेतत् ।

(ख) इत इतो वयस्यलङ्केश्वरः ।

त्वदुपायेन सरमात्रिजटारञ्जनेन च ।
कियदावर्जिता सीतेत्येतद्द्रष्टव्यमद्य मे ॥ २ ॥

**महोदरः**—(अपवार्य ।)

विज्जुज्जीहसदेणवि तिअडासरमाण णिउददो वावि ।
सीदाहिअअमकज्जे कुण्ठइ जोह्लेव्व दरिसम्मि ॥ ३ ॥

(प्रकाशम् ।) भो वअस्स, जदिस्सं दाव तुह कज्जसिद्धिए । ता पेक्खदु भवं जं पेक्खणिज्जम् । (क)

**रावणः**—एवमस्तु । (इति परिक्रामति ।)

**लक्ष्मणः**—आर्य, श्रुतः किल महोदरस्य सुचिरनिष्पादितो बुद्धिनिष्कर्षोऽयमार्यां प्रति ।

**रामः**—अथ किम् ।

**महोदरः**—भो वअस्स, एसो दारुपब्बदो । एदं तस्स तिरोधाणम् । ता पेक्खदु भवं जं पेक्खणिज्जम् । (ख)

**रावणः**—एवमस्तु ।

**महोदरः**—ता सिंसवारुक्खन्तरिदा भविअ पेक्खम्ह । (ग)

(तथा कुरुतः ।)

**लक्ष्मणः**—आर्य, कथं दारुपर्वततिरोधानमेवायमभिधावत्यनात्मज्ञः ।

**रावणः**—भवतु । दृश्यतां द्रष्टव्यम् ।

(ततः प्रविशति त्रिजटासरमाभ्यां सह सीता ।)

**सीता**—सहि तिअडे, जं मए पेक्खणिज्जं तस्स सेसं दंसेहि । (घ)

---

(क) विद्युज्जिह्वशतेनापि त्रिजटासरमयोर्नियुततो वापि ।
सीताहृदयमकार्ये कुण्ठति ज्योत्स्नेव दर्शे ॥

भो वयस्य, यतिष्ये तावत्तव कार्यसिद्ध्यै । तत्प्रेक्षतां भवान्यत्प्रेक्षणीयम् ।

(ख) भो वयस्य, एष दारुपर्वतः । इदं तस्य तिरोधानम् । तत्प्रेक्षतां भवान्यत्प्रेक्षणीयम् ।

(ग) तच्छिंशपावृक्षान्तरितौ भूत्वा प्रेक्षावः ।

(घ) सखि त्रिजटे, यन्मया प्रेक्षणीयं तस्य शेषं दर्शय ।

**त्रिजटा**—सहि जाणइ, साहु साहु। पेक्ख दाव पेक्खिअसेसम्। भत्तुणो रावणस्स विअअमहूसवं ते दंसेमि। (क)

**रावणः**—सखे महोदर, कथमस्मद्विजयमहोत्सवं दर्शितशेषं दर्शयति त्रिजटा सीतायै।

**महोदरः**—णं तुमं एव्व भट्टा तेल्लोक्कस्स। ता तुण्हीभूदो पेक्ख दाव। (ख)

**रावणः**—विधेयोऽस्मि सांप्रतं वयस्यस्य।

**सीता**—(सलज्जौत्सुक्यम्।) विहेअह्मि संपदं पिअसहीणम्। (ग)

**त्रिजटा**—सहि सरमे, तुमं एत्थ पीठमद्दिआ भविअ तेसु तेसु रसन्तरेसु पज्जवत्थावेहि पिअसहिं जाणइम्। (घ)

**सरमा**—सहि, एव्वं होदु। ता तुवरेहि। जाव अण्णो जणो एत्थ णाअच्छइ। (ङ)

**रामः**—वत्स, कथं दर्शितशेषमस्मद्विजयवृत्तान्तं दर्शयति त्रिजटा सीतायै।

**लक्ष्मणः**—आर्य, अथ किम्। द्रष्टव्यश्च सर्वोऽपि व्यापारो दशाननस्य।

**रामः**—वत्स, एवमिदम्। तदद्भुतदर्पणेनैव मणिना पश्यावः किमाचारो दशानन इति।

**लक्ष्मणः**—यदभिमतमार्यस्य।

(तथा कुरुतः।)

---

(क) सखि जानकि, साधु साधु। प्रेक्षस्व तावत्प्रेक्षितशेषम्। भर्तू रावणस्य विजयमहोत्सवं ते दर्शयामि।

(ख) ननु त्वमेव भर्ता त्रैलोक्यस्य। तत्तूष्णींभूतः प्रेक्षस्व तावत्।

(ग) विधेयास्मि सांप्रतं प्रियसख्योः।

(घ) सखि सरमे, त्वमत्र पीठमर्दिका भूत्वा तेषु तेषु रसान्तरेषु पर्यवस्थापय प्रियसखीं जानकीम्।

(ङ) सखि, एवं भवतु। तत्त्वरय। यावदन्यो जनोऽत्र नागच्छति।

**त्रिजटा**—सहि जाणइ, इदो वरि सेसं दंसेमि। अवहिदा होहि। (इति निष्क्रान्ता।) (क)

(नेपथ्ये।)

भो भोः सन्निहिता हरियूथपाः, सपदि विज्ञापयन्तु महाराजरामदेवसन्निधाने कुमारलक्ष्मणस्य पुरतश्च। यदेष रावणः ('आगच्छन्नेव–' (७।३०) इत्यादि पूर्वोक्तं पठति।)

(प्रविश्य)

**विकृतरामः**—वत्स, दिष्ट्या दिष्ट्या।

(प्रविश्य)

**विकृतलक्ष्मणः**—

आर्येणैव बहोः कालादाहितोऽयं मनोरथः।
सारः स्वसंविभागस्य स्वयमेव विलोक्यताम् ॥ ४ ॥

**विकृतरामः**—यथोक्तं वत्सेन। (धनुः पश्यति।)

**विकृतलक्ष्मणः**—यावदहमस्य पार्ष्णिग्राहिणीमुच्चाटयामि यातुधानवाहिनीम्।

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेवैतत्।

**विकृतरामः**—(ज्याशब्दं कुर्वन्।) भो भोः पौलस्त्य पौलस्त्य,

महाशत्रोर्महाशत्रुः काङ्क्षितस्यापि काङ्क्षितः।
दिष्ट्या दृष्टस्य दृष्टोऽसि तिष्ठ तिष्ठाम्यहं पुरः ॥ ५ ॥

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेतत्।

**सीता**—(सबाष्पम्।) सहि, अज्जउत्तस्स विअ अण्णस्स कस्स मुहादो ईरिसस्स अभिआदवअणस्स संभावणा। (ख)

---

(क) सखि जानकि, इत उपरि शेषं दर्शयामि। अवहिता भव।

(ख) सखि, आर्यपुत्रस्येवान्यस्य कस्य मुखादीदृशस्याभिजातवचनस्य संभावना।

**सरमा**—सहि, एव्वं एदम् । (क)

**महोदरः**—अहो, सोअण्णं राअउत्तस्स । (ख)

**रावणः**—सखे, किमुच्यते सौजन्यमिति । किं बहुना ।

अनेन सौजन्येनायमर्थी यद्युपतिष्ठते ।
सीतां विनान्यदखिलं दत्तमेव मया भवेत् ॥ ६ ॥

**प्रकृतरामः**—भो भोः पौलस्त्य पौलस्त्य,

अत्यन्तसुजनो नाहमन्यद्देयं किमर्थये ।
देयं यद्द्वंद्वयुद्धं मे ददासि स्वयमेव यत् ॥ ७ ॥

(प्रविश्य)

**विकृतरावणः**—(विकटं विहस्य सर्वतोऽवलोक्य ।) हन्त, दाशरथिमन्वेषयतो मम दर्शनमात्रेणैव सर्वतो विभज्यन्ते सनायकाः कपिवाहिनीसैनिकाः । ही ही ।

आ तस्मान्मम सप्तलोकविजयादद्यापि युद्धक्रिया
शाम्यत्येव यदेवमायुधसकृत्संधानमात्रादपि ।
तत्कुत्राप्युचितप्रयोगविषयाभावेन नानुष्ठिता
सा मायागमसंप्रदायपदवी मय्येव धिग्जीर्यति ॥ ८ ॥

**प्रकृतलक्ष्मणः**—अहो, दुरहंकारो जाल्मस्य ।

**प्रकृतरामः**—वत्स, कास्य क्षतिरेतावतः कालादभग्नपूर्वस्य महतो दशाननाहंकारस्य ।

(प्रकृतलक्ष्मणो हुंकरोति ।)

(विकृतरामः 'महाशत्रोः' (८।५) इत्यादि पूर्वोक्तं पठति ।)

**विकृतरावणः**—

यद्येवमभियोक्ता त्वमनरण्य इवासि माम् ।
तद्विमर्दक्षमां भूमिं समेष्यावो यदीच्छसि ॥ ९ ॥

---

(क) सखि, एवमेतत् ।

(ख) अहो सौजन्यं राजपुत्रस्य ।

किं च ।

न माया नो कूटं न पुनरभिचारक्रमविधि-
र्न मन्त्रो नो तन्त्रं जगदविदितो नास्त्रनिचयः ।
त्वदभ्यस्तैरस्त्रैस्त्वदभिलषितैर्हेतिभिरपि
प्रयच्छाम्याजिं ते यदि तव दिदृक्षास्ति हृदये ॥ १० ॥

**विकृतरामः**—(सस्मितम् ।) यथा रोचते महावीराय ।

(इति निष्क्रान्तौ ।)

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेवैतत् ।

**सीता**—(सभयम् ।) कहं दाणिम् । (क)

**सरमा**—माआ क्खु एव्वं दंसिज्जइ । किं एत्थ विआरेण । (ख)

**प्रकृतरावणः**—सखे महोदर, मायादर्शितोऽपि मामुद्भ्रामयत्ययमद्भुतः कथोद्धातः ।

**विकृतलक्ष्मणः**—आर्य, भो भोः, श्रूयतां मे विज्ञापनं महोदारतया महासत्त्वतया च मनागार्यस्य संभाव्यते चिररणावमर्दपरिश्रान्त इति रावणेऽपि कदाचिद्दाक्षिण्यमक्षुण्णवीरगोष्ठीविनोदकुतूहलं च । तत इदं विज्ञापयामि ।

तैस्तैर्वध्यः स्पष्टदृष्टापराधैर्दिष्ट्या दृष्ट्योर्गोचरे चावतीर्णः ।
धिग्धिग्जीवन्मुच्यते चेदिदानीं दृश्येतायं कुत्र भूयोऽपि चोरः ॥ ११ ॥

**प्रकृतरामः**—अस्तीदमनुदर्शनं वत्सस्य ।

**प्रकृतलक्ष्मणः**—अथ किम् ।

**विकृतलक्ष्मणः**—तथा च ।

स्वसंविभागलङ्केन्द्रवधमार्यो यथाचरेत् ।
तथाद्यैवाधिसङ्ग्राममार्यमुद्योजयाम्यहम् ॥ १२ ॥

---

(क) कथमिदानीम् ।

(ख) माया खल्वेवं दर्श्यते । किमत्र विचारेण ।

**सीता**—साहु वच्छ, साहु । (क)

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेतत् ।

**विकृतलक्ष्मणः**—(दृष्ट्वा त्वरितं परिक्रामन् । सोपहासं सहर्षं च ।) नन्वयमार्यो दशाननस्य ।

त्रिभिस्त्रिवेणुं चतुरश्चतुर्भि-
र्वाहानथैकेन च सूतमेकम् ।
द्वाभ्यां च तूणीधनुषी दशापि
च्छिनत्ति बाणैर्दशभिः

(सप्रमोदम् ।)

शिरांसि ॥ १३ ॥

**सीता**—(सहर्षं सरमामालिङ्ग्य ।) सहि, दिट्ठिआ दिट्ठिआ । (ख)

**प्रकृतरावणः**—सखे, मुधायमानन्दो मुग्धायाः ।

**महोदरः**—अह इं । (ग)

**विकृतलक्ष्मणः**—नहि नहि । किरीटान् । किंच । अहो महोदारतेयमार्यस्य ।

विशिखेनैनमेकेन विद्धं हृदयमर्मणि ।
आलम्बते धनुष्कोट्या पतन्तं रावणं रथात् ॥ १४ ॥

भवतु । ('खसंविभाग–' (८।१२) इत्यादि पठित्वा निष्क्रान्तः ।)

(ततः प्रविशति रथात्पतन्तं विकृतरावणं धनुष्कोट्यावलम्बमानो विकृतरामः ।)

**विकृतरामः**—(सबहुमानम् ।)

त्रैलोक्यैश्वर्यभोक्तायं त्रैलोक्यैकमहाभटः ।
अज्ञातमुखभङ्गोऽयं त्रैलोक्यस्यैककण्टकः ॥ १५ ॥

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेतत् ।

---

(क) साधु वत्स, साधु ।

(ख) सखि, दिष्ट्या दिष्ट्या ।

(ग) अथ किम् ।

**महोदरः**—अहो गुणपक्खवाओ राअउत्तस्स । (क)

**प्रकृतरावणः**—वयस्य, किमेतेन सुजनडम्भव्यापारेण ।

**सीता**—सहि सरमे, दिट्ठं अज्जउत्तस्स सोअण्णम् । (ख)

**सरमा**—अह इं । (ग)

**विकृतरावणः**—(आश्वस्य ।) अरेरे राम, तिष्ठ तिष्ठ ।

**विकृतरामः**—नन्वहमग्रत एव ते तिष्ठामि ।

**विकृतरावणः**—(दृष्ट्वा स्वगतम् ।) कथमयं मे न सारथिः किंतु सारथिं विनिहत्य राम एव स्वयं मामवलम्बते । अहो महासत्त्वता राजपुत्रस्य तर्हि स्वयमेव रथमपि समराय संचोदयामि । (हयान्संचोदयन्दृष्ट्वा ।) कथं निहता एव मे सर्वे रथ्याश्च । तर्हि पदातिरेव पदातिमायोधयामि दाशरथिम् । (धनुः परामृशन् ।) कथं न दृश्यते चापोऽपि । कः कोऽत्र भोः धनुर्धनुः । (दृष्ट्वा ।) कथं निहत एव जनोऽयमनुयात्रिकः सर्वोऽपि ।

**विकृतरामः**—भो भो दशानन,

गृहाण यदि न श्रान्तिः करभ्रष्टमिदं धनुः ।
भूयोऽपि यदि ते जातु भुजसारः प्रकाश्यताम् ॥ १६ ॥

**विकृतरावणः**—(सोपहासम् ।)

सत्यं मामेष कार्यार्थी समयेष्वनुवर्तते ।
रणप्रियो रणेनैव रञ्जनीयोऽस्मि रावणः ॥ १७ ॥

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेवैतत् ।

**प्रकृतरावणः**—अन्यून एष कथाभागः ।

**महोदरः**—अह इं । (घ)

---

(क) अहो गुणपक्षपातो राजपुत्रस्य ।

(ख) सखि सरमे, दृष्टमार्यपुत्रस्य सौजन्यम् ।

(ग) अथ किम् ।

(घ) अथ किम् ।

**सीता**—(सावज्ञम् ।) का एदस्स रणप्पिअदा जणट्ठाणचोरस्स । (क)

**सरमा**—अह इं । (ख)

(प्रकृतरामलक्ष्मणौ सरोषं रावणं पश्यतः ।)

**विकृतरामः**—महावीर, सत्यमेतद्यद्रणेनैव ते रञ्जनीयत्वम् । तर्हि गृहाण शस्त्रं यदि मन्यसे ।

**विकृतरावणः**—तत्किमन्येन शस्त्रेण दशाननस्य ।

हेलोन्मूलितकैलासाः शेषास्तिष्ठन्तु मे भुजाः ।
द्विभुजं त्वामहं दोर्भ्यां द्वाभ्यामेवाभियोधये ॥ १८ ॥

(इति विह्वलं परिक्रामति ।)

**प्रकृतरामलक्ष्मणौ**—यथावृत्त एवायमखिलोऽपि वागारम्भः ।

**सीता**—अम्हो कक्कसदा हदासस्स । (ग)

**सरमा**—अह इं । (घ)

**प्रकृतरावणः**—सखे महोदर, किमियं जानाति कार्कश्यं रावणस्य ।

गृहीतं न विमुञ्चेयं नाभियुक्तं न हन्म्यहम् ।
न प्रसन्नो न रक्षामि ननु तेनास्मि कर्कशः ॥ १९ ॥

**महोदरः**—भो वअस्स, को एत्थ संदेहो । (ङ)

**विकृतरामः**—भो भोः पौलस्त्य पौलस्त्य,

हरिसेनावमर्देन हन्त श्रान्तश्चिरादसि ।
अद्य याहि श्व आयाहि हन्त वीक्षावहे मिथः ॥ २० ॥

किं च ।

श्रान्तो गूढः क्षपितसचिवोऽनायुधो विद्रुतो वा
चोरो हि त्वं दशमुख ततः सद्य एवासि दण्डयः ।

---

(क) कैतस्य रणप्रियता जनस्थानचोरस्य ।

(ख) अथ किम् ।

(ग) अहो कर्कशता हताशस्य ।

(घ) अथ किम् ।

(ङ) भो वयस्य, कोऽत्र संदेहः ।

द्रागस्माकं त्वशिथिलबलस्फूर्तिरक्षीणशक्ति-
द्रष्टव्यस्त्वं सकृदिति चिरादेष तीव्रोऽभिलाषः ॥ २१ ॥

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेवैतत् ।

**सीता**—कहं मुक्को एव्व हदासो अज्जउत्तेण । (क)

**सरमा**—दाणिं मुक्को विअ । (ख)

**प्रकृतरावणः**—सखे महोदर, मुधैव हर्षो विषादश्च मुग्धायाः ।

**महोदरः**—अह इं । (ग)

**विकृतरावणः**—भवतु । मम विश्रमापदेशेन स्वयमपि विश्रमावकाशमभिलषसि । भवतु । को दोषः ।

**विकृतरामः**—

अस्मद्बाणावपातेन हन्त श्रान्तश्चिरादसि ।
अद्य याहि श्व आयाहि हन्त वीक्षावहे मिथः ॥ २२ ॥

(निष्क्रान्तो विकृतरावणः ।)

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेतत् ।

**सीता**—(सावेगम् ।) सहि सरमे, णं भणामि मुक्को एव्व हदासो अज्जउत्तेण त्ति । (घ)

**सरमा**—सहि, णं भणामि दाणिं मुक्को विअ त्ति । (ङ)

**प्रकृतरावणः**—(विहस्य ।) सखे महोदर, ग्रहणमोचनयोः प्रभुं मन्यते वराकी मानुषं राक्षसेन्द्रस्य ।

**महोदरः**—अह इं । (च)

---

(क) कथं मुक्त एव हताश आर्यपुत्रेण ।

(ख) इदानीं मुक्त इव ।

(ग) अथ किम् ।

(घ) सखि सरमे, ननु भणामि मुक्त एव हताश आर्यपुत्रेणेति ।

(ङ) सखि, ननु भणामीदानीं मुक्त इवेति ।

(च) अथ किम् ।

(प्रविश्य)

**विकृतलक्ष्मणः**—(सामर्षम्।) कथं विसृष्ट एव वराकोऽयमार्येण दशाननः। (सनिर्वेदम्। निश्वस्य।) एवमेव समयोपनतमुपेक्षमाणाः पश्चादनुतप्यामहे। भवतु। रे रे हताश राक्षसापसद,

अद्य याहीति यद्वाचमाकर्ण्यैव पलायसे।
तेन ते चोरता भीरो जाल्मता च प्रकाशिता॥ २३॥

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेतत्।

**सीता**—(सनिर्वेदम्।) वच्छ, को संदेहो चोरत्तणे रावणस्स। दण्डो उण तस्स विलम्बिअदि। (क)

**सरमा**—कमेण खु होदव्वम्। (ख)

**प्रकृतरावणः**—(सरोषम्।) सखे महोदर, रावणस्यापि दण्डप्रणेतारमन्यमाशङ्कते वराकी।

**महोदरः**—अह इं। (ग)

**विकृतलक्ष्मणः**—(सत्वरमनुसरन्।) के केऽत्र हरियूथपाः।

केशे गृह्णीत बध्नीत गच्छत्येष दशाननः।
प्रतिबन्दीकृतोऽस्माभिः पापः कारासु जीर्यतु॥ २४॥

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेतत्।

**सीता**—(सहर्षम्।) दिट्ठिआ दिट्ठिआ। (घ)

**सरमा**—अह इं। (ङ)

**प्रकृतरावणः**—मुधैव हर्षो मुग्धायाः।

**विकृतलक्ष्मणः**—अथवा।

---

(क) वत्स, कः संदेहश्चोरत्वे रावणस्य। दण्डः पुनस्तस्य विलम्ब्यते।

(ख) क्रमेण खलु भवितव्यम्।

(ग) अथ किम्।

(घ) दिष्ट्या दिष्ट्या।

(ङ) अथ किम्।

तत्रैनमार्यो निजसंविभागाद्दण्डेन योग्येन चिराद्युनक्तु।
तत्खण्डितद्वित्रिभुजाशिरस्कं ददामि कारागृहपालकेभ्यः॥ २९॥

(त्वरितं परिक्रामन्।) तद्गृह्यतां गृह्यतामयं चोरो राक्षसापसदः।

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेतत्।

**विकृतलक्ष्मणः**—अथवा स्वयमेवैनमाकुलेषु केशेषु गृह्णामि।

**सरमा**—सहि जाणइ, समस्ससिहि समस्ससिहि। (क)

**सीता**—दिट्ठिआ वच्छलक्खणो सअं एव्व कज्जधुरंधरो संवुत्तो। (ख)

**सरमा**—अह इं। (ग)

**प्रकृतरावणः**—(सरोषम्।) सखे महोदर, दृष्टः किलायमस्मासु सीताहृदयानुरञ्जनप्रकारः सरमायाः। इयं हि

भर्तृवञ्चनपापेऽस्मिन्प्रवृत्ता वधमर्हति।
तदेनां प्रथमं हन्मि ततो दशरथात्मजौ॥ २६॥

(खड्गमुत्खायाभिद्रवति।)

**महोदरः**—(रावणं बलान्निगृह्य।) भो वअस्स, किं अण्णं उवक्कमसि। पेक्खणिज्जं दाव समग्गं पेक्ख। (घ)

**रावणः**—भवतु। पश्यामि।

**विकृतलक्ष्मणः**—(अनुद्रुत्य सजुगुप्सम्।) धिगस्य दुरात्मनो दुराचारस्य पापराशेरङ्गस्पर्शमारुतादपि जुगुप्सते मे हृदयम्, किं पुनरङ्गस्पर्शात्।

**विकृतरामः**—वत्स, एवमिदम्।

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेवैतत्।

---

(क) सखि जानकि, समाश्वसिहि समाश्वसिहि।

(ख) दिष्ट्या वत्सलक्ष्मणः स्वयमेव कार्यधुरंधरः संवृत्तः।

(ग) अथ किम्।

(घ) भो वयस्य, किमन्यदुपक्रमसे। प्रेक्षणीयं तावत्समग्रं प्रेक्षस्व।

**सीता**—जुत्तं उत्तं वच्छेण । (क)

**प्रकृतरावणः**—वयस्य, श्रुता वाचाटता लक्ष्मणहतकस्य ।

**महोदरः**—अह इं । (ख)

**विकृतलक्ष्मणः**—तदेवमस्तु । (उच्चैः ।) के केऽत्र हरियूथपानाम् ।

नन्वेष द्रवति स्वयं दशमुखः पश्चादनुद्रुत्य तं
गृह्णीत द्रुतमार्यसायकशिखाकृत्तावशिष्टे कचे ।
तेनेमं क्षतजावसेचनजटीभूतेन बद्ध्वा दृढं
किष्किन्धाकुहरेषु शम्बरसखं युञ्जीत कारासु च ॥ २७ ॥

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेवैतत् ।

**सीता**—(सहर्षम् ।) वच्छ लक्खण, तुवर तुवर । (ग)

**सरमा**—सहि, एव्वं एदं सो हि तुह ऊसाहं उप्पादेइ । (घ)

**प्रकृतरावणः**—सखे महोदर, कियानयं मृषानन्दो मुग्धायाः । भवतु । यथा कथंचन दृष्ट एव चिरादेतस्या मुखप्रसादलेशोऽपि ।

**महोदरः**—अह इं । (ङ)

**प्रकृतलक्ष्मणः**—आर्य, किमनेन जाल्मप्रलपितश्रवणेन ।

**प्रकृतरामः**—भवतु । दृश्यतां द्रष्टव्यम् ।

**विकृतलक्ष्मणः**—

तत्र च्छेदमथो दाहं शूलारोपणमेव वा ।
चोरस्यास्योचितं दण्डमार्य एव विधास्यति ॥ २८ ॥

**प्रकृतरामः**—अस्तीदमनुदर्शनं वत्सस्य ।

**विकृतरामः**—यदि मामस्य दण्डप्रणयने वत्सः प्रमाणयति ।

---

(क) युक्तमुक्तं वत्सेन ।

(ख) अथ किम् ।

(ग) वत्स लक्ष्मण, त्वरस्व त्वरस्व ।

(घ) सखि, एवमेतत्स हि तवोत्साहमुत्पादयति ।

(ङ) अथ किम् ।

**विकृतलक्ष्मणः**—आर्य, किमेतेन रावणमात्रकेण ।

उद्वृत्तस्य शतक्रतोरपि भवान्दण्डप्रणेता चिरा-
दर्थेऽस्मिन्मम सायकाः प्रतिभुवः किं तेन तत्तिष्ठतु ।
बन्दीषु प्रतिबन्दिकृत्यमुचितं कृत्वा तु विज्ञापये
बन्धे वास्य वधोऽपि वा ननु पुनर्मोक्षेऽपि वा त्वं प्रभुः ॥२९॥

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेवैतत् ।

**विकृतरामः**—वत्स, एवमिदम् । किंतु किंचिदिव श्रूयतां वत्सेन ।

**विकृतलक्ष्मणः**—अवहितोऽस्मि ।

**सीता**—सहि सरमे, अण्णं किं वि आअरीअदि अज्जउत्तेण । अणुमदं एव्व तं वच्छलक्खणेण । (क)

**सरमा**—अइ मुद्धे, णं कहिअं एव्व मए दाणिं रावणो मुक्को विअ त्ति ।(ख)

**विकृतरामः**—वत्स, एष मे चिरस्य हृदयाभिसंधिः ।

**विकृतलक्ष्मणः**—आज्ञापयन्त्वार्यपादाः ।

**विकृतरामः**—

मृद्नन्वानरवाहिनीं प्रतिदिशं विद्रावयन्यूथपा-
न्सुग्रीवे ससुते समग्निणि जयं तात्कालिकं लब्धवान् ।
त्वय्यप्याहितसाहसः किमपरं दत्ताद्भुतो मय्यपि
श्रान्तः क्षीणपरिच्छदश्च स कथं युध्येत युद्धोत्सुकैः ॥ ३० ॥

तथा च वत्स,

हनिष्यते यथाकाममद्य श्वो वा दशाननः ।
तं त्वनन्यरणश्रान्तं जातु चेतो दिदृक्षते ॥ ३१ ॥

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेतत् ।

**सीता**—सहिं सरमे, रणकुदूहली अज्जउत्तो । ण उण सीदावेक्खा-कुदूहली । (ग)

---

(क) सखि सरमे, अन्यत्किमप्याचर्यत आर्यपुत्रेण । अनुमतमेव तद्व-त्सलक्ष्मणेन ।

(ख) अयि मुग्धे, ननु कथितमेव मयेदानीं रावणो मुक्त इवेति ।

(ग) सखि सरमे, रणकुतूहल्यार्यपुत्रः । न पुनः सीतापेक्षाकुतूहली ।

**सरमा**—अइ मुद्धे, किंणिमित्तो एसो आरम्भो रामलक्खणाणम् ।(क)

**प्रकृतरावणः**—(सोपहासम् ।) अयि मुग्धे, रावणभुजावरुद्धायां त्वयि किं कर्तव्यं त्वदपेक्षाकुतूहलिनापि सानुजेन रामेण ।

**महोदरः**—अह इं । (ख)

**विकृतलक्ष्मणः**—(विहस्य ।) रणनिहतमपि दशाननमुज्जीवयेदेव तेन सममार्यस्य द्वन्द्वयुद्धाशंसा ।

**विकृतरामः**—सत्यमुक्तं वत्सेन । ननु वत्सेनैवेदमनुदृश्यताम् ।

संशान्ते भृगुनन्दने सुरपतेः सूनौ च याते दिवं
शस्त्राशस्त्रिविमर्दकल्पनकथाशून्ये जगन्मण्डले ।
दिष्ट्या नन्वयमेक एव हि चिराद्द्योपलब्धो रिपु-
स्तस्मिन्संप्रति दृष्टमात्रनिहते को वेद नः कौशलम् ॥ ३२ ॥

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेतत् । अन्यून एवायमावयोरुक्ति-प्रत्युक्तिसंदर्भः ।

**सरमा**—सहि, सुदो क्खु ते भत्तुणो सअं रावणवहे समुस्साहो । (ग)

**सीता**—अह इं । (घ)

**सरमा**—अइरेण सफलो होदु । (ङ)

**प्रकृतरावणः**—(विकृतं विहस्य ।)

वराकी रामविहितं वधमाशंसतेऽद्य मे ।
नाशिताखिललोकं मां न तु जानाति रावणम् ॥ ३३ ॥

**महोदरः**—अह इं । (च)

---

(क) अयि मुग्धे, किंनिमित्त एष आरम्भो रामलक्ष्मणानाम् ।

(ख) अथ किम् ।

(ग) सखि, श्रुतः खलु ते भर्तुः स्वयं रावणवधे समुत्साहः ।

(घ) अथ किम् ।

(ङ) अचिरेण सफलो भवतु ।

(च) अथ किम् ।

**विकृतलक्ष्मणः**—(विहस्य।)

क्रीडितुमिच्छत्यार्यः कियच्चिरं पङ्क्तिकण्ठेन।
गरुड इव सर्पशिशुना गज इव मार्जारपोतेन॥ ३४॥

(विकृतरामः स्मितं करोति।)

**प्रकृतरामलक्ष्मणौ**—यथावृत्तमेवैतत्।

**प्रकृतरावणः**—अहो दुरहंकारो मनुष्यपोतस्य।

**विकृतलक्ष्मणः**—

भवत्वेव यथाकामं पञ्चषक्षणखेलनम्।
पश्चादपि त्वां पश्येयं प्रतिज्ञानवकीर्णिनम्॥ ३५॥

**विकृतरामः**—(सस्मितम्।) वत्स, एवमस्तु।

**विकृतलक्ष्मणः**—आर्य, तदिदानीम्

पुरःशरोत्कृत्तनिपातिताभ्यां द्राक्कुम्भकर्णेन्द्रजितोः शिरोभ्याम्।
अन्तःपुरस्वैरविहारभाजे निवेदयावो रणकर्म राज्ञे॥ ३६॥

(विकृतरामलक्ष्मणौ निष्क्रान्तौ।)

**इति मायानाटिका।**

---

(प्रविश्य)

**त्रिजटा**—(सस्मितम्।) सहि जाणइ, दिट्ठो क्खु पच्चक्खं एव्व भत्तुणो विअअउत्तन्तो। ता मा संतप्प विज्जुज्जीहदंसिदेण महामाआवुत्तन्तेण। (क)

**सीता**—(त्रिजटामालिङ्ग्य।) ता सहि, एव्वं पराइदो सो हदासो किमाआरो त्ति जाणीहि। (ख)

**त्रिजटा**—किमेदेण हदासस्स विआरेण जो हत्थलग्गो वि राअउत्तेण ण समाविओ, किंदु अज्ज जीव त्ति मुक्को। (ग)

---

(क) सखि जानकि, दृष्टः खलु प्रत्यक्षमेव भर्तुर्विजयवृत्तान्तः। तन्मा संताप्य विद्युज्जिह्वदर्शितेन महामायावृत्तान्तेन।

(ख) तत्सखि, एवं पराजितः स हताशः किमाचार इति जानीहि।

(ग) किमेतेन हताशस्य विचारेण यो हस्तलग्नोऽपि राजपुत्रेण न समापितः, किंत्वद्य जीवेति मुक्तः।

**लक्ष्मणः**—आर्य, सत्यमाह त्रिजटा।

**रावणः**—(सरोषम्।) सखे महोदर, दृष्टः किलायमनुरञ्जनप्रकारस्त्रिजटासरमयोः सीतायाम्। तदिदानीम्

एते निहन्मि प्रागेव ये मत्कार्यस्य दूषिके।
पश्चात्तौ च हनिष्यामि प्राकृतौ रामलक्ष्मणौ॥ ३७॥

तदनेनैव हनूमदुन्मूलितेन चैत्यस्तम्भेन यथासमीहितं संपादयामि। (स्तम्भग्रहणं नाटयति।)

(सर्वा रावणं दृष्ट्वा संभ्रान्ताः।)

**लक्ष्मणः**—आर्य, पश्य पश्य दुरात्मनो दुरारम्भम्। तदयमेवावसरः शरनिकृत्तपुरःपातिते कुम्भकर्णमेघनादयोः शिरसी दर्शयितुमस्मै जाल्माय।

**रामः**—अथ किम्।

(निष्क्रान्तौ।)

(नेपथ्ये।)

पादाघातैरुदीतैरनुकलमवनीकम्पमुज्जृम्भयद्भि-
निश्वासोच्छ्वासगत्यागतिभिरुपचितारब्धवात्याशताभिः।
दृक्पातैर्दिग्विधूतैरनुदिशमवशोत्कूलितोल्कासहस्रै-
रङ्गैः स्वैर्दुर्निमित्तान्ययमतिगुणयन्कुम्भकर्णोऽभ्युपैति॥ ३८॥

किं च ब्रह्मास्त्रमन्त्राक्षरजपघटनादुर्निवारातिघोर-
ज्याचापस्यन्दनाश्वध्वजमुखनिखिलायोधनार्थार्थसार्थः।
आवृण्वन्बाणजालैरखिलमपि दिशाचक्रमत्युग्रपातै-
रन्तर्धानैकतानो जयति रणकृतश्लाघनो मेघनादः॥ ३९॥

**रावणः**—(आकर्ण्य। सहर्षम्।) हन्त, सत्यमुत्साहयति मामिह कर्मणि वत्सयोरयमनिवारितारम्भः संरम्भः। (स्तम्भग्रहणं नाटयति।)

(पुनर्नेपथ्ये।)

अम्भोधौ मन्दराद्रिद्वयमथनदशामूरुयुग्मेन तन्व-
न्सेतुत्रैविध्यमेतत्पयसि विरचयन्दारिताभ्यां भुजाभ्याम्।

मूर्ध्ना किंच त्रिकूटं गिरिमपि च नयन्द्राक्चतुष्कूटभावं
श्रीरामर्द्धिंत्रिबाणव्यतिकरवशतो हन्यते कुम्भकर्णः ॥ ४० ॥

**रावणः**—(आकर्ण्य ।) कथं रामबाणव्यतिकरवशतो हन्यते कुम्भकर्ण इति ।

**महोदरः**—भो वअस्स, अदो खु असणिहदस्स विअ भीसणो सुव्वइ एसो णिग्घोसो । (क)

(पुनर्नेपथ्ये ।)

मायासीताभिघातादखिलमपि बलं मोहयन्वानराणा-
मर्धारब्धाभिचारक्रतुविहतिसमुद्भूतकोपाभिभूतः ।
सिद्धिन्यग्रोधरोधप्रतिहतविविधक्रूरमायाप्रकारः
शक्रारिर्वक्रघोरः प्रसभमभिहतो लक्ष्मणेन क्षणेन ॥ ४१ ॥

**रावणः**—(आकर्ण्य । सावेगम् ।) कथं कथं पापाः पापमुद्घोषयन्ति मे वत्सस्य । (मुह्यति ।)

**महोदरः**—भो वअस्स, समस्ससिहि समस्ससिहि । (ख)

**रावणः**—(आश्वस्य ।) सखे महोदर,

किं राज्येन किमसुभिः किं न्वनया सीतया वा मे ।
यन्मम सर्वप्राणौ यातौ वत्सौ विमुच्य मां क्वापि ॥ ४२ ॥

(पुनर्मुह्यति ।)

**महोदरः**—अइ भो वअस्स, तुह अन्तेउरविहारमसहमाणा वराआ वाणरा जं किंवि उग्घोसं उप्पादेन्ति त्ति तक्केमि । (ग)

**रावणः**—(आश्वस्य । सरोषम् ।) भवतु । समरमवतीर्य सर्वमिदं समीकरिष्यामि । (परिक्रामन् ।) कः कोऽत्र भोः ।

---

(क) भो वयस्य, अतः खल्वशनिहतस्येव भीषणः श्रूयत एष निर्घोषः ।

(ख) भो वयस्य, समाश्वसिहि समाश्वसिहि ।

(ग) अयि भो वयस्य, तवान्तःपुरविहारमसहमाना वराका वानरा यत्किमप्युद्घोषमुत्पादयन्तीति तर्कयामि ।

(प्रविश्य)

**सूतः**—(प्रणम्य।) आज्ञापयन्तु लङ्केश्वरस्वामिपादाः।

**रावणः**—

शैवं शूलवरं धनुर्मयकृतं पाशायुधं वारुणं
कौबेरं रथमस्त्रशस्त्रमखिलं देवासुरेभ्यो हृतम्।
मौलं तच्च बलं महत्सुमहतीं मायां जगन्मोहिनीं
यद्यत्संगरसाधनं तदखिलं सज्जीकुरुष्वाग्रतः॥ ४३॥

(निष्क्रान्तः सूतः।)

**रावणः**—अहमपि यथोचितं संपादयामि। (निष्क्रान्तः।)

**महोदरः**—ता अहं वि वअस्सलङ्केसरस्स विअअप्पत्थाणसोत्थिवाअणमोदअं गेह्णीअ पुणोवि इह आअच्छम्हि। (निष्क्रान्तः।) (क)

**सरमा**—सहि तिअडे, तुमं झत्ति गदुअ समरउत्तन्तं जाणीअ तुरिअं आअच्छ। अहं वि इह एव्व दारुपव्वदतिरोहाणे सह रक्खसीहिं जाणइं पडिवालेन्ती लङ्कावावारं जाणिस्सम्। (ख)

(निष्क्रान्ताः सर्वे।)

इत्यष्टमोऽङ्कः।

---

नवमोऽङ्कः।

(प्रविश्य)

**लङ्का**—सखि निकुम्भिले, इत इतस्तावत्।

---

(क) तदहमपि वयस्यलङ्केश्वरस्य विजयप्रस्थानस्वस्तिवाचनमोदकं गृहीत्वा पुनरपीहागच्छामि।

(ख) सखि त्रिजटे, त्वं झटिति गत्वा समरवृत्तान्तं ज्ञात्वा त्वरितमागच्छ। अहमपीहैव दारुपर्वततिरोधाने सह राक्षसीभिर्जानकीं प्रतिपालयन्ती लङ्काव्यापारं ज्ञास्ये।

(प्रविश्य)

**निकुम्भिला**—कामं सद्दावेइ। (दृष्ट्वा।) कहं अज्जा लङ्का। अज्जे लङ्के, एत्तिअं कालं ण दिट्ठासि। दाणिं कहिं पत्थिदासि। (क)

**लङ्का**—वत्से निकुम्भिले, न जानासि खल्वेको वानरो रावणशरणाया अप्यशरणाया इव मे छेदभेददाहमुखाभिः कदर्थनाभिः संमोहं कृतवान्।

**निकुम्भिला**—(निःश्वस्य। सकम्पम्।) अज्जे लङ्के, अलं अलं ते तस्स कहणेण। (ख)

**लङ्का**—ततो निर्विण्णाहमिमं वृत्तान्तं भगवते पितामहाय निवेदयामीति यावदस्य पादमूलमुपसर्पामि तावदेव स विदितवेदितव्यो मामेवमाश्वासितवान्।

**निकुम्भिला**—कहं विअ। (ग)

**लङ्का**—(कर्णे।) एवमिव।

**निकुम्भिला**—हा हदम्हि मन्दभाइणी। (मुह्यति।) (घ)

**लङ्का**—वत्से निकुम्भिले, समाश्वसिहि समाश्वसिहि।

**निकुम्भिला**—(आश्वस्य। सनिर्वेदम्।) अज्जे लङ्के, सुण्णारण्णं क्खु अम्हे हुविस्सामो। (ङ)

**लङ्का**—वत्से निकुम्भिले, मैवं संतप्ता भव। विभीषणः खल्वावयोर्हतशेषस्य च राक्षसकुलस्य च चिरादनुपालनाय रामेण—(इत्यर्धोक्ते।) अथवा महाराजरामदेवेन स्वयमिहैव राजभावे स्थापयिष्यते।

**निकुम्भिला**—(सबाष्पम्।) अज्जे, एव्वं होदु। (च)

---

(क) कामं शब्दापयति। कथमार्या लङ्का। आर्ये लङ्के, एतावन्तं कालं न दृष्टासि। इदानीं कुत्र प्रस्थितासि।

(ख) आर्ये लङ्के, अलमलं ते तस्य कथनेन।

(ग) कथमिव।

(घ) हा हतास्मि मन्दभागिनी।

(ङ) आर्ये लङ्के, शून्यारण्यं खल्वावां भविष्यामः।

(च) आर्ये, एवं भवतु।

**लङ्का**—अतःपरमावाभ्यामशेषैरपि हतशेषै राक्षसकुलैः 'यथा राजा तथा प्रजाः' इति नीतिमनुसृत्य सौम्यन्तैरेव भवितव्यम् । त्वया घोराभिचारभूमिभावं परित्यज्य महायज्ञक्षेत्रभावश्चिरादुररीकर्तव्यः ।

**निकुम्भिला**—हुं । (क)

**लङ्का**—मया च मिथिलाकिष्किन्धाप्रभृतिभिर्नगरीभिः सह सखीभावमवलम्ब्य तत्रभवत्याः स्वयमयोध्यायास्तेन तेन सारवस्तूपहारेण किंकरीभावश्चिरादूरीकर्तव्यः ।

**निकुम्भिला**—अम्हो कालस्स वेसम्मम् । (ख) (संस्कृतमाश्रित्य ।)

सन्ति हन्त त्रिलोकेऽस्मिन्या या नगरदेवताः ।
ताभिराराध्यया कापि त्वयाप्याराध्यते पुरी ॥ १ ॥

**लङ्का**—तदिदानीमावयोः सीतादेवीचरणशुश्रूषामन्तरेण न किंचिदपि कर्तव्यमवशिष्यते । ततस्तत्पादमूलमेव गच्छावः ।

**निकुम्भिला**—एव्वं एदम् । (ग)

(परिक्रामतः ।)

**निकुम्भिला**—अज्जे, समरउत्तन्तं जाणिअ एव्वं करेह्म । (घ)

(नेपथ्ये ।)

एकद्वाः क्वचन द्वित्राः क्वापि त्रिचतुराः क्वचित् ।
रुषिताः कपिमेकैकं रुन्धन्ति दशकन्धराः ॥ २ ॥

तथाहि ।

आविष्कुर्वति रावणे युधि निजां मायां जगन्मोहिनी-
मेकैकं परितः कपिं त्रिचतुराः संरुन्धते रावणाः ।

---

(क) हुं ।

(ख) अहो कालस्य वैषम्यम् ।

(ग) एवमेतत् ।

(घ) आर्ये, समरवृत्तान्तं ज्ञात्वेवं कुर्वः ।

यूथेन्द्रानपि पञ्चषाः कपिपतिं सुग्रीवमप्यङ्गदं
समाष्टाः शतशस्तु लक्ष्मणमहो रामं त्वसंख्या इमे ॥ ३ ॥

पश्य पश्य। आश्चर्यमाश्चर्यम्।

एकैकं दशकण्ठमाशु परितः संख्यातिगा राघवा
मृद्नन्ति प्रसभं हयध्वजरथच्छत्रायुधध्वंसिनः।
तत्किं वेद रघूद्वहः सखि महागान्धर्वमस्त्रोत्तमं
यद्देवात्त्रिपुरान्तकात्त्रिभुवने जानाति नान्यो जनः ॥ ४ ॥

लङ्का—(दृष्ट्वा सविषादम्।) हन्त हन्त,

गन्धर्वदैत्यसुरपन्नगयक्षरक्षो-
विद्याधरादिभिरपि त्रिजगज्जनौघैः।
एकोऽपि नैव समदर्शि यदीयकोणो
मौलं बलं तदवधीन्निमिषेण रामः ॥ ५ ॥

अयि निकुम्भिले, पश्य पश्य।

निहत्य मायास्तिमिरप्रकारा निशाचरेन्द्रस्य स रामचन्द्रः।
रथस्य वर्त्मानि निरुध्य बाणैरिमं समभ्येति पदातिरेव ॥ ६ ॥

(उभे सहसा चक्षुःप्रतिघातं रूपयतः।)

लङ्का—

किं सिन्धोर्बडवानलोऽयमुदितः किं वागतो भास्करो
भूलोकं ननु मातलीरितहयो मन्येऽयमैन्द्रो रथः।

(निश्वस्य।)

विस्पष्टं विकरिष्यते सुरवरैरित्युक्तवान्माल्यवा-
न्संवादाय भवत्यहो शतमखः स्वस्यन्दनप्रेषणात् ॥ ७ ॥

**निकुम्भिला**—(सास्रम्।) अज्जे लङ्के, इन्दविअएण खु तिहुवणम्मि पडिट्ठाविअइन्दविअइणामहेअस्स मह सामिणो रक्खसलोअजुवराअस्स अचिन्तिअपुव्वेण हठोट्ठिएण तेण दसाविसेसेण ईरिसं अवत्थन्तरं पाविदाणं अह्माणं पेक्खन्तीणं एव्व काइं काइं ण किदाइं कदत्थणाइं। (रोदिति।) (क)

---

(क) आर्ये लङ्के, इन्द्रविजयेन खलु त्रिभुवने प्रतिष्ठापितेन्द्रविजयिनाम-

**लङ्का**—वत्से, समाश्वसिहि समाश्वसिहि ।

चिरपरिचितराजव्यत्यये पत्तनानां
ननु भवति नवीने राज्ञि कोऽपि प्रकारः ।
तदपि तदनुजन्मा यन्मया च त्वया च
प्रकृतिषु निजसीमापालनात्पालनीयः ॥ ८ ॥

यक्षाधिराजकलिता स्थितिरावयोर्हि
रक्षोधिराजभुजपालनविस्मृताभूत् ।
तद्धर्मभूषणविभीषणपालनेन
सर्वोऽप्ययं शममुपेष्यति नौ विषादः ॥ ९ ॥

**निकुम्भिला**—(आश्वस्य ।) एव्वं होदु । (क)

(नेपथ्ये कलकलः ।)

**निकुम्भिला**—(कर्णं दत्वा सविस्मयम् ।) अज्जे, पलअघणत्थणिदमंसल-भीसणो कोवि अस्सुदपुव्वो सुणीअदि एसो णिग्घोसो । (ख)

**लङ्का**—(आकर्ण्य ।) अहो कालस्य कोऽपि विपर्यासः ।

दशाननभयान्मूकास्त्रिदशाः सन्तु चेतनाः ।
रथस्याचेतनस्यापि लक्षितः किं नु निस्वनः ॥ १० ॥

**निकुम्भिला**—एव्वं एदम् । (ग)

**लङ्का**—(निश्वस्य ।) सखि निकुम्भिले, सर्वमिदमनुचिन्तनीयमनुकथनीयमनुमोदनीयं च यद्येकोऽपि जीविष्यति रक्षसां जीवभूतो दशाननः ।

---

धेयस्य मम स्वामिनो राक्षसलोकयुवराजस्याचिन्तितपूर्वेण हठोत्थितेन तेन दशाविशेषेणेदृशमवस्थान्तरं प्रापितानामस्माकं पश्यन्तीनामेव कानि कानि न कृतानि कदर्थनानि ।

(क) एवं भवतु ।

(ख) आर्ये, प्रलयघनस्तनितमांसलभीषणः कोऽप्यश्रुतपूर्वः श्रूयत एष निर्घोषः ।

(ग) एवमेतत् ।

(नेपथ्ये कलकलः ।)

**लङ्का**—कथं छिन्नान्येव शिरांसि रामेण रावणस्य । कथं च सद्य एव प्ररोहन्ति तादृशान्येव तानि पुनरन्यानि । अथवा ।

मन्येऽमुष्य शिरश्छेदं मुकुटच्छेदतो वरम् ।
शिरांसि मुकुटैः साकं रोहन्ति मुकुटास्तु नो ॥ ११ ॥

तदमर्षितो दशाननश्च

शूलं खड्गं परशुमशनिं तोमरं भिण्डिपालं
बाणान्पाशानहिकुलकृतान्पादपान्पर्वतांश्च ।
विष्वग्रामे विकिरति रजोवर्षवात्यासहस्र-
व्यामूढाशावलयनिपतद्धोरदम्भोलिकोटिः ॥ १२ ॥

**निकुम्भिला**—दिट्ठिआ दिट्ठिआ । (क)

**लङ्का**—वत्से, पश्य पश्य ।

रामोऽप्यसंभ्रमोपात्तदिव्यास्त्ररसनाञ्चलैः ।
गाढानि रावणास्त्राणि ग्रासमानोऽभिवर्तते ॥ १३ ॥

**निकुम्भिला**—अम्हो, माणुसो वि रक्खसाणं भीसणदंसणो एसो । (ख)

**लङ्का**—कः संदेहः । य एष

किरीटानि च्छिन्दन्किमपि न च विन्दन्ननुपदं
निकृन्तन्ग्रीवा अप्यसकृदकृतार्थो रघुपतिः ।
क्रमप्राप्तं शत्रोर्हृदयमशनेरप्यविषयं
विसृष्टब्रह्मास्त्रो विदलयति हाहास्मि निहता ॥ १४ ॥

(मुह्यति ।)

**निकुम्भिला**—अज्जे, समस्ससिहि समस्ससिहि । (ग)

(नेपथ्ये ।)

भो भो हरियूथपाः, समादिशन्ति भवतः सर्वानेव रामदेवस्वामिपादाः ।

---

(क) दिष्ट्या दिष्ट्या ।

(ख) अहो, मानुषोऽपि राक्षसानां भीषणदर्शन एषः ।

(ग) वत्से, समाश्वसिहि समाश्वसिहि ।

लङ्कारोधात्कपीनां विरमतु पृतना राक्षसेषु प्रहारः
सज्जोऽपि त्यज्यतां तेष्वपजितचकिताः प्रद्रुताः सान्त्वनीयाः ।
स्कन्धावारे पुरे वा भवतु च परितः संचरो निर्निरोधो
लङ्का यातु प्रसादं पुनरपि च यथा मन्थमुक्ताब्धिवेला ॥ १५ ॥

**लङ्का**—(सहर्षं निकुम्भिलामालिङ्ग्य ।) वत्से, दिष्ट्या वर्धावहे ।

(पुनर्नेपथ्ये ।)

स्पर्धारब्धोऽपि सद्यः कपिपिशितभुजां संगरः शान्तिमेतु
प्रीतिश्चान्योन्यमेषामविरतमयतामृद्धिमद्योभयेषाम् ।
यो यो रुद्धः स सद्यः कपिषु निशिचरेष्वर्च्यतां मुच्यतां वा
लङ्काकिष्किन्धयोर्यद्रघुपतिरकरोदैकराज्यप्रसादम् ॥ १६ ॥

किंच ।

लङ्कासीम्नि विभीषणस्य सुहृदः श्रीरामपादेङ्गित-
ज्ञानोदारकुमारलक्ष्मणकृते राज्याभिषेकोत्सवे ।
हिंसावैरविरामसौम्यचरिताः सर्वेऽपि तस्मिन्नृपे
साम्यं शीलगुणेन बिभ्रतु यथा राजा तथा हि प्रजाः ॥ १७ ॥

**लङ्का**—वत्से निकुम्भिले, सुष्ठु संदिष्टममात्यपनसेन ।

(पुनर्नेपथ्ये ।)

प्राकारगोपुरगृहोपवनप्रतोली-
भागेषु भग्नविषमाणि समीक्रियन्ताम् ।
सौमित्रिसज्जदभिषेकमहोत्सवस्य
लङ्काप्रवेशसमयोऽद्य विभीषणस्य ॥ १८ ॥

**निकुम्भिला**—दिट्ठिआ दिट्ठिआ । (लङ्कामालिङ्गति ।) (क)

**लङ्का**—(सानन्दम् ।) वत्से निकुम्भिले, तदिदानीमावाभ्यां
सीतादेव्याः सन्निधावीश्वराया यद्यद्वृत्तं तद्विजिज्ञासितव्यम् ।
सर्वेषां नो रक्षसां प्राणिनामप्यस्या हस्ते वर्तते जीवनाडी ॥ १९ ॥

(परिक्रामतः ।)

---

(क) दिष्ट्या दिष्ट्या ।

(नेपथ्ये।)

लङ्के वेत्रकरा पुरश्चर झटित्युत्सारयन्ती जना-
न्सर्वांश्चाम्ब निकुम्भिले त्वमभितः संमर्दमामर्दय।
देव्या मैथिलकन्ययाद्य शिबिकामध्यासितां पार्श्वयो-
रालम्ब्य त्रिजटा स्वयं च सरमाप्यध्यक्षिते रक्षताम्॥ २०॥

**निकुम्भिला**—दिट्ठिआ दिट्ठिआ। (हर्षनृत्तमभिनयति।) (क)

**लङ्का**—वत्से, अनतिक्रमणीयनियोगो हि सांप्रतमस्माकं महाराजविभीषणः।

**निकुम्भिला**—एव्वं एदम्। (ख)

**लङ्का**—(विचिन्त्य।)

आबालवृद्धमनुनीतमिहाद्य पश्या-
म्याश्वासितं जनमनेन विभीषणेन।
मन्दोदरीं दुहितरं तु विलोक्य खिन्नां
नो वेद्मि किंनु मय एष करिष्यतीति॥ २१॥

**निकुम्भिला**—णं अज्ज वि अपरिच्चत्तरावणपक्खवाआणं अह्माणं एसो अण्णोण्णसंवादो वि अवराहं विअ आवहइ। ता सीदादेवीए एव्व पादमूलं गच्छम्हो। (ग)

(निष्क्रान्ते।)

**इति नवमोऽङ्कः।**

---

दशमोऽङ्कः।

(प्रविश्य)

**मयः**—(सास्रम्।) अहो, कथमवान्तरप्रलयो रामेण राक्षसानाम्।

---

(क) दिष्ट्या दिष्ट्या।

(ख) एवमेतत्।

(ग) नन्वद्याप्यपरित्यक्तरावणपक्षपातयोरावयोरेषोऽन्योन्यसंवादोऽप्यपराधमिवावहते। तत्सीतादेव्या एव पादमूलं गच्छावः।

सर्वे हा बत राक्षसा विनिहताः स्त्रीबालवृद्धान्विना
मुक्ताः केऽपि महोदरप्रभृतयो जात्यानया त्याजिताः ।
तत्तस्मिन्नविधास्यतः प्रतिविधिं यं कंचिदद्यैव मे
व्यर्था सा कुहना समस्तगहना व्यर्थं च मे जीवितम् ॥ १ ॥

(दृष्ट्वा ।) कथं रामवृत्तान्तविज्ञानाय प्रहिता समागच्छति वत्सा शूर्पणखा । (सश्लाघम् ।)

स्त्रीस्वभावस्थिताप्येषा जातैका जातिगन्धिनी ।
सेयं प्रतिक्रियावेशपिशाचग्रहमोहिता ॥ २ ॥

(प्रविश्य)

**शूर्पणखा**—(सास्रम् ।) हा अज्ज रावण, हा अज्ज कुम्भअण्ण, हा वच्छ मेहणाद । (मुह्यति ।) (क)

**मयः**—वत्से, समाश्वसिहि समाश्वसिहि । प्रतिविधानलेशस्यापि किमस्ति कश्चिदवकाशः ।

**शूर्पणखा**—(निश्वस्य ।) मादामह, अदो परं वि किं अत्थि पडिविधाणम् । (ख)

**मयः**—

अप्राप्यैव मनोरथं दशमुखः सीतानिमित्तं हतः
किं तेनाशरजातिरेव निखिला यत्तन्निमित्तं हता ।
तत्सीतैव हि मृत्युरद्य जनिता रक्षःकुलस्यास्य न-
स्तस्यामेव विधीयतां प्रतिविधिः सर्वैरुपायैरपि ॥ ३ ॥

**शूर्पणखा**—णं अदिक्कन्दो समओ सीदं उद्दिसिअ किंवि अच्चाहिदं आअरिदुम् । (ग)

**मयः**—एवमिदम् । यतः ।

---

(क) हा आर्य रावण, हा आर्य कुम्भकर्ण, हा वत्स मेघनाद ।

(ख) मातामह, अतःपरमपि किमस्ति प्रतिविधानम् ।

(ग) नन्वतिक्रान्तः समयः सीतामुद्दिश्य किमप्यत्याहितमाचरितुम् ।

तद्यानं त्रिजटा च सा च सरमा संरक्षतः पार्श्वयो-
र्विष्वग्यान्ति विभीषणस्य सचिवा व्याधूतवेत्राञ्चलाः।
तत्सीतामधिकृत्य शक्यमिह नः कर्तुं किमत्याहितं
तद्रामेण वियोगमेव पुनरप्यस्या विधास्याम्यहम् ॥ ४ ॥

**शूर्पणखा**—(आश्वस्य।) अज्ज, वअणाइं एव्व मं सुहाअन्ति। किं उण णिव्वत्तिए कज्जे। (क)

**मयः**—वत्से, नन्वतिक्रामत्यवसरो निर्वोढुमिदं कार्यसर्वस्वम्। तज्ज्ञायतां किमाचारो रामो लक्ष्मणश्चेति।

**शूर्पणखा**—अज्ज, ण लक्खिओ मए रामो लक्खणो वा। किं दु तस्स परिअणवाहारो कोवि सुदो। (ख)

**मयः**—कीदृशः।

**शूर्पणखा**—(संस्कृतमाश्रित्य।)

परगृहचिरवासशङ्कयासौ जनकसुतां प्रति मन्दरागबन्धः।
क्वचिदपि घनमोहगाढलज्जाशबलितमूढमना निगूढमास्ते ॥ ५ ॥

इति।

**मयः**—अहो जातिगन्धीनि चरित्राणि रामस्य।

**शूर्पणखा**—अह इं। किंदु ण जाणादि समएसु कादव्वं अकादव्वं अ। अप्पसुहमग्गहिअआ क्खु माणुसी जाई। (ग)

**मयः**—(सस्मितम्।) वत्से, निजहृदयमाविष्कुर्वत्या भवत्या रामलक्ष्मणयोराहितोऽयं चिरादुपालम्भः। (सपरिहासम्।) वत्से, किं बहुना।

---

(क) आर्य, वचनान्येव मां सुखापयन्ति। किं पुनर्निर्वर्तिते कार्ये।

(ख) आर्य, न लक्षितो मया रामो लक्ष्मणो वा। किंतु तस्य परिजनव्याहारः कोऽपि श्रुतः।

(ग) अथ किम्। किंतु न जानाति समयेषु कर्तव्यमकर्तव्यं च। अल्पसुखमग्नहृदया खलु मानुषी जातिः।

रामो वा त्वां वृषस्यन्तीं लक्ष्मणो वा भजेत चेत् ।
न सीतापहृतास्य स्यान्न च स्याद्रक्षसां वधः ॥ ६ ॥

**शूर्पणखा**—(सनिश्वासं हुंकृत्य ।) किदं अदिक्कन्दं अक्कन्दिअ । जं पक्किदं तं अणुचिट्ठ । (क)

**मयः**—एवमिदम् । (विचिन्त्य ।)

सीताराघवयोर्योगो यथा विघटितो भवेत् ।
तथा त्वं चिन्तय क्षिप्रं कांचित्तात्कालिकीं क्रियाम् ॥ ७ ॥

**शूर्पणखा**—अज्ज, तुमं एव्व चिन्तेहि जं एत्थ करणिज्जम् । (ख)

**मयः**—मम त्वेवं प्रतिभाति । श्रूयतां यत्करिष्यते ।

अहं रामो भूत्वा जनसदसि सीतामुपगतां
परित्यक्ष्याम्येनां परभवनवासं प्रकटयन् ।
ततः सा रोषान्धा नवमसहमाना परिभवं
प्रवेक्ष्यत्यम्भोधिं दहनमथवा शोकविवशा ॥ ८ ॥

**शूर्पणखा**—उववण्णं मन्तिदं अज्जेण । (ग)

**मयः**—तदस्य प्रकृतस्य कर्मणः प्रवर्तनाय समयप्रतीक्षो भवामि ।

**शूर्पणखा**—एव्वं होदु । (घ)

(नेपथ्ये ।)

अहो बत देवी सीता

मदान्धरक्षोगृहवासदोषशङ्कानुषक्तेन रघूद्वहेन ।
त्यक्ता समक्षं महतो जनस्य त्यजत्यहो देहमियं हुताशे ॥ ९ ॥

(प्रविश्य)

**त्रिजटा सरमा च**—हा, हदम्हि मन्दभाइणी । (मुह्यतः ।) (ङ)

---

**(क)** कृतमतिक्रान्तमाक्रन्द्य । यत्प्रकृतं तदनुतिष्ठ ।

**(ख)** आर्य, त्वमेव चिन्तय यदत्र करणीयम् ।

**(ग)** उपपन्नं मन्त्रितमार्येण ।

**(घ)** एवं भवतु ।

**(ङ)** हा, हतास्मि मन्दभागिनी ।

**शूर्पणखा**—(सहर्षम् ।) दिट्ठिआ दिट्ठिआ । (क)

**मयः**—(दृष्ट्वा सविस्मयम् ।) वत्से, पश्य पश्य ।

पाषाणेषु जलेषु चाप्रतिहतं यो वा क्रमेत स्वयं
सीतायामयमेव हन्त दहनः कुण्ठीभवन्दृश्यते ।

**शूर्पणखा**—अच्चरिअं अच्चरिअं । (ख)

**मयः**—वत्से, अत्यल्पमिदम् ।

यत्तेजोऽभिहतो निरन्तरमयं ध्मातोऽपि धूपायते
तद्दग्धं कुलमेव धिक्पलभुजां सीतामयेनाग्निना ॥ १० ॥

**शूर्पणखा**—एव्वमेदम् । (ग)

**मयः**—तदिदानीम्

दृष्टं द्रष्टव्यमस्माकं कर्तव्यं किमतःपरम् ।

(विचिन्त्य ।)

विभीषणोऽनुसर्तव्यः स हि राजा कुलस्य नः ॥ ११ ॥

(निष्क्रान्तौ ।)

(नेपथ्ये ।)

भो भो रामचन्द्र,

जातः पङ्क्तिरथस्य पायसवपुर्मुक्तो हि यज्ञे भवा-
न्सीतेयं जनकस्य देवयजनक्षेत्रात्किलाजायत ।
तत्त्यक्त्वा पुरुषान्तरव्यवहितिं रूपान्तरव्याजम-
प्यार्येयं मुनिदेवसंसदि गुणश्लाघ्या मया दीयते ॥ १२ ॥

(ततः प्रविशतो रामलक्ष्मणौ सुग्रीवविभीषणौ च ।)

**रामः**—अयि वत्स, अये वयस्यौ ।

**लक्ष्मणः**—आज्ञापयन्त्वार्यपादाः ।

---

(क) दिष्ट्या दिष्ट्या ।

(ख) आश्चर्यमाश्चर्यम् ।

(ग) एवमेतत् ।

**सुग्रीवविभीषणौ**—आज्ञापयन्तु स्वामिपादाः ।

**रामः**—किं बहुना ।

जानेऽहं जनकात्मजां त्रिभुवनश्लाघ्यैकपत्नीव्रतां
दृष्टा चाद्भुतदर्पणेन मणिना रक्षस्तृणीकुर्वती ।
दिष्ट्येयं तदपि त्रिलोकजनताचित्तस्थितिं रक्षितुं
संघेऽस्मिन्दहनं गता स्वयमियं तेनैव मे दीयते ॥ १३ ॥

**लक्ष्मणः**—कीदृशीयमार्याकृतेऽपि त्रिभुवनचित्तरक्षा ।

**सुग्रीवः**—कुमार, अथ किम् ।

**विभीषणः**—किं बहुना ।

न तदग्निशिखा कुर्याद्यत्कुर्याज्जनकात्मजा ।
इत्थमुद्घोष्यते नूनमृषिभिः क्रान्तदर्शिभिः ॥ १४ ॥

(नेपथ्ये ।)

भृगोरेषा कन्या प्रथममथ दुग्धाब्धितनया
विदेहानां नेतुस्तदनु यजनक्षेत्रजनिता ।
अनन्या ते विष्णोस्त्रिजगदवनायावतरणे-
ष्वनु त्वामप्येषा स्वयमवतरत्येव नियता ॥ १५ ॥

**विभीषणः**—(दृष्ट्वा ।) कथं प्रमुग्धैव त्रिजटा सरमा च ।

आश्वसिहि त्रिजटे त्वं त्वमपि च सरमे समाश्वसिहि ।
किमिह महोत्सववृद्धौ द्रष्टव्यायां प्रमोहेन ॥ १६ ॥

**त्रिजटासरमे**—(आश्वस्य सविस्मयं सकरुणं च ।) सहि जाणइ, कहं दहणं पविट्ठासि । अह्मे वि तहिं एव्व प्पविसम्मो । (प्रवेष्टुमुद्यते । दृष्ट्वा सविस्मयं सानन्दं च ।) कहं तादेण विअ अग्गिदेवेण जाणई उच्छङ्गम्मि परिलालिज्जइ । अहव सलङ्काणअरस्स असोअवणस्स णिरवसेसदाहप्पवुत्तो एसो हुदवहो एदाए सीदादेवीए णिवासभूदो त्ति एक्कम्मि एव्व सिंसवारुक्खम्मि धूमं वि णिअं ण पेसिदवन्तो । सो एव्व हुदवहो तं एव्व सीदादेविं कहं पहविस्सदि परिभविदुम् । ता समीवं गदुअ पेक्खम्ह । (निष्क्रान्ते ।) (क)

---

(क) सखि जानकि, कथं दहनं प्रविष्टासि । आवामपि तत्रैव प्रविशावः ।

(नेपथ्ये।)

ऋषिदेवगणानुमोदितां गिरमग्नेरविशङ्कितं कुरु।
भजतामनया समं भवानभिषेकोत्सवमस्मदीप्सितम् ॥ १७ ॥

किं च वत्स,

सत्ये या स्थितिरच्युता मम कृता वत्सेन खेदैर्निजैः
सैवेयं दिवि जायते सुरपतेरर्धासने मे स्थितिः।
सत्यं यद्भवतोऽभिषेचनविधौ तत्पूरयन्मामकं
त्रायेथा भरतं चिराय जननीप्राप्तापवादाकुलम् ॥ १८ ॥

अपि च।

वत्से जानकि वत्स लक्ष्मण ननूपालभ्य एवास्मि वां
यत्क्लेशे रुचिरं मयैव हि युवामेतावति स्थापितौ।
तद्यूयं जनचित्तरञ्जनगुणप्रायापदानोन्नता-
श्चत्वारस्तनयाः स्नुषा त्वमिति च श्लाघ्या ममैवोन्नतिः ॥ १९ ॥

**रामः**—दिष्ट्या खलु तातपादैरपरित्यागो वत्सभरतस्य।

(पुनर्नेपथ्ये।)

शान्तं पापं शान्तं पापम्।

भवतो वनवासोऽयं भरतस्य मतो यदि।
तदा तस्य परित्यागशपथः सार्थको मम ॥ २० ॥

**रामः**—सर्वज्ञा एव हि तातपादाः।

(पुनर्नेपथ्ये।)

स त्वत्पादुकयोर्निवेश्य निखिलं राज्याधिकारक्रमं
शत्रुघ्नेन तपस्विवेषशुचिना साकं तपस्वीभवन्।

---

कथं तातेनेवाग्निदेवेन आनक्युत्सङ्गे परिलाल्यते। अथवा सलङ्कानगरस्याशोकवनस्य निरवशेषदाहप्रवृत्त एव हुतवह एतस्याः सीतादेव्या निवासभूत इत्येकस्मिन्नेव शिंशपावृक्षे धूममपि निजं न प्रेषितवान्। स एव हुतवहस्तमेव सीतादेवीं कथं प्रभविष्यति परिभवितुम्। तत्समीपं गत्वा पश्यावः।

त्वामाराधयति त्वदीयमखिलं राज्यं चिरात्पालय-
न्द्रष्टव्यः स चिराय संभृतभवद्राज्याभिषेकोत्सवः ॥ २१ ॥

**रामः**—

वनं वा राज्यं वा मम बहुमतं तातविहितं
न तु त्रैलोक्यश्रीरपि भुजजिता मे बहुमता ।
तदत्र भ्रातॄणां तदिदमुपभोगोपकरणं
समृद्धं वो राज्यं निखिलमनुपाल्यं खलु मया ॥ २२ ॥

(नेपथ्ये ।)

अयि वत्स,

एवमस्तु चिरं जीव यजस्व विविधैर्मखैः ।
इन्द्रानुभावितानस्मानेष त्वं द्रष्टुमर्हसि ॥ २३ ॥

**रामः**—अनुगृहीतोऽस्मि ।

**लक्ष्मणः**—आश्चर्यमाश्चर्यम् ।

पाकारिप्रमुखैः स्वयं सुरवरैरार्यस्य दत्ते वरे
संसुप्तेष्विव वानरेषु निहतेष्वप्युत्थितेषु क्षणात् ।
तद्गात्राणि हतान्यपि द्विजगणैर्ग्रस्तान्यपि श्वापदैः
स्वासु स्वास्वभितोऽपि मूर्तिषु यथास्थानं मिलन्ति स्वयम् ॥ २४ ॥

**विभीषणः**—(प्रणम्य ।)

यद्यद्दिक्पालकेभ्यः प्रसभमपहृतं रावणेनार्थजातं
तत्तत्तेभ्यो यथास्वं भवदनुमतितः प्रेषितं सर्वमेव ।
एतत्तु स्वामिचित्तानुगुणगतिगुणं पुष्पकं नाम यानं
स्वीकर्तुं प्रेषितुं वा पुनरपि धनदायैव देवः प्रमाणम् ॥ २५ ॥

**रामः**—(दृष्ट्वा सविस्मयम् ।) वत्स, पश्य पश्य ।

चन्द्रमण्डलमेवेदं सर्वदारब्धचन्द्रिकम् ।
अक्षय्यतेच्छासंचारावस्य द्वावधिकौ गुणौ ॥ २६ ॥

**लक्ष्मणः**—एवमिदम् ।

(नेपथ्ये ।)

पुत्रेष्टौ मम दिव्यपायसवपुस्त्वं राम येनार्पित-
स्तेनेयं यजनेश्वरेण यजनक्षोणीभवा दीयते ।
तत्स्वीकृत्य पुनर्जयश्रियमिव त्रैलोक्यसेव्यामिमां
सापत्न्यं कुरु शाश्वतं त्वमनया साकेतराज्यश्रियः ॥ २७ ॥

**रामः**—(सहर्षम् ।) वत्स, दिष्ट्यानुमतमिन्द्रानुगामिभिस्तातपादैः । (लक्ष्मणेन सह विमानारोहणं नाटयन्नङ्के सीतामारोप्य ।) इत इतः सख्यौ ।

(प्रविश्य)

**त्रिजटासरमे**—(विमानारोहणं रूपयन्त्यौ दृष्ट्वा सहर्षम् ।) दिट्ठिआ दिट्ठा संपुण्णमणोरहा पिअसही जाणई । (क)

**सीता**—(सस्मितं सादरम् ।) हला, एत्थ उववसिह । (ख)

(उभे उपविशतः ।)

**रामः**—(सानन्दम् ।) किं बहुना ।

दिष्ट्योत्सङ्गः सीतया मेऽद्य पूर्णो दिष्ट्यायोध्या मत्प्रवेशेन पूर्णा ।
मातॄणां मे मन्त्रिणां बान्धवानां भ्रातॄणां च प्रार्थना साधु पूर्णा ॥ २८ ॥

**त्रिजटासरमे**—वअस्स, अह इं । (ग)

(सीतानन्दातिशयमभिनयति ।)

**लक्ष्मणः**—आर्य, एवमेतत् । (सबहुमानम् ।)

सस्त्रीकश्च विभीषणः सवनितैः सर्वैः समं राक्षसैः
सस्त्रीकश्च हरीश्वरः सवनितैः सर्वैः समं वानरैः ।
सस्त्रीकः सवधूजनैरपि गुहः सर्वैः समं बान्धवै-
रागच्छन्तु विलोकयन्तु च चिरादार्याभिषेकोत्सवम् ॥ २९ ॥

(दृष्ट्वा सविस्मयानन्दम् ।) कथं त्रिलोकीजन एव सवनितः सर्वोऽपि स्वयमार्याभिषेकमहोत्सवदिदृक्षालक्षितः संमिलति । (सर्वेऽपि सकुतुकानन्दं वीक्षन्ते ।)

---

(क) दिष्ट्या दृष्टा संपूर्णमनोरथा प्रियसखी जानकी ।

(ख) हला, अत्रोपविशथ ।

(ग) वयस्य, अथ किम् ।

(नेपथ्ये।)

भो भो रामचन्द्र, दिष्ट्या त्वमीदृशस्य त्रैलोक्यमहोत्सवस्य भाजनं जातोऽसि। तत्कथय किं ते भूयः प्रियमुपकरोमि।

**रामः**—भगवन्हव्यवाहन,

साकं वारिधिना दशाननकृतस्तीर्णो निकारो मया
साकं मे विजयश्रिया जनकजा लब्धानवद्या पुनः।
साकं मामुपसेवते मदनुजैः साकेतराज्यस्थितिः
साकं बन्धुसुहृज्जनैरिह मया प्राप्ताश्चिरात्संपदः॥ ३०॥

तथापीदमस्तु।

दूरीकृतक्षयकलङ्कभुजंगदोषा
सुव्यक्तसंततसुधारसपूरपूर्णा।
तापं तमश्च जगतां सरसं हरन्ती
चन्द्रप्रभेव कविता जनतां धिनोतु॥ ३१॥

(इति निष्क्रान्ताः सर्वे।)

**इति दशमोऽङ्कः।**



ग्रन्थकर्तुः प्रशस्तिः।

औदार्यं रघुपुंगवे तदनुजे चौद्धत्यमत्यद्भुतं
सीतायाश्च यथा पतिव्रतगुणो लोकोत्तरो दृश्यते।
अस्मिन्नद्भुतदर्पणे कविमहादेवस्य वाङ्निर्मिते-
ऽप्येवं पश्यत दृश्यते यदि गुणो यः कोऽपि वक्राश्रयः ॥ १ ॥
सारासारविवेचनं विदधते शब्दार्थशास्त्रेषु ये
ये च व्याकरणेषु शिक्षितधियश्छन्दोविचित्त्यामपि।
येऽलंकारनिबन्धनेषु बहुशो यत्नेन दत्ताशया
वीक्षन्तां कविमण्डलेश्वरमहादेवस्य ते वैखरीम् ॥ २ ॥
दिक्चक्रं कियदण्डभित्तिभिरिदं नन्वावृतं सर्वतो-
ऽप्यण्डं नाम कियत्त्रिविक्रमपदैराक्रान्तमेतत्त्रिभिः।
तन्निर्यन्त्लणबालकृष्णभगवत्पादप्रसादोन्मिष-
त्प्राचण्ड्यः कविमण्डलेश्वरयशोगुम्फः क्व वा जृम्भताम् ॥ ३ ॥
रसेषु भावेषु गुणेषु रीतिष्वलंक्रियावृत्तिषु कल्पनासु।
वैदग्ध्यगन्धीनि वचःप्रसूनान्युत्तंसयन्ति स्वयमेव सन्तः ॥ ४ ॥
वाल्मीकिवाक्यामृतपूरितेऽपि श्रीराघवस्य स्फुटमन्तरङ्गे।
मद्भारती भक्तिकृतावकाशा मनागिवारोहतु मन्थरापि ॥ ५ ॥

**समाप्तश्चायं ग्रन्थः।**

---

१. प्रथमं श्रीसुब्रह्मण्यशास्त्रिभिः प्रेषितादेव पुस्तकादस्य मुद्रणं प्रारम्भि. तदनन्तरं तञ्जोरनगरवासिभिः टी. एस्. कुप्पुस्वामिशास्त्रिभिः प्रेषितं ग्रन्थलिप्या लिखितं पुस्तकद्वयमपि समासादितम्. तत्रैकस्मिन्पुस्तके ग्रन्थान्त एवं लिखितमस्ति—

'प्रपूर्वमाथ्यभिख्यायां शरदं प्रविशत्यवौ।
शरदि त्वद्भुतादर्शं ग्रन्थं लिखितवानजः ॥
जयन्ति कवयो लोके जगदानन्दकन्दलाः।
यद्गिरः सागरायन्ते यशश्चन्द्रोदये सताम् ॥' इति.

अन्यस्मिन्—

'पपूर्वरीतापिख्यातौ मासे श्रावणिकेऽपि च।
नवीनं चाद्भुतादर्शं नाटकं लिखितं मया ॥' इति.

एवं पुस्तकत्रयाधारेण संशोधनमकारि.

# अद्भुतदर्पणस्थश्लोकानां सूची ।

## काव्यमाला.

या नांवाचें संस्कृत मासिक पुस्तक, सन १८८६ चे जान्युआरी महिन्यापासून प्रसिद्ध होत आहे. यांत उत्तम, उत्तम प्राचीन संस्कृत काव्यें, नाटकें, चंपु, भाण, प्रहसनें, छंद, अलंकार इत्यादिकांचा यथावकाश संग्रह होत असतो. फार प्राचीन आणि अत्यंत सुरस असेच ग्रंथ निवडून ते या मालेंत गुंफले जातात. **महामहोपाध्याय पंडित दुर्गाप्रसाद** या नांवाचे विद्वान्, बहुश्रुत आणि शोधक गृहस्थ जयपूरच्या महाराजांचे आश्रयास होते. त्यांनीं काश्मीर, पंजाब, बंगाला, राजपुताना, मध्यदेश, तैलंगण, वगैरे सर्व प्रदेश फिरून नानाप्रकारचे काव्यग्रंथ संपादित केले होते. त्यांतील कित्येक ग्रंथ तर ८०० किंबहुना १००० वर्षांच्याही पूर्वींचे होते. ते सर्व ग्रंथ **रा० रा० काशिनाथ पांडुरंग परब** यांनीं आह्मांस तपासून दिलेले या मालेंत येत जातात. या मालेचे अंक प्रतिमासास एकदां प्रसिद्ध होतात. प्रत्येक अंकांत डेमी अष्टपत्री सांच्याचीं १०० पृष्ठें असतात. याची वर्षाची आगाऊ किंमत ६ रुपये, ट. ख. ·॥· फुटकळ अंकाची किंमत ·॥≈ ट. ख. ८~

यांत आजपर्यंत ग्रंथ छापून तयार झाले आहेत, त्यांचीं नांवें:—

**प्रथम गुच्छक**—यांत (१) राघवचैतन्यविरचित महागणपतिस्तोत्र (सटीक,) (२) लङ्केश्वर विरचित शिवस्तुति, (३) कालिदासकृत श्यामलादण्डक, (४) कुलशेखरनृपतिविरचित मुकुन्दमाला, (५) जगन्नाथपण्डितराजविरचित सुधालहरी, (६) शंभुमहाकविविरचित राजेन्द्रकर्णपूर, (७) क्षेमेन्द्रविरचित कलाविलास, (८) जगन्नाथपण्डितराजविरचित प्राणाभरण (सटीक), (९) अप्पयदीक्षितविरचित वैराग्यशतक, (१०) जगन्नाथपण्डितराजविरचित अमृतलहरी, (११) रत्नाकरविरचित वक्रोक्तिपञ्चाशिका (सटीक), (१२) आणि क्षेमेन्द्रविरचित औचित्यविचारचर्चा, इतकीं काव्यें आलीं आहेत. किंमत १ रुपया. ट. ख. ८~॥

**द्वितीय गुच्छक**—यांत (१) शंकराचार्यकृत विष्णुपादादिकेशान्तवर्णनस्तोत्र (सटीक), (२) गुमानि कविप्रणीत उपदेशशतक, (३) क्षेमेन्द्रकृत सुवृत्ततिलक, (४) जगन्नाथपण्डितराजविरचित करुणालहरी, (५) शंभुमहाकविविरचित अन्योक्तिमुक्तालता, (६) क्षेमेन्द्रकृत सेव्यसेवकोपदेश, (७) विक्रमविरचित नेमिदूत (८) जगन्नाथपण्डितराजविरचित लक्ष्मीलहरी, (९) रुद्रकविकृत भावविलास, (१०) क्षेमेन्द्रकृत चारुचर्या, (११) मधुसूदनसरस्वतीविरचित आनन्दमन्दाकिनी, (१२) शंकराचार्यकृत अम्बाष्टक (सटीक) आणि (१३) मुकुन्दमुक्तावलि, इतकीं काव्यें आलीं आहेत. किंमत १ रुपया. ट. ख. ८~॥

**तृतीय गुच्छक**—यांत (१) गोकुलनाथविरचित शिवशतक, (२) पञ्चस्तवी, (३) दामोदरगुप्तप्रणीत कुट्टनीमत, (४) रुद्रभट्टकृत शृङ्गारतिलक व (५) माधवविरचित दानलीलाकाव्य, इतकीं काव्यें आलीं आहेत. किंमत १ रुपया. ट. ख. ८~॥

**चतुर्थ गुच्छक**—यांत (१) बाणभट्टविरचित चण्डीशतक (सटिप्पण), (२) नागराजप्रणीत भावशतक, (३) नारायणभट्टपादकृत स्वाहासुधाकर,

**KÂVYAMÂLÂ. 39.**



THE

# VIDYÂPARIṆAYANA

OF

## ÂNANDARÂYA MAKHÎ.


EDITED BY

PAṆDIT S'IVADATTA

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.





[redacted] AND PUBLISHED

BY

TUKARAM JAVAJI

PROPRIETOR OF "JAVAJI DADAJI'S NIRNAYA-SAGARA" PRESS.

BOMBAY.

1893.

*Price 9 Annas.*

काव्यमाला ३९.

आनन्दरायमखिविरचितं

# विद्यापरिणयनम् ।

जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा शिवदत्तशर्मणा,
मुम्बापुरवासिपरबोपाह्वपाण्डुरङ्गात्मजकाशीनाथ-
शर्मणा च संशोधितम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९३



मूल्यं ९ आणकाः ।

आनन्दरायमखिविरचितं

## विद्यापरिणयनम्।

प्रथमोऽङ्कः।

सत्यज्ञानसुखाद्वयोऽपि बहुधा रूपाणि बिभ्रच्चिरा-
दप्रज्ञेयविलासवैभवनिजाविद्याविधेयीकृतः।
आनन्दान्विषयोदिताननुभवन्भूयः स्वया विद्यया
प्रश्लिष्टः परमार्थभोगमुदितः पायादुमायाः पतिः॥ १॥

किं च।

क्रीडोद्यानिकुञ्जसीमनि सखीचातुर्यतो मिश्रयो-
रुत्कूलप्रणयोदिते सरभसाश्लेषे मिथः प्रस्तुते।
संमोहस्तिमिता समग्रपुलका विस्रस्तवेद्यान्तरा
वृत्तिः सा शिवयोरपारपरमानन्दा शिवायास्तु वः॥ २॥

अपि च।

सज्जन्तो मृगतृष्णिकाजलनिधौ मुक्ताजिघृक्षारसा-
द्वन्ध्यापत्यकलादशुक्तिरजताकल्पेषु संकल्पिनः।

---

१. 'अयं च श्रीमदानन्दरायमखी नृसिंहरायाध्वरिसूनुस्त्र्यम्बकदीक्षितस्य भ्रातृव्यस्त-
ओरनगरमहीपतेरेकक्षितिपालवंशतिलकस्य शरभापरपर्यायस्य श्रीशाहिराजस्य मन्त्रिप्रवर
आसीदित्यादि सर्वमेतत्प्रणीतस्य जीवानन्दनस्य विद्यापरिणयनस्य च प्रस्तावनातः प्रती-
यते। स च शरभमहीपतिः ख्रिस्ताब्दीयसप्तदशशतकपूर्वार्धे आसीदिति स एवास्य समयः।
एतत्कृतिषु जीवानन्दनं विद्यापरिणयनं चेति नाटकद्वयमस्माभिरुपलब्धम्।' इति जी-
वानन्दन(काव्यमाला—२७)समाप्तिपत्रे महामहोपाध्यायाः. २. अस्य नाटकस्य पु-
स्तकद्वयमस्माभिरासादितम्. तत्रैकं जयपुरराजगुरुश्रीनारायणभट्टपर्वणीकरैः (क-संज्ञकं ७८
पत्रात्मकम्), अपरं च जयपुरराजगुरुश्रीलक्ष्मीदत्तभट्टसुतश्रीदत्तैः (ख-संज्ञकं ११२ पत्रा-
त्मकम्), दत्तमिति तेषां महान्तमुपकारमूरीकुर्मः.

व्यावल्गन्त्यविमर्शिनो यदवधि ज्योतिः परं ज्योतिषां
तत्सेतुर्जगतोऽखिलस्य तमसः पारं परं भातु वः ॥ ३ ॥

अपि च ।

प्राग्जन्मीयतपःफलं तनुभृता प्राप्येत मानुष्यकं
तच्च प्राप्तवता किमन्यदुचितं प्राप्तुं त्रिवर्गं विना ।
तत्प्राप्तिश्च यया भवेत्फलवती विश्वोत्तरां शाश्वतीं
तामद्वैतकलां कलानिधिकलामौलिर्विधत्तां शिवः ॥ ४ ॥

(नान्द्यन्ते)

**सूत्रधारः**—(नेपथ्याभिमुखमवलोक्य ।) मारिष, इतस्तावत् ।

(प्रविश्य ।)

**पारिपार्श्विकः**—भाव, एषोऽस्मि ।

**सूत्रधारः**—अत्र तञ्जानगरे देशान्तरादागताः पौरजानपदा जना भगवत्यास्तावदानन्दवल्ल्यम्बाया महोत्सवदिदृक्षया संघीभूताः

सरसकवितानाम्नो हेम्नः कषोपलतां गताः
विहरणभुवः षड्दर्शन्या विवेकधनाकराः ।
विदधति तपोलभ्याः सभ्या इमे मम कौतुकं
तदिह हृदयं नाट्येनैतानुपासितुमीहते ॥ ५ ॥

**पारिपार्श्विकः**—कं पुनः प्रबन्धमवलम्ब्य ।

**सूत्रधारः**—नन्वस्ति मम वशे सकलशमधनजनहृदयानन्दसमुद्घाटकं विद्यापरिणयनं नाम नवीनं नाटकम् ।

**पारिपार्श्विकः**—कस्तस्य प्रबन्धस्य कविः ।

**सूत्रधारः**—विद्वत्कविकल्पतरुरानन्दरायमखी । य एष

गुरुदेवद्विजभक्तो नैमित्तिकनित्यकाम्यकर्मपरः ।
दीनजनाधीनदयो विहरति समरे च विक्रमार्क इव ॥ ६ ॥

यस्य किल

आनन्दरायमखिनो वाल्मीकेरिव योगिनः ।
इतरापेक्षणात्सारः स्वतः सारस्वतोदयः ॥ ७ ॥

अपि च ।

नानापूर्वमहाक्रतुप्रणयनैरध्यात्मतत्त्वमर्शनैः
कर्मब्रह्मपथप्रचारसविता षड्दर्शनीवल्लभः ।
तातो यस्य किलैकराजवसुधाधौरंधरीगीष्पतिः
क्षोणीपालकिरीटलालितपदः ख्यातो नृसिंहाध्वरी ॥ ८ ॥

अपि च ।

यस्य तातानुजन्मापि यशःपावितदिङ्मुखः ।
त्रिवर्गफलसंपन्नत्र्यम्बकामात्यदीक्षितः ॥ ९ ॥

यः स्नातोऽजनि दिव्यसिन्धुसलिले यः स्वात्मविद्याश्रुतो
येनाकारि सहस्रदक्षिणमखो यः सद्भिराश्रीयते ।
सोऽयं त्र्यम्बकराययज्वतिलको विद्वत्कवीनां प्रभो-
र्यत्तातस्य नृसिंहरायमखिनस्तुल्यप्रभावोऽनुजः ॥ १० ॥

स तावत् 'इदं नाटकमुचितेषु प्रयोक्तव्यम्' इति सबहुमानमस्मद्धस्ते समर्पितवान् । 'अनेन सुकरमभिरूपपरिषदनुरञ्जनम्' इति ममाध्यवसायः ।

**पारिपार्श्विकः**—भाव,

अपूर्वमप्राकृतसंविधानमुद्घुष्यते नाटकमेतदत्र ।
रसानुभूतेरविलम्बहेतोर्निरूप्यतां किंचिदिवेतिवृत्तम् ॥ ११ ॥

**सूत्रधारः**—युक्तमभिहितम्, श्रूयतां तावत् ।

यल्लाभतो वल्लभमस्ति नान्यदात्मा स शेषी सकलागमानाम् ।
येनाधिगम्येत तदागमान्तं प्रमेयसर्वस्वमिहेतिवृत्तम् ॥ १२ ॥

**पारिपार्श्विकः**—भाव, कृष्णमिश्रप्रभृतिभिरत्र 'प्रबोधचन्द्रोदयः' इति, 'संकल्पसूर्योदयः' इति, 'भावनापुरुषोत्तमः' इति च न्यबन्धि नाम बहुधा प्राचीनैः । किमनेनाभिनवसंरम्भेण ।

**सूत्रधारः**—

क्षुण्णा यद्यपि शास्त्रपद्धतिरसावन्यैः कवीन्द्रैरयं
त्वश्लीलं न तितिक्षते न सहते पात्रेषु चानौचितीम् ।

---

१. 'किमस्य नूतनपरिश्रमेण' ख.

नेतुः शास्त्रमतां त्रिवर्गफलसंपत्तिं विमुच्यात्ययो-
पन्यासं च जुगुप्सते तदयमारम्भोऽस्य संरम्भतः ॥ १३ ॥

**पारिपार्श्विकः**—अद्वैतं वस्तु, शृङ्गारो रसः, अथ च निर्दोषता, इति सर्वमिदमत्यद्भुतं दृश्यते। अथवा-विश्वातिशायिलौकिकवैदिकलक्ष्मीविलासव्यतिकरेण जगदाश्चर्यकुलपरम्परानामत एते । एतत्प्रणीतमभिनवमिदं नाटकमस्माभिरभिनीयत इति वाङ्मनसातिवर्ति ननु भाग्यमिदमस्माकम् । परं तु श्रुतिस्मृतीतिहासागमतन्त्रादिसिद्धनानाविधसाम्बशिवचरणपरिचरणतदनुसंधाननिरन्तरितनिखिलवासरस्य तदन्तरालपरिमितपरिशिष्टकतिपयमुहूर्तनिर्वर्तनीयचतुरुदधिपरिमुद्रितसकलराज्यतन्त्रस्य शरभमहाराजमन्त्रिशिखामणेरस्य जनकसनकसनन्दनप्रमुखाभिनन्दनतदीदृशमहाप्रबन्धनिबन्धनपटिमधौरंधरीयमिति मे महदाश्चर्यम् ।

**सूत्रधारः**—किमुच्यते 'महदाश्चर्यम्' इति ।

आबाल्यादपि पोषितोऽजनि मया प्रेम्णा तथा लालित-
स्तेनासौ सरसामुपैतु कवितामानन्दरायाध्वरी ।
इत्येकक्षितिपालवंशजलधेर्देव्या गिरां जातया
धीरश्रीशरभावनीन्द्रवपुषा नूनं प्रसादः कृतः ॥ १४ ॥

अतः किमसाध्यमेतस्य । तत्प्रणीतमिदं नाटकमिह प्रयुञ्जानस्तदनुगुणसकलगुणरमणीयानत्रभवतः सामाजिकानुपतिष्ठे । (सामाजिकान्प्रति । किंचिदिव कर्णं दत्त्वा ।) किं ब्रूथ ।

अप्राकृतसभाहृद्या न प्राकृतगिरो मताः ।
अतः संस्कृतया वाचा सभालंक्रियतामिति ॥ १५ ॥

साधु । सम्यगभिहितम् । तथैव प्रतिपात्रमाहितो यत्नः । (नेपथ्याभिमुखमवलोक्य ।) आर्ये, इतस्तावत् ।

(प्रविश्य ।)

**नटी**—आर्य, इयमस्मि ।

**सूत्रधारः**—आर्ये, यावदस्मदीयवर्ग्या वर्णिकापरिग्रहणाय संनह्यन्ति, तावदिमं पुष्पसमयमधिकृत्य गीयताम् । संप्रति हि

---

१. 'अद्वैतं—अथवा' इति ख-पुस्तके नास्ति.

सोत्कम्पस्तबकस्तनं दरचलद्बालप्रवालाधरं
गायत्कोकिलपालितानघटनारज्यन्मिलिन्दव्रजम् ।
मन्दं मन्दसमीरदेशिकसमादेशादितो मञ्जरी
वामाक्षित्वमिवाभिनन्द्य नटना पुष्णाति दृष्ट्योर्मुदम् ॥ १६ ॥

**नटी**—तथा । (इति गायति ।)

मुदितालिगीतिशोभितमुग्धनवीनप्रसूनशोभनया ।
मल्लिकया सहकारं घटयन्ति विलासिनो महोत्साहाः ॥ १७ ॥

(नेपथ्ये ।)

साधु । भरतकुलाङ्गने, साधु । सम्यगभिहितं भवत्या । प्रस्तुतानुगुणवचनभङ्गीभिरभिनन्दनीयासि । सत्यम् । अहमिदानीं विद्यया सह परमेश्वरस्य प्रतिबिम्बभूतं जीवराजं संघटयितुमेव विरचितोत्साहा भवामि ।

**सूत्रधारः**—(श्रुत्वा । सहर्षम् ।) अये, मत्स्यालको रङ्गनाथनामा शिवभक्तेर्भूमिकामादायागत एव । यदधुना

ऊर्णाचन्दनचुम्बिफालफलकस्पष्टत्रिपुण्ड्रोज्ज्वला
बिभ्राणा परिपाकपिङ्गकलमच्छायं जटामण्डलम् ।
कोटीराङ्गदहारकङ्कणपदे रुद्राक्षमालावती
भस्मोद्धूलनपाण्डरा भगवती भक्तिः पुरस्तादियम् ॥ १८ ॥

तदावामप्यनन्तरकरणीयाय सज्जीभवावः ।

(इति निष्क्रान्तौ ।)

**प्रस्तावना ।**

---

(ततः प्रविशति शिवभक्तिः ।)

**शिवभक्तिः**—आदिष्टास्मि परमकारुणिकया परमेश्वर्या । यथा—

'सुचिरमयमविद्यादुर्विलासेन्द्रजालैः
पशुरिव मृगतृष्णावारिपूरैर्विकृष्टः ।

---

१. 'व्रतम्' ख. २. 'पशुपतिरिव' ख.

विलुठति खलु जीवो विस्मृतस्वीयभूमा
कथमसि शिवभक्ते वत्सला त्वं पराची ॥ १९ ॥'

इति । तदनु

'भूतं भावि भवद्भिमृश्य सकलं जीवस्य दुःखं चिरा-
दस्योत्तारणकारिणः कति बतोपायास्त्वयोद्भाविताः ।
इष्टापूर्तपुरोगमाः सनिगमा मन्त्राः सतन्त्रा इमे
सन्त्येवं जगदम्ब मद्विरहितं हीयेत किं साधनम् ॥ २० ॥'

किं च ।

'नामैव नालमिह किं [1]युवयोर्जनस्य
संसारघोरविषसागरतारणाय ।
प्रायोभवन्ममतया कलितः स एष
लोकेषु मामपि पदार्थयितुं प्रयत्नः ॥ २१ ॥'

इति मया सविनयमभिहिते भगवती सस्मितमवोचत—'वत्से, मैवं वादीः ।

कर्माणि सन्तु विविधानि करोतु तानि
क्लिष्टश्चिरेण तपसा नियमैश्च घोरैः ।
त्वत्संनिधानविरहे तु भवन्ति तानि
पाञ्चालिकाभिनयवत्फलवञ्चितानि ॥ २२ ॥

[2]तदिदानीं

जनिप्रभृतिपक्कणे शबरताविमूढो यथा
विनीय नृपनन्दनो नृपतिकन्यया योज्यते ।
[3]तथैनमितरभ्रमाकुलमितो महादुर्ग्रहा-
द्विमोच्य निजविद्यया घटयितुं यतेथाः' इति ॥ २३ ॥

(विचिन्त्य ।) ननु तदैव परमेश्वर्याभिहितम्—'अत्र तव सहकृत्वरी निवृत्तिरनुपदमेव मया प्रेष्यते' इति । तत्किमद्यापि निवृत्तिश्चिरयति । (पुरो विलोक्य । सपरितोषम् ।)

---

१. 'युवयोरनलं जनस्य' ख. २. 'सततमस्मदनुकम्पया सहचारिण्यास्तवेदमननुरूपमेव । अतः—जनि—' ख. ३. 'तथैव' क.

भस्मालेपनतः क्षरज्जलधरच्छायां तनुं बिभ्रती
पक्ष्मभ्यामधरश्रिया च कथमप्युन्नेयवक्त्राम्बुजा ।
वैयाघ्रं परिधाय चर्म दधती संव्यानमैणीं त्वचं
विद्युत्पिङ्गजटाच्छटा विजयते सेयं निवृत्तिः पुरः ॥ २४ ॥

(ततः प्रविशति निवृत्तिः ।)

**निवृत्तिः**—अम्ब शिवभक्ते, प्रणमामि ।

**शिवभक्तिः**—वत्से, प्रकाशतां ते परं ज्योतिः ।

**निवृत्तिः**—भगवति, संदिष्टास्मि परमेश्वर्या—'वत्से, महति कार्यविशेषे मया नियुक्तायाः शिवभक्तेरभिहितकरणाय प्रत्यनन्तरीभव' इति । तदद्य को नियोगो भगवत्याः ।

**शिवभक्तिः**—वत्से निवृत्ते, कथंचिदस्य जीवराजस्य सुमहतः संकटाद्विमोचने विद्यासंयोजने च विधेयो यत्नः ।

**निवृत्तिः**—किमेतावदस्य समापतितम् ।

**शिवभक्तिः**—किमितोऽपि समापतितव्यं देवस्य । शृणु तावत्,

व्यामोहादसतीविलासजनितादासादितो लाघवं
निःशङ्कं परितो बलादविरतं कामादिभिः कर्षणात् ।
हृष्यञ्ज्ञातु रुदन्क्षणेन विहसन्भूयो विषीदन्मना-
गित्थं हन्त परः पुमान्स महतीं नीचां दशामश्नुते ॥ २५ ॥

**निवृत्तिः**—(सखेदम् ।) आश्चर्यमिदम् । अप्रधृष्यस्य महात्मनो देवस्य दुःसङ्गदोषेण कियती विपत्तिरुदपद्यत ।

**शिवभक्तिः**—किमेतावदेव । श्रूयतामग्रेऽपि ।

व्यामुग्धस्तरुगुल्मघासजननैः खेदान्कति प्रापितो
भूयः कीटपतङ्गपन्नगमृगीभावैः कियत्क्लेशितः ।
दिष्ट्या मानुषपौरुषादिविधया पारं स्पृशन्वर्तते
भूयो नीचपथे पतेद्यदि कथं देवी तितिक्षेत तत् ॥ २६ ॥

---

१. 'शिवभक्तिः—समापतितम्' इति ख-पुस्तके नास्ति.

**निवृत्तिः**—भगवति, पारस्पर्शनमस्य किं नाम ।

**शिवभक्तिः**—शृणु तावत् ।

शश्वत्सिन्धुतरङ्गवद्बहुजनुःसंपन्नधर्मोच्चयै-
वर्णः स्वर्णवदस्य भाति बहुधा संस्कारसंयोगतः ।
अष्टावात्मगुणाश्च संनिदधते मैत्र्यादिभिर्भूषिता
नेदिष्ठो नरसिंह एष महितः कैवल्यलक्ष्म्या न किम् ॥ २७ ॥

इदमेव तत् । अतोऽयमेवावसरः प्रयत्नस्य । परमेश्वर्यापि तदिदमभिसंधायैव संप्रति वयमत्र सत्वरं नियोजिताः ।

**निवृत्तिः**—भगवति, जीवराजस्य तादृगविद्याविघटनविद्यासंघटनविषये परमेश्वर्याः किंनिबन्धनोऽयमियानभिनिवेशः ।

**शिवभक्तिः**—वत्से, जीवो नाम किमितरः परमेश्वराभ्याम् । शृणु तर्हि । कथयामि ते भूतार्थम् ।

सत्यज्ञानसुखस्वरूपमहितः सर्वान्तरात्मेति यो
विख्यातः पुरुषः स तावदसतीं पश्यन्नविद्यामिमाम् ।
अस्या विभ्रममोहितः प्रमुषितस्वीयप्रभावप्रथां
जीवो जीव इति प्रपद्य सुचिरादुन्मत्तवद्भ्राम्यति ॥ २८ ॥

किं च ।

विद्या नाम परा न सापि परमा चिच्छक्तिरेवात्मनः
सास्मिन्नीदृशि गर्हयैव विमुखी स्वेनात्मना वर्तते ।
यौ मातापितरौ समस्तजगतामाद्यौ शिवौ तौ च तौ
रूपं नाम च भिद्यतेऽथ समयेष्वेते मिथो नेतरे ॥ २९ ॥

तथा च परमेश्वरी स्वजनकसंकटविषये कथमुदासीत ।

**निवृत्तिः**—उपपन्नमेवैतत् । तदेवं प्रकृतस्य कार्यस्य निर्वर्तने का पुनरितिकर्तव्यता । तदत्र निपुणतरमेकमुपायमवधारयतु भगवती ।

**शिवभक्तिः**—(आत्मगतम् ।) अतिचिरादविद्यासंसाररसैकलम्पटस्य जीवराजस्य विषयदोषोद्भावनादिभिरभिमुखीकरणमतिनिम्नगामिनो महतः

प्रवाहस्य प्रतीपनमिव दुर्घटमेव । परंतु वासनागुणतया किंचिदपूर्वरमणीमणिपरिणयनप्रणाडिकयैव विद्यासंघटनमुपपादनीयम् । (प्रकाशम् ।) आः, चिन्तितो मया तदभिमुखीकरणोपायः ।

**निवृत्तिः**—कथमिव ।

**शिवभक्तिः**—(कर्णे ।) एवमिव ।

**निवृत्तिः**—साधु चिन्तितं भगवत्या ।

**शिवभक्तिः**—संप्रति हि जीवराजमविद्याविषयवासनाप्रवृत्तिभ्यां निरन्तरमुपरुध्य निःशङ्कमकुतोभयमखिलेषु विषयेषु विजृम्भते । तदविलम्बितमभिमतसिद्धये व्याप्रियस्व । मयापि तत्तदुपसर्गविघटनाय प्रकृतकार्यघटनाय च तत्र तत्र व्याप्रियते ।

(इति निष्क्रान्ते ।)

**विष्कम्भः ।**

---

(ततः प्रविशति चित्तशर्मणा नर्मसचिवेन सपरिवारया चाविद्यया जीवराजः ।)

**जीवराजः**—(देवीं प्रति ।) प्रिये, नवनवोल्लासरमणीयैर्भवदभिरतिचमत्कारैरति हि नाम प्रीणितो ममायमन्तरात्मा ।

का पुष्णातु पुमांसमेवमपरा संकल्पलेशोद्भवं
नानाकारसमस्तभोग्यभरिता दैनंदिनैरुत्सवैः ।
भूतं भावि च वा कुहापि किमिदं यद्धि त्वयोद्भाव्यते
नैषा दृष्टचरी न वा श्रुतचरी त्वच्चातुरीवैखरी ॥ ३० ॥

**देवी**—(सप्रश्रयम् ।)

यत्किंचित्प्रभवाम्यहं कृतिषु तत्सर्वं भवद्वैभवं
कर्तुं भर्तुमथापहर्तुमपि वा काहं वराकी जडा ।
तत्सर्वं भवतो विभूतिकणिका यद्यन्मयोद्भावितं
मामेषोपगता किलेति ममतास्नेहादभिष्टौषि माम् ॥ ३१ ॥

**प्रवृत्तिः**—अये भट्टिनि, स्तुतिरिति किमसदर्थोपन्यासः[1] क्रियते । नन्वयं भवत्या

---

१. 'न्यास इह क्रियते' ख.

दत्त्वा कर्मपथे विचित्रविभवे बुद्धिं स्वमृच्छंसलं
वैरिञ्चं पदमेतदैन्द्रमिदमित्युच्चैः पदं स्थापितः ।
स्वर्वामाधरमाधुरीषु मुदितः प्रेङ्खन्मणीमेखला-
जालोत्तालझलंझलादिसुभगान्भोगान्कति प्रापितः ॥ ३२ ॥

**देवी**—सखि प्रवृत्ते, भवत्या मयि प्रणयविजृम्भितमेवैतत् । वस्तुतस्तु भवदायत्तमेवेदम् । तथाहि ।

क्रीडा काञ्चनशैलकूटघटितप्रत्युप्तनानामणि-
ज्योतिःकर्बुरसौधसीमसु कनत्कल्पद्रुपुष्पास्तरे ।
उद्दामस्मरदर्पविभ्रमवती संभोगशृङ्गारिणो
यत्क्रीडन्ति विलासिनस्तदखिलं लीलायितं तेन किम् ॥ ३३॥

**चित्तशर्मा**—(स्वगतम् ।) हन्त । तदेवमासामन्योन्यप्रशंसाभिनन्दनाभिनिवेशेन तन्मय इव जायते वयस्यः । तदयमेवावसरो विवेकादीनभिप्रतिश्रुतार्थोपक्षेपस्य तदेवमभिध्यास्ये । (प्रकाशम् ।) अत्र तेन किमित्येव परिणतौ सर्वमिदं भवेत् ।

**विषयवासना**—(सामर्षम् ।) अये, निपुणः खलु भवानुचितोपचारैः स्वामिपादपरिचरणेषु । (देवीं प्रति ।) 'तेन किम्' इत्यसदुद्भावितेषु नीरसत्वमापादयता राजहितैषिणामुना महामन्त्रिणा चित्तशर्मणा पूर्वेद्युरधिनिशीथिनि विनोदव्याजेन देवपादविषये कश्चिन्महानुपचारः कृतः । 'स्वधर्मः किलायमस्य' इति तद्देवेन तितिक्षितम् ।

**देवी**—तत्कथमिव ।

**विषयवासना**—

शार्दूलश्वशृगालमर्कटमहारक्षस्तरक्ष्वात्मना
घोरोद्घोषणमन्धकारिणि वने खादन्निवाभ्यागतः ।

**देवी**—स्वप्नस्य तदधीनतया तस्य सर्वोऽपि वेषः संगच्छत एव । ततस्ततः ।

---

१. 'झलातिसुभ' ख. २. 'नुपचारः' ख.

**विषयवासना**—

तद्दृष्ट्वा भयतो विसंस्थुलपदं धावन्द्रुमान्पर्वता-
नारोहन्निपतन्निवाकुलतरो दिष्ट्या प्रबुद्धो विभुः ॥ ३४ ॥

**जीवः**—प्रिये, सत्यमेतत्। आकस्मिकतया बहुपर्याकुलोऽस्म्यनेन।

**देवी**—(सस्मितम्।) उचितमेव कृतम्। भवितव्यं खलु तदेकीभावस्य फलभोगेन।

**चित्तशर्मा**—(स्वगतम्।) यथाकथंचिदयमभिभावनीय इति धूर्ताया विषयवासनाया हृदयम्। (प्रकाशम्।) अयि कश्मले, यदसाधु तदेव मम चेष्टितमुद्भावयसि, यदभिनन्दनम्। इदं तु प्रतिपादयसि। यत्किल

त्वङ्गत्तुङ्गतुरङ्गकोटि विनटन्माद्यत्पदाति क्वण-
द्घण्टाजालझणंझणद्दृढतति क्षीबद्विपश्रेणि च।
सृष्ट्वानेकपुरीश्रिया सुरपुरीरेतास्स्वयं वैभवै-
रानीतो मणिमण्डपे ननु मया सिंहासनेऽध्यासितः ॥ ३५ ॥

**जीवः**—इदमप्यस्त्येव। तदेवमपूर्वार्थप्रपञ्चनविधावयमेव समर्थः।

**प्रवृत्तिः**—आभासमात्रमिदमखिलमपि कस्मिन्कोणे वा भट्टिन्याः प्रभावमहिमातिशयस्य।

उद्यानानि महावनानि गिरयः प्रासादसौधादयः
प्राकारस्तु सचक्रवालशिखरी खेयं तु सप्तार्णवी।
आशास्तोरणगोपुराणि दश तास्तेजस्त्रयी दीपिका
यस्याः शिल्पमियं पुरी वसुमती सा केन वा वर्ण्यताम् ॥ ३६ ॥

**विषयवासना**—सखि प्रवृत्ते, किमल्पमेवोदाहृतम्। इत्थं कति जगन्ति जयन्ति, कति वारानमूनि गतानि, कति च वारानुत्पादितानि भट्टिन्या।

**चित्तशर्मा**—(सोत्प्रासम्।) अये, सत्यम्। आभासमात्राण्येव मदारब्धानि। यतः प्रातिभासिकानि। युष्मदुद्भावितानि तु पारमार्थिकानि स्थिराणि सुखानि देवस्य।

**अविद्या**—(सखेदम्।) हन्त। प्रणयिनः समक्षमेव मर्मणि तोदः कृतो वैधेयेन।

**विषयवासना**—अरे, तत्त्वं न जानासि।

सुखमस्त्वसुखं वास्तु नैव साधु निरन्तरम्।
यथा विरहिणी कान्ते रमते किं तथापरा॥ ३७॥

**देवी**—अये, चपलस्वभावोऽयमस्थिरप्रणय इति। नन्ववगतमेतत्[1]।

**चित्तशर्मा**—(सोत्प्रासम्।) देव, श्रूयताम्।

एतास्तावदहं प्रतार्य करणद्वाराणि बद्ध्वा दृढं
निर्व्यापारतया पुरीतदुदरे गूढं निलीय स्थितः।
दुःखासंकलितं नयाम्यनुपदं नो चेद्भवन्तं सुखं
कृत्वा रोगसहस्रगुम्फनमिमाः किं वा विदध्युर्न ते॥ ३८॥

अपि च। इयं किल कदाचिदाश्रितमुत्कर्षति, कदाचिदपकर्षति, कदाचिदभिनन्दयति। तत्तद्विलक्षणगुणभिन्नाः प्रकृतयस्तावदस्या दुर्वाराः।

**प्रवृत्तिः**—धिङ्मूर्ख, कुलमहत्तरामपि भट्टिनीमभिभवञ्जाड्यमेव प्रकाशयसि।

**चित्तशर्मा**—अये, जाड्यं चापलं मौर्ख्यमन्यद्वा यत्किंचिद्विवक्षितम्, तदखिलमपि युष्मदीयमेव। किं न प्रसरेयुः सवित्रीगुणास्तत्प्रसवेषु।

**अविद्या**—(सखेदम्। आत्मगतम्।) केन किमुपदिष्टं वा यथापुरमयमस्मासु न वर्तते।

**चित्तशर्मा**—(स्मितं कृत्वा।) राजा सर्वथायमेतत्कलहेन निर्विण्णो निवृत्त्युन्मुख इव दृश्यते।

(ततः प्रविशति संकल्पो दौवारिकः।)

**दौवारिकः**—देव, तापसी काचन सशिष्या प्रतिहारभुवमागता देवपादं दिदृक्षते।

**राजा**—सादरं प्रवेश्यताम्।

---

1. 'मेवैतत्' ख.

(ततः प्रविशति तापसीवेषा सह शिष्यया निवृत्तिः ।)

**निवृत्तिः**—अये शान्ते, तत्रभवत्या शिवभक्त्याहमेवं किलाभिहितास्मि—'वत्से निवृत्ते, मायागहनकर्मणश्चित्तशर्मणो भेदनेनैव जीवराजोऽभिमुखीकरणीयः' इति । हन्त । परमार्थाविसंवादी भवति महात्मनामध्यवसायः । तथाहि । प्रवृत्तिरिति विषयवासनेति च ये तावदिमे सांप्रतमविद्यासाम्राज्यसर्वस्वनिर्वाहिके प्रहिते, एतयोस्तावदन्धयोरिव चित्तशर्मावलम्बमन्तरेण कियानपि न प्रचारः । अस्मिंस्तु ततो भेदं गमिते तदन्ववायः सर्वोऽपि शिथिलितप्रायः, तदिदमभिसंधायैव तद्भेदनाय भगवत्या शिवभक्त्या प्रथमत एव विवेकादयः प्रहिताः । (पुरो विलोक्य ।) स एष जीवस्तेन चित्तशर्मणा सह संलपन्नित आस्ते । यावदेनमुपसर्पामि । (उपसर्पति ।)

**जीवः**—(निर्वर्ण्य ।) इयं सा

गाढोन्नद्धजटाकलापकपिलश्रीपूतबालातपा
बिभ्राणा भसितानुलेपधवलच्छायां तनुं पावनीम् ।
भिक्षापात्रमयूरपिच्छचयभृत्पाणिद्वया मेऽधुना
काषायाम्बरधारिणी कलयति स्वान्ते धृतिं तापसी ॥ ३९ ॥

(उपसृज्य प्रणमति ।)

**निवृत्तिः**—सान्द्रानन्दघनो भूयाः ।

**जीवः**—भगवति, इत आस्यताम् । (इत्यासनं निर्दिशति ।)

(निवृत्तिरुपविशति ।)

**राजा**—कः प्रदेशोऽलंक्रियते तत्रभवत्या, कानि च भुवनपावनान्यभिधानाक्षराणि, किमुद्देश्यकश्चायमिहागमः, इति विविदिषामि ।

**निवृत्तिः**—वत्स, श्रूयताम् ।

दर्पणवदभिमुखानां दर्शयदात्मस्वरूपमखिलानाम् ।
विलसयशेवधिरास्ते वेदारण्याभिधं शिवक्षेत्रम् ॥ ४० ॥

तस्मिन्निष्टफलद्रुमाः कति ततैः शाखाशतैरुच्छ्रिता
हृद्योपासनवल्लरीकवचितास्तत्र प्रदेशाः कति ।

---

१. 'प्रथिते' ख. २. 'लेपनकृतच्छायां' क. ३. 'हृष्टोपा' क.

तेषां मूलफलादिमानि कति वा तत्सर्वमास्तामहो
तत्रत्यामृतमाधुरी न परतः कुत्रापि सत्यं ब्रुवे ॥ ४१ ॥
तत्रास्ते शिवभक्तिरित्यनुपमा तत्त्वार्थसंदर्शने
तत्संदर्शितसंप्रदायसरणिस्तस्यास्तु शिष्यास्म्यहम्।
विज्ञानप्रभवां निवृत्तिरिति मामाचक्षते योगिनीं
धर्मिष्ठस्य दिदृक्षया तवं मनागत्राहमभ्यागता ॥ ४२ ॥

**राजा**—परमनुगृहीतोऽस्मि निरुपाधिकेन वात्सल्येन। किमस्मादृशामपि तत्र प्रवेशः स्यात्।

**निवृत्तिः**—परमकारुणिक्याः सकलपुमर्थप्रसवित्र्याः शिवभक्तेः प्रसादादेव सुकरस्तत्र प्रवेशः। तस्यां प्रसीदन्त्यामेव तत्रत्याः शमदमादयो विधेया भवन्ति। विधेयेषु च तेषूपनिषद्देव्याः परिचयेन महत्तरं श्रेयो भवेत्।

**राजा**—एतादृशी विष्णुभक्तिरिति हि तत्र तत्र श्रूयते। शिवभक्तिरिति किममुष्या नामान्तरम्।

**निवृत्तिः**—अथ किम्। शृणु तावत्।

विष्णुर्न शिवादन्यः शिवशक्तेः स खलु पौरुषं रूपम्।
शक्तिश्च नातिरिक्ता शक्तिमतोऽतः शिवात्परं नान्यत् ॥ ४३ ॥

**राजा**—(सोत्कण्ठम्।) भगवति, कीदृशं तन्महत्तरं श्रेयः।

**निवृत्तिः**—(कर्णे।) एवमिव।

**राजा**—(सहर्षोल्लासमपवार्य।) अपि नाम जातु ममैतदुपपद्येत।

**चित्तशर्मा**—वयस्य, महानुभावायास्तदस्या निवृत्तेरनुग्रहादेव तदिदं श्रेयो लभ्यते।

**अविद्या**—(साशङ्कम्।) नूनममीषामियच्चिरोपनतेन कुटिलेङ्गितेन संलपेन मत्प्रतीपेन भवितव्यम्। भवतु। विमृश्य प्रतिविधास्यामि।

(नेपथ्ये वैतालिकौ।)

**एकः**—

रोमन्थालसलोचना वनमृगी निद्राति मूले तरो-
रम्भस्तप्तमपास्य मीननिवहः पङ्काविलं गाहते।

धावं धावमितस्ततो मरुजले तापाभिभूतः करी
सोत्कण्ठं कलहंसिकाकलरवैर्व्यावर्तते पद्मिनीम् ॥ ४४ ॥

**अपरः**—

तापत्रस्त इवाधुना बहिरितो न स्पन्दते मारुतः
प्राणायामवशेन योगिन इव स्तब्धा इमे पादपाः ।
छाया पश्चिमदिक्प्रवृत्तिवितता प्रक्षीयमाणा शनै-
रेषा ह्यभ्युदयाचलश्रियमितो जाता निवृत्त्युन्मुखी ॥ ४५ ॥

**चित्तशर्मा**—(सहर्षम् । जनान्तिकम् ।) वयस्य, तदिदं वैतालिकवचनमेव निदर्शनं मदभिहितार्थे ।

(राजा सानन्दमभ्युपगच्छति ।)

**अविद्या**—देव, मध्याह्नसमयोऽतिवर्तते । तन्माध्यंदिननियमनिर्वर्तनाय विसृज्यतां तापसी । देवेनापि माध्यंदिननियमा निर्वर्त्यन्ताम् । अहमपि तदुपकरणानि संनिधापयामि ।

(इति निष्क्रान्ताः सर्वे ।)

**प्रथमोऽङ्कः ।**

---

द्वितीयोऽङ्कः ।

(ततः प्रविशति प्रवृत्तिरसूया च ।)

**असूया**—ततस्ततः ।

**प्रवृत्तिः**—प्रागेव 'चित्तशर्मणा सह रहसि कतिपये तापसाः संलपितवन्तः' इति चेटीमुखादवकर्ण्य संदेहतरलिता । तदनु समक्षमेव कर्णे किमपि रहस्यमभिधाय राजानमतिपर्युत्सुकितवत्या कया च तापस्या च नितान्तसंक्षोभितहृदया प्रियसखी भट्टिनी मामवोचत्—

'वेदारण्यनिकेतनाः शमदमप्रष्ठा महायोगिनः
श्रूयन्ते कतिचिन्निवृत्तिरिति च ख्याता तथा तापसी ।
ते सर्वे शिवभक्तिमार्गनिरता ये तावदत्रागता-
स्तन्नामान इमे परे किमथवा साक्षात्त इत्यामृशेः ॥ १ ॥

यदि खलु तदितर एते यत्किंचिदिदं ततो न भेतव्यम् ।
अथ यदि त एव ते स्युर्यत्नो भूयानिह प्रतीकारे ॥ २ ॥

अतस्तदिदमविचिकित्समामृश्य समागच्छ इति, तदनु 'कथंचिद्वेदारण्यमधिगम्य केन कुत्र निषद्यते, कः किमाचरति, कथमिदमवगच्छेयम्' इति चिन्तातरलितायां मयि यदृच्छया तत्र कामना संप्राप्ता । तदनु तया विविच्य सकलमभिहितम्—

'अस्मत्कामपुरोगमैः सममितः काम्यक्रियोपासनाः
शुद्धास्ते परतः शमप्रभृतयस्ते मन्वते सांप्रतम् ।
राजा शुद्धतरः किलैष तदिमं व्याकृष्य दुःसङ्गतो
नीचादस्य महात्मनः सुसदृशीं दद्यामविद्यामिति ॥ ३ ॥

तदेवमविद्याकुलविघटनाय विरक्तिनिवृत्तिभ्यां सह विवेकशमदमादिबहुलपरिवारा शिवभक्तिरियमत्र प्रभवति' इति । त्वं पुनः क्व प्रस्थितासि ।

**असूया**—भट्टिन्याहमेव[1] संदिष्टासि—'असूये, काम्यक्रियोपासनाः समेत्य ब्रूहि—कदाचिदयं तत्र राजा यदि समागच्छेत्तदा स यथा भक्तिविरक्तिनिवृत्तिप्रभृतिभिर्नाक्रम्येत, तथा युष्मदीयविलासचातुर्यरामणीयकैरेव वशीकरणीयः' इति । तत् 'इह को मार्गः, किं सुखम्' इति बुभुत्सातरलिता दैवादत्रभवत्योपगता विदितकरणीयास्मि । तत्साधयामि ।

**प्रवृत्तिः**—इदमपि[2] स्थान एव संविधानम्, अवश्यकरणीयं च । भूयानतीतः कालः । इयता हि कालेन चित्रशालाभ्यन्तरे विषयवासनया सह भट्टिनी चिरेण मम मार्गं प्रतीक्ष्य निर्विद्येत । तदहमविलम्बितमेव तत्सकाशं गच्छामि । त्वयापि यथानियोगमाचर्यताम् ।

(इति परिक्रम्य निष्क्रान्ते ।)

प्रवेशकः ।

(ततः प्रविशति विषयवासनया साकमविद्या ।)

**अविद्या**—सखि विषयवासने, भवत्सहायापि नन्वहमीदृशीं दशामुपागतास्मि ।

---

१. 'भट्टिन्या तदेवं संदिष्टाहम् । यथा—' ख. २. 'मस्थान' क.

**विषयवासना**—किमेतावती मयि भट्टिन्याः प्रतिपत्तिः ।

**अविद्या**—किमल्पप्रभावा भवती । तथा हि ।

शास्त्राणि सन्तु सुबहूनि पठन्तु तानि
सर्वं त्वमन्यथयसे निजवैभवेन ।
कृष्टस्त्वया विवलते विषयेषु नाम
बद्धो बलीमुख इवाशरणो बुधोऽपि ॥ ४ ॥

**विषयवासना**—सखि, किमेतावदद्य ते संप्राप्तम् ।

**अविद्या**—शृणु तावत् ।

अग्रेऽभूदयमेक एव न परः कश्चिद्द्वितीयोऽभव-
त्तादृक्षस्य मयैव मित्र तनयाः संबन्धिनो बान्धवाः ।
किं भूयः कथनेन भोगविषया लोका इमे लम्भिताः
सोऽयं मय्यधुना विभाति विमुखः केनेति न ज्ञायते ॥ ५ ॥

किं च ।

किं दैवं परिपन्थि वा मम कथा किं बोधितं वा मृषा
तादृक्प्रेमतरङ्गितोऽतिसरसः स्वामी स जीवोऽधुना ।
मामालोकयते जनानिव जनः शुष्कप्रवृत्त्या दृशा
किंरूपेण मनोहरेण बहुना भोग्येन भाग्येन वा ॥ ६ ॥

न केवलमस्य विमुखतैव मां व्यथयति । अपि तु तदनुमीयमाना विमतनायिकासक्तिसंभावनापि ।

**विषयवासना**—(सोत्प्रासम् ।)

ननु ते विदिता सकलैरघटितघटनापटीयसी शक्तिः ।
अहमपि ते सध्रीची कथमस्थाने विशङ्कते भवती ॥ ७ ॥

सम्यक्प्रवृत्तिरुपलभ्यताम् ।

**अविद्या**—(स्मृतिमभिनीय ।) प्रागेव शङ्कितविषयोदन्तविमर्शनाय प्रहिता प्रवृत्तिः किमद्यापि नागता ।

(ततः प्रविशति प्रवृत्तिः।)

**प्रवृत्तिः**—कथमत्रैव विषयवासनया सह भद्रपीठमध्यास्ते देवी। यैषा

पश्यन्त्येव न पश्यति प्रणयिनी वस्तून्यहो चक्षुषा
शृण्वत्येव[1] शृणोति न प्रियसखी नर्मानुलापानपि।
चेतः क्वापि वचः कुतोऽपि तदहं मन्येऽधुना चिन्तया
पत्युर्विप्रियजन्मना चिरमसावाकृष्यते केवलम्॥ ८॥

अत एव किल

प्रातश्चन्द्रकलेव पुष्यति दृशोर्नानन्दमस्यास्तनु-
निश्वासोष्मविघट्टनेन गलितो बिम्बाधरे शोणिमा।
वीटी चित्रगतेव तिष्ठति चिरं चिन्मुद्रया मुद्रिता
संत्रस्तो विफलोद्यमः परिजनः पर्यन्तमासेवते॥ ९॥

तदुपसर्पाम्येनाम्। (उपसर्पति।)

**देवी**—(पुरोऽवलोक्य।) अयि प्रवृत्ते, ननु स्मृतमात्र एव संनिहितासि। मया तत्रैव पुनरपि किंचित्कार्यविशेषाय प्रहिता किमसूया त्वया दृष्टा।

**प्रवृत्तिः**—अथ किम्। अभिनन्दितश्च भवतादेशः।

**अविद्या**—अनेन वाक्येन त एव शमदमादयः, सैव च निवृत्तिरपि, कार्यं च तदेव, यन्मया शङ्कितमिति ज्ञायते।

**प्रवृत्तिः**—अथ किम्। (इति कामनाकथितमखिलं कथयति।)

**अविद्या**—अयि विषयवासने, स्थान एव खलु मे तर्कः। तत्किमत्र मन्यसे।

**विषयवासना**—सखि, न भेतव्यम्। यत्किंचिदेतत्।

स्वाध्यायाध्ययनावबोधविहितानुष्ठाननिष्ठाक्रमैः
कान्तारे गिरिकंदरे तृणपयोवृत्त्या च शुद्धान्तरः।
आरुह्य श्रवणादितुङ्गपदमध्यास्तां निदिध्यासना-
त्कं नस्योतमिवापकृष्य विषये बध्नामि कामादिभिः॥ १०॥

---

१. 'शृण्वत्येष' ख.

(विमृश्य।) हन्त, शमदमादिसंबन्धेन महोपनिषदुपदेशेन च कश्चिदविद्यामपहाय विद्यामधिगमिष्यति । तदहं क्व गमिष्यामि ।

प्रत्यक्षसिद्धमपलप्य गिरामभूमि-
मन्यत्सुखं किमिति हा रसिका गृणन्ति ।

अथवा ।

श्रोता जनो यदि मिलेदतिमन्दबुद्धिः
किं किं न बोधयति वञ्चनकेलिलोलः ॥ ११ ॥

मत्प्रसूतयोरसंभावनाविपरीतभावनयोः प्रभावं न कोऽपि विजानाति । किं बहुना ।

वेदारण्यमुपैतु तत्र वियदालम्बा मृषावादिनो
ये तेषां च वचः शृणोतु मनुतां तथ्यं तदेव स्वयम् ।
मत्पृष्टं प्रतिवक्तु किंचन तनौ कीटादितोदे मना-
गुत्प्लुत्यैष कुतोऽनुधावति मृषाभूतं किलास्याखिलम् ॥ १२ ॥

स एष विपरीतभावनाप्रभावः केन वा जय्यः । किं च मयि प्रभवन्त्यामिह कस्यचिद्ब्रह्मनिष्ठा का नाम ।

भस्मावगुण्ठननिमीलनमोहनीया
येयं चकास्ति कुहचित्परमात्मनिष्ठा ।
एषा शिवोऽहमिति किंचन शब्दमात्र-
मन्तर्न किंचिदपि न भ्रमितव्यमत्र ॥ १३ ॥

अयि भट्टिनि, प्रवृत्तिर्नाम किमियं साधारणीति मन्यसे । निवृत्त्या वशीकृतमपि बलादियमपकर्षत्येव । पश्य तावत् ।

आयुर्भूरि गतं पतन्ति सुदृशास्तुच्छैरलं व्यापृतै-
र्भूतं भावि यथा तथास्त्विति भृशं शंभोः सपर्याविधौ ।
संनद्धोऽपि समाधिनिष्ठहृदयोऽप्युत्सृज्य सर्वं निज-
व्यापारे समयातिपत्तिचकितः कृष्टोऽनया धावति ॥ १४ ॥

---

१. 'मनुना' ख.

तदेवमपरिमेयप्रभावयोरावयोरनवरतमपि भवदभ्युदयैकतानभावयोः सत्योः किं नाम भवदभिमतमापद्येत । अपि च कुटिलकरालकर्मगहनैरतिदुर्वारैर्मोहादिभिरस्मदीयपरिवारैरनवरुद्धतया परिमितोऽपि न खलु कश्चिद्देशः कालो वा । अतस्तानतीत्य वेदारण्यप्रवेशोऽतिदुर्घट एव । प्रविष्टोऽपि काम्याभिः क्रियाभिरुपासनाभिश्च बलादाकृष्यत एव ।

**प्रवृत्तिः**—अयि भट्टिनि, किंचिदहं विज्ञापयामि ।

विलासिनीनां पुरुषप्रतीपतारसानुविद्धा यदि शोभते परम् ।
यदि स्म सा भग्नरसा कृतव्यथा तदेव तासां गरिमव्यपोहनम् ॥ १९ ॥

अतो विमुखोऽपि विप्रियकार्यपि मन्युवेगमन्तरेव निगृह्य विनयेन चातुर्येण च राजायमनुरञ्जनीयः । अपि च य एष चित्तशर्मा राजनर्मसखः, सर्वमेतस्मिन्प्रतिष्ठितम् । अतोऽयमुपचारैरनुपदमपि विधेयीकरणीयः । आवामपि समुचितेषु केषुचिदर्थेषु व्याप्रियावहे ।

(इति निष्क्रान्ताः सर्वे ।)

द्वितीयोऽङ्कः ।

---

तृतीयोऽङ्कः ।

(ततः प्रविशति निवृत्तिः ।)

**निवृत्ति**—'अत्रभवत्याः शिवभक्तेर्वचसि विस्रम्भेण जीवराजस्य विद्याप्रतिकृतिं दर्शयिष्यामि' इति कथितवत्यस्मि । तत्किमद्यापि सा न प्रेषिता ।

(ततः प्रविशति चित्रपटहस्ता विरक्तिः ।)

**विरक्तिः**—आज्ञप्तास्मि शिवभक्त्या—'चित्रपटोऽयं निवृत्तिहस्ते दातव्यः' इति । तत्क सा निवृत्तिर्भवेत् । (अग्रतोऽवलोक्य ।) कथमियं निवृत्तिः । यैषा

समीरणे वातितृणेऽपि वा चलत्यवेक्षमाणा परितो दिगन्तरम् ।
जनस्य कस्यापि चिरप्रतीक्षया मनोऽतिरुक्षं दधती समीक्षते ॥ १ ॥

यावदस्या हस्तं चित्रपटं प्रापयामि । (इति परिक्रामति ।)

---

१. 'काम्यादिभिः क्रियादिभिः' क.

**निवृत्तिः**—(विरक्तिमवलोक्य ।) सखि, क्व प्रस्थितासि ।

**विरक्तिः**—सखि, भगवत्या भवदन्तिकमनुप्रेषितास्मि । (इति चित्रपटमर्पयति ।)

**निवृत्तिः**—(चित्रपटं निर्वर्ण्य ।) अहो प्रतिकृतेरभिरूपता ।

एतद्वाङ्मनसातिवर्ति महितं रूपं बतेयत्तया
　चित्तेनोल्लिखितं कथं विलिखितं हस्तेन वा तत्कथम् ।

अथवा न चित्रकारनैपुणमेतत् ।

अप्रज्ञेयमहाप्रभावमहसो भक्तेरियं प्रायशो
　भक्तत्राणगरीयसी विरचना नूनं भवेन्मानसी ॥ २ ॥

सखि विरक्ते, संप्रति किमाचारो जीवराज इति किमवगम्यते ।

**विरक्तिः**—चित्तशर्मणा वयस्येन शृङ्गारवने माधवीमण्डपमधिवसति महाराज इति श्रुतम् ।

**निवृत्तिः**—तर्ह्ययमेवावसरस्तदुपसरणाय ।

(इति निष्क्रान्ते ।)

**प्रवेशकः ।**

---

(ततः प्रविशति यथानिर्दिष्टः सचिन्तो राजा ।)

**राजा**—सखे चित्तशर्मन्, अत्रभवत्या निवृत्त्या रहस्यावेदनात्प्रतिनिकाममस्वस्थहृदयो भवामि । तथाहि ।

हृद्यं वस्तु न रोचते हृदयजस्तापो न विश्राम्यति
　श्वासः प्लोषयतेऽधरं शिथिलयत्यङ्गानि चिन्ता मम ।
मोहे मज्जति चेतनापि निमिषः कल्पादनल्पायते
　कस्मै किं कथयेय हन्त तमिमं कालं क्षिपेयं कथम् ॥ ३ ॥

**चित्तशर्मा**—वयस्य, किं केवलेन विषादेन । विधीयतां तदुचितो यत्नः ।

**राजा**—तमेव खलु न प्रतिपद्ये ।

**चित्तशर्मा**—वयस्य, सोऽपि हृदयंगम एवोपनमितो दैवेन ।

**राजा**—कथय कथय ।

**चित्तशर्मा—**

'वेदारण्यनिवासिनः कतिपये दृष्टा मया तापसाः
प्रागेकत्र शमादयः समुदितास्ते मामवोचन्निदम्।
जीवस्यास्य विभोश्चिरादिह सुखे दुःखेऽनु[1] भोक्ता भवा-
न्यस्य श्रेयसि कोऽपि कश्चिदिव किं ताटस्थ्यमालम्बते ॥ ४ ॥'

इति। तदनु भो महाभागाः, सांप्रतमस्माकमिह किं नाम सुखं हीयते।

जीवः सुखात्मा विभुरेष राजा प्रधानभूतोऽहममुष्य विष्वङ्[2]।
भोगाः समग्रा विषयेषु मत्तस्तटस्थता का मम तत्सुखेषु ॥ ५ ॥

तथा हि।

उद्यानोदरपद्मिनीपरिसरे पर्यन्तयन्त्रोच्चल-
च्चन्द्रोशीरसुगन्धिशीकरभरस्फायत्समीराङ्कुरे।
[3]पीतस्वादुरसायनादिसुहितैरस्माभिरस्तव्यर्थै[4]-
र्नीयन्ते हि सुखैकतानविसरा वासन्तिका वासराः ॥ ६ ॥

इत्थं कदा कुत्र किं नाम सुखं नानुभूयत इति मयाभिहिते, हन्त कारणस्वभावकृत एष ते व्यामोहः[5]। यदेवं ब्रवीषि। शृणु तावत्।

देहो भूतसमष्टिरत्र तपनाधिक्ये जलं क्षीयते
तर्षो नाम स एष[6] तस्य समता तृप्तिः पुनर्वारिणा।
एकस्योपचये भवत्यपचयोऽन्यस्य स्वभावस्त्वयं
भूतानां समता पुनश्च किमिह प्रत्येषि तत्त्वं सुखम् ॥ ७ ॥

अद्वैतं यदनादिमध्यनिधनं सत्यैकरूपं सुखं
तत्र[7] त्वामुषितं मृषायितमिवाविद्याविलासैर्निजैः।
विश्वं दर्शयसे यथार्थवदिदं स्वप्नेन्द्रजालोपमं
धीरः कः पुनराद्रियेत तदिहासत्ये प्रपञ्चे सुखम् ॥ ८ ॥

---

१. 'न' ख. २. 'विष्वक्' ख. ३. 'पीतः' क. ४. 'व्यर्थैः' क. ५. 'मोहः' क. ६. 'एव' ख. ७. 'तत्कृत्वा मुषितं' ख.

किं च।

रूपं नाम विशिष्टवस्त्विति पृथग्यद्यत्समालक्ष्यते
सर्वं चास्थिरमव्यवस्थितमनिर्वाच्यं च संमर्शने।
मन्त्री त्वं कियतश्चिरस्य वपुषि व्यस्ते तदास्ते क ते
शत्रुं कश्चिदवैति मित्रमपरः पुत्रं कुतस्त्वां परः॥ ९॥

तदेवमसारभूते जगति सारभूतं सुखं किं नाम।

[पिष्टरसामृतसदृशं वैषयिकं तत्सुखं सुखं नैव।
आधिव्याधिजराभिर्दुर्लभमेतच्च काकमांसमिव॥ १०॥]

अतः 'सुखमस्माभिरनुभूयते' इति तव भ्रम एव। भूयोऽपि निदर्शयामः केषु भावेषु कया वृत्त्या किं नाम भवता सुखमन्वभूयत।

याच्ञादैन्यकदर्थिता द्विजनुषां शोच्यैव वृत्तिस्त्वसा-
वस्वायत्तविधेयगौरवमुखा सेवा हि दुर्जीविका।
शैलारण्यसमुद्रयानवहनक्लेशादि वा वर्ततां
क्षुद्रं यत्क्षुरजीवनं शिव शिव स्मर्येत तत्किं जनैः॥ ११॥

तदेवमतिजुगुप्सितोऽयमविद्याविलासः। श्रूयतामस्य जगतस्तत्त्वम्।

ब्राह्मं तत्पदमर्चिरादिभिरितो धन्यस्तु नावर्तते
यो धूमादिपथं स्वरेति स यथायातं परावर्तते।
आवृत्तः स तु लिङ्गदेहघटितो बोधादिशून्यश्चिरं
तिष्ठेद्व्रीहियवास्तिला इति जनिप्रारम्भकाभावतः॥ १२॥

तदनु

काले क्वापि कुहापि कोऽपि यदि तानश्नाति तद्रेतसा
ब्रह्मक्षत्रपुरोगमेषु भजते पुण्यानुरूपं जनुः।
व्यावृत्ताः पितृलोकतोऽनधिगतस्वर्गास्तु ये पापिनः
श्वानः सूकरपुल्कसा इति जनुः कालेन गच्छन्ति ते॥ १३॥

पुण्यप्रभावादूर्ध्वलोकगामिनां जीवानामियं स्थितिः।

ये देवयानपितृयानपथानभिज्ञा
जीवास्तु ते जनिमृतीः क्रिमिकीटरूपाः।

---

१. 'कुतः' क. २. कोष्ठकान्तर्गतश्लोकः क-पुस्तके त्रुटितः.

व्यावर्तयन्ति सुचिरादिह कल्पकोटी-
नोर्ध्वं व्रजन्ति गहनैवमसावविद्या ॥ १४ ॥

अतो जीवराजस्य तदेतन्महासंकटविमोचनाय भवतैव प्रयतितव्यम्, चिरादभेदेनोपलाल्यमानादमात्यादृते किमायत्तानि राजसौभाग्यानि । तदिह कुतो विचक्षणोऽपि भवानात्मनोऽधिकारं न प्रतिपद्यते । अपि च प्रयत्न एष तत्प्रतीपबलवत्तरवरवर्णिनीपरिणयनरूपतया तव सुकर एव । कथमिदमनावेद्यैव राज्ञे करणीयमिति न शङ्कनीयम् ।

विस्रम्भप्रणयोचिताः सुचरिता धर्मार्थविज्ञानिनो
ये तावत्किल मन्त्रिणः क्षितिभुजामेते किमर्थान्तरम् ।
अन्यद्धर्मचरं शरीरमपरं सालोचनं लोचनं
राज्ञः किं बहुनाभितो विजयिनः प्राणा भवन्त्यान्तराः ॥ १५ ॥

न तावदमात्यमात्रं भवान् । अपि तु नर्मसचिवश्च । तदपूर्वरमणीसंघटनमिदमवश्यकरणीयमनुरूपं चेति । तदनु तानहमप्राक्षम्—

'कत्या किंप्रभवा किमाकृतिगुणा किंनामधेया च सा
श्रेयस्तद्धटने किमस्त्यघटने किं नाम तद्धीयते ।
तत्प्राप्तौ परिपन्थिनः क इह नस्तैरन्तरायाः कथं
तेषामप्यपनोदनेऽथ घटने कश्चाभ्युपायो भवेत् ॥ १६ ॥'

इति । तदनु ते मामवोचन्—

'वेदारण्यावसथसुहिता स्वामिनी मादृशाना-
माविर्भूता मननजनिदिध्यासनात्पुण्यभूम्ना ।
विद्युल्लेखाचिरतरसमुद्द्योतिनीवाद्भुतश्री-
रेषा योषामणिरुपनिषद्वंशभूषा विभाति ॥ १७ ॥

विद्याख्या हृदयंगमाकृतिरसावस्याः समासादने
न व्याधिर्न जरा न मृत्युरशना या सा पिपासापि न ।
न क्लेशो न भयं च किं तु परमानन्दातिसान्द्रीकृता
दुःखासंकलिता च काचन दशा सत्या समुन्मीलति ॥ १८ ॥

सत्यानन्दमपारमक्षयमिदं विद्याधनं पङ्कतः
　कृत्वा गाढनिगूहितं व्यथयते लोकानविद्या चिरम् ।
तिष्ठन्नेव विधौ यथानिधिमविज्ञायैव कार्पण्यतो
　विश्वग्धावति तद्वदेतदविदञ्जीवः परं खिद्यते ॥ १९ ॥

यस्यां मुह्यति निद्रया निशि जगत्स्वप्नेन्द्रजालाकुलं
　तस्यां जाग्रति योगिनस्तदनया सत्यार्थसंदर्शिनः ।
दिव्या दृष्टिरियं निमेषरहिता हन्तानया पश्यतां
　छिद्यन्तेऽखिलसंशयभ्रमविपर्यासाश्च कर्माणि च ॥ २० ॥

अस्या वैभवतोऽपि नक्तमहरेवास्याभिनिष्पद्यते
　तच्चाहर्न कदापि याति सकृदेवास्य प्रभातोदयः ।
आत्मानन्दसुधासमुद्रलहरी सा चेदनासादिता
　मध्याह्नोऽपि निरन्तरेण तमसा घोरो निशीथो भवेत् ॥ २१ ॥'

इति । तदेवंविधदिव्यमङ्गलगुणग्रामा विद्येयम् ।

**राजा**—(सपरितोषम् ।) ततस्ततः ।

**चित्तशर्मा**—

कामक्रोधमुखाः प्रतीतविभवा जीवस्य षड्वैरिण-
　स्ते ह्यस्माकमसंनिधौ विदधते निःशङ्कमोजायितम् ।
यत्रामी वयमास्महे समुदिताः साकं विवेकादिभि-
　स्तत्रैते न समुन्मिषन्ति पुरतो भानोरिवान्धं तमः ॥ २२ ॥

जीवस्याप्यभितोऽपघातिन इमे विघ्नास्तु तत्संभवाः
　कर्षन्तो विषयेषु तं विघटयन्त्यस्मासु यत्संगतम् ।
एतेषामपनोदनेऽभिलषिते चार्थेऽभ्युपायस्त्वयं
　गूढं गाढनिरूढमत्रभवतः सौहार्दमस्मासु यत् ॥ २३ ॥

त्वयि तु विधेये संपन्नकल्पो वेदारण्यप्रवेशः । स एव परमोपाय इति । तदनु 'किमेतादृशि मत्स्वामिनः श्रेयसि मत्सकाशादन्तरं पतिष्यति । सर्वथाहमत्र विषये युष्मदायत्तः' इति सशपथमभिहितवानस्मि ।

**राजा**—वयस्य, प्रणयविस्रम्भौ नाम तदुभावेव यदेवमसंनिधानेऽपि मदनवगतमेव मदीयश्रेयसि बहुधा व्यापृतमिति । (परितोषमभिनीय ।) सखे चित्तशर्मन्,

एते मच्छ्रवसी तदद्भुतगुणस्तोमामृतासञ्जना-
दत्यन्तं सुहिते तदत्र विषये बद्धाभ्यसूये इव ।
एते तन्मुखचन्द्रमःस्मितसुधातर्षाकुले ताम्यतो
मद्दृष्टी त(?)इमे कया नु विधया संप्रीणयिष्याम्यहम् ॥२४॥

तामालिख्य विनोदयेय नयने दृष्टा यदि स्यान्मना-
क्स्वप्ने तामवलोकयेयमिति चेत्स्वापो दुरापो मम ।
अध्यक्षीकरणप्रसक्तिरपि मे तस्यास्तु दूरे गिरा-
मायासोत्तरमाः कथं नु विषयैरात्मानमाश्वासये ॥ २५ ॥

(स्मरणमभिनीय ।) तत्रभवत्या प्रतिश्रुतं प्रतिकृतिदर्शनं तु संभाव्येतापि ।

(ततः प्रविशति विरक्त्या सह निवृत्तिः ।)

**निवृत्तिः**—(पुरतो विलोक्य ।) अयमितश्चित्तशर्मणा नर्मसचिवेन सह विविक्तमध्यास्ते देवः । तदेनमुपसर्पामि । (उपसृत्य ।) विजयतां देवः । (इति राज्ञो हस्ते चित्रपटमर्पयति ।)

**राजा**—(चित्रपटं निर्वर्ण्य । साश्चर्यम् ।) अहो प्रतिकृतेरभिरूपता ।

शुद्धामृतधाममुखो श्रुत्यन्तविसारिदृष्टितोल्लसिता ।
विश्वातिशायिवृत्तिर्विषयेषु कुहापि नेदृशी दृष्टा ॥ २६ ॥

पद्मोल्लासतरङ्गितं पदयुगं जङ्घे सुवृत्तोज्ज्वले
रम्भाडम्भ(?)विडम्बिनौ च तदिमावूरू मनोहारिणौ ।
मध्यं व्योमसखं मुखं विधुरखण्डाकारवृत्त्युज्ज्वलः
कल्याणी बत सेयमद्भुतगुणा कल्याणकान्ताकृतिः ॥ २७ ॥

(साशङ्कं पार्श्वतो विलोक्य ।) दिष्ट्यात्र न संनिहिता देवी ।

---

१. 'तदिमावेव' ख. 'उभाभ्यामेव' इति प्रतिभाति. २. 'ल्लासि' क. ३. 'डिम्भ' सति स्यात्.

(ततः प्रविशति विषयवासनया प्रवृत्त्या च सहाविद्या ।)

**अविद्या**—सखि विषयवासने, कृतघ्नोऽपि देवस्त्वद्वचनगौरवेण ममानुसरणीयः संवृत्तः ।

**विषयवासना**—प्रियसखि, कीदृशमपि दयितमनुसरणेन हृदयरञ्जनेन च विधेयीकुर्वन्ति खलु युवतयः ।

**अविद्या**—सखि प्रवृत्ते, देवः कतमं देशमधिवसतीति जानीहि ।

**प्रवृत्तिः**—(पुरतो विलोक्य ।) नन्वयमित एव चित्तशर्मणा तापसीभ्यां सह शृङ्गारवने मालतीमण्डपमध्यास्ते देवः ।

**अविद्या**—तर्हि विटपान्तरिता एव शृणुमस्तावदेतेषामन्योन्यविस्रम्भजल्पितानि ।

(इति सर्वास्तथा कुर्वन्ति ।)

**चित्तशर्मा**—अपि नाम सुखायते दृशोरियं चित्रगता प्रियतमा ।

**राजा**—किमुच्यते सुखायत इति ।

आप्लाव्य ज्वलदङ्गमङ्गमभितः संसृप्य नाडीष्वपि
प्लोषावेगकदर्थितासुकरणान्युज्जीवयन्ती पुनः ।
अस्या निस्तुलतत्तदङ्गसुषमाकल्लोलिता काप्यसा-
वानन्दामृतदिव्यसिन्धुलहरी विश्वं किलापह्नुते ॥ २८ ॥

संप्रति हि

आलिप्ये नु तुषारलोलनलत्कर्पूरगन्धद्रवै-
रासिच्ये नु घनीकृतैरुत सुधाधाम्नो मयूखोत्करैः ।
एतद्दर्शनसंभृतेन परमानन्देन दावानल-
प्लुष्टो भूमिधरः सुधारसझरेणेवाङ्गमाप्याय्यते ॥ २९ ॥

**निवृत्तिः**—(अपवार्य ।) सखि विरक्ते, दिष्ट्या फलितमिव नः प्रयत्नेन ।

**विरक्तिः**—कथं न फलिष्यति भगवत्या नीतिवैदग्धी ।

**राजा**—(चिरं निर्वर्ण्य सोन्मादं चित्रं प्रति ।)

मृद्नामि किं नु मृदुलं पदपल्लवं ते
किं ते लिखामि कुचयोरुत पत्रवल्लीम् ।

एह्येहि मे विदधती सकृदङ्कपाली-
मन्तर्गतं निरवशेषय तापमेनम् ॥ ३० ॥

**चित्तशर्मा**—(सोपहासम्।) वयस्य, प्रतिकृतिरियं खलु तस्याः।

**अविद्या**—सखि, श्रुतं ननु श्रोतव्यम्। तदेवमेतैरितरनायिकासंघटनकुहनाभिरिति संधीयामहे।

**विषयवासना**—सखि, भूयोऽपि शृणुमस्तावत्।

**निवृत्तिः**—देव, सत्वरमनया सुदृशा सह भवन्तं योजयिष्यामि। न पुनरिह विषये भवता विषादो विधेयः।

**राजा**—परमकारुणिकीभ्यामप्रमेयमहिमातिशयाभ्यां भवतीभ्यामनुगृहीतस्य मम को नाम विषादः।

**अविद्या**—सखि, श्रुतानि खलु भूयः श्रवणामृतानि।

**विषयवासना**—प्रियसखि, भवत्संनिधाने सर्वमिदं विघटितमेव भवेत्। (इत्युद्धतमुपसर्पति।)

**राजा**—(दृष्ट्वा। सभयम्।) वयस्य, का प्रतिपत्तिः।

**चित्तशर्मा**—वयस्य, भवता कथमपि समाधीयेत सा। मम तु का गतिः। (विचिन्त्य।) भवतु। तामेवानुसरेयम्। इमे च तपस्विन्यौ तिरस्करिणीविद्यया चित्रफलकेन सह तिरोहिते भविष्यतः।

**राजा**—तथा। (इति धैर्यमवलम्ब्य तिष्ठति।)

**चित्तशर्मा**—(उपसृत्य।) स्वस्ति भवत्यै।

**अविद्या**—(चित्तशर्माणं निर्भर्त्स्य। राजानमुपसृत्य।) अपि सुखायते चित्रगता प्रियतमा। अपि संघटयिष्यतस्तापस्यौ।

**राजा**—(सभयगद्गदम्।) देवि, तवासांनिध्याच्चित्तशर्मणा कालविनोदनाय विरचितमिन्द्रजालम्। इदं परमार्थतया न गृह्णातु भवती।

**अविद्या**—हन्त प्रत्यक्षसिद्धापलपनसाहसमेतस्य।

---

१. 'मेतं' ख. २. 'मेताभिरितर' ख. ३. रति' क.

**राजा**—अतथाभूतमपि वस्तु तथाभूतमिव प्रत्यक्षमुपदर्शयेयुर्न किमैन्द्रजालिकाः । तदपि यदि सत्यमेवावगच्छसि । तत्र कः परिहारः ।

**अविद्या**—न तावदिदमिन्द्रजालं चित्तशर्मणः । अपि तु तवैव साहसमेतत् । क्व ते तापस्यौ । क्व च सा प्रतिकृतिः ।

**राजा**—ननु कथितमेव सकलमिन्द्रजालमिति । त्वं तु परमार्थतयैव प्रतिपद्यसे ।

**अविद्या**—कृतं कृतमकृतज्ञेनानेन शठेन । (इति साटोपं परावर्तते ।)

**चित्तशर्मा**—वयस्य, पादप्रणामादिभिरुपचारैर्यथोचितं प्रसाद्यतां कुपिता देवी ।

**राजा**—(कतिचित्पदानि गत्वा प्रणम्य ।) प्रसीद प्रसीद ।

(अविद्या साटोपमवधूय गच्छति ।)

**राजा**—

न ब्रूषे न विलोकसे न च वचस्तथ्यं शृणोषि प्रिये
किं न्वेतन्मयि तादृशं तव मनः कस्मादभूदीदृशम् ।
दम्पत्योस्तु न जायते किममतं जातं न किं मृष्यते
किं वा जातमिहाधुना विधिरहो तिक्तां विधत्ते सुधाम् ॥३१॥

**प्रवृत्तिः**—(अपवार्य ।) भवत्वयं यादृशस्तादृशो वा । त्वया पुनरपारुष्यमेवावलम्ब्यताम् ।

**विषयवासना**—युक्तमाह प्रवृत्तिः ।

**अविद्या**—हन्त, भवतीभ्यामपीदं रोचते । का गतिः । (इति तिष्ठति ।)

**राजा**—

मां कल्याणि पुरा तवोपयमनाद्ये केऽपि किं जानते
त्वामासाद्य मया प्रिये नवनवं किं नानुभूतं सुखम् ।
तत्तादृङ्महनीयवैभववती सौभाग्यसीमायिता
मां मत्त्वा कृतविप्रियं बत कथं व्याधुन्वती धावसि ॥ ३२ ॥
त्वं वित्तादपि गात्रतोऽपि करणग्रामादपि प्रेयसः
प्राणादप्यधिकेति सुन्दरि भवत्प्रीत्यैकबद्धादरः ।

वर्तेऽहं वितथव्यलीकपरुषा नैर्घृण्यमालम्बसे
यद्येवं मयि सर्वथैव परितः किं वा करिष्याम्यहम् ॥ ३३ ॥

**अविद्या**—(सोत्प्रासम्।) सख्यौ, श्रुतं खलु।

देवस्यास्य किलाहमद्य दयितात्प्राणादपि प्रेयसी
राजानं प्रति तोदनैरलमहो वाक्यैरमीभिस्तव।
यद्वा वल्लभवस्तुसङ्गिनि मनस्यात्मन्यनायत्तता
तद्दोषादयथोचितं व्यवहरस्येवं न दोषस्त्वयि ॥ ३४ ॥

**विषयवासना**—देव, सर्वतोमुखविचित्रपरमानन्दविधायिनीं देवीमपहाय वाङ्मनसातिवर्तिनि कुहापि विषये कुतो भवानासज्जति।

**चित्तशर्मा**—वयस्य, तथ्यमाह विषयवासना।

**प्रवृत्तिः**—आर्य चित्तशर्मन्, प्रगल्भोऽसि समयोचितमभिधातुम्। तथ्यमेवाह विषयवासना। त्वयि तु न व्यवस्था।

**चित्तशर्मा**—स एष मम सहजो धर्मः।

**अविद्या**—अलमलमतिप्रसङ्गेन।

(नेपथ्ये वैतालिकौ।)

**एकः**—

मोक्तुं तापमिव प्रतीचिजलधौ मज्जत्ययं भानुमा-
न्रागः कोऽपि विजृम्भते घनपथे चित्ते वधूनामपि।
आर्द्रागाः कुपितामुपासिसिषते कान्तां विलासी जनो
भक्त्या कर्मठभूमिदेवपरिषत्संध्यां च सायंतनीम् ॥ ३५ ॥

**द्वितीयः**—

गन्धेन स्फुटकैरवाकरभुवा विष्वग्विकर्षन्नली-
न्स्वच्छन्दं दिवसावसानपिशुनो मन्दानिलः स्पन्दते।
भावी नौ विरहाधिरित्यविदितेऽप्यन्तःशुचा स्थीयते
कोकेन प्रियया सहैकनलिनीनालाधिरूढेन च ॥ ३६ ॥

(सर्वे आकर्णयन्ति।)

---

१. 'दूने चक्षुषि' ख.

**चित्तशर्मा**—देव, अतिवर्तते संध्यासमयः ।

**राजा**—तथा ।

(इति निष्क्रान्ताः सर्वे ।)

**तृतीयोऽङ्कः ।**

---

चतुर्थोऽङ्कः ।

(ततः प्रविशति चित्तशर्मा ।)

**चित्तशर्मा**—

तेजोवैभवकौशलोपकरणान्यद्धा मुधासिद्धिषु
व्यक्तं राघवपाण्डवादिषु रणे मुह्यत्सु दृष्टं हितम् ।
तन्मन्ये पुरुषस्य काङ्क्षितहितावाप्तिस्तु दैवेच्छया
स्वेनेदं कृतमेतदाप्तमिति ये नन्दन्ति मूढा हि ते ॥ १ ॥

अद्य खलु

विस्रम्भप्रणयास्पदस्य सुहृदो निर्व्यूढमिष्टादिकं
देव्याः प्रार्थितकार्यसाधनकृता प्रीतिः समग्रोदया ।
तत्रापि स्वसमीहितार्थफलसंपत्तिर्विरोधं विना
दैवेनोपनतं कियत्कियदहो वाञ्छानुरूपं हितम् ॥ २ ॥

तदिदमद्भुतसंविधानमत्रभवत्याः शिवभक्तेः कस्य मुखेन कर्णपथमवतारयेयम् । सा तावदितः प्रतिनिवृत्तयोर्विरक्तिनिवृत्त्योः सकाशादत्र चित्रपटदर्शनवृत्तान्तमवकर्ण्य त्रुटितमिह कार्यमिति बहुधा निर्विद्येत । अतः सत्वरमेतदर्थप्रापणे कः समर्थो भवेत् । (पुरो विलोक्य ।) दिष्ट्या सत्सङ्गोऽयमित आगच्छति । य एष

धुनीते संतापं दुरितशतचिन्तासमुदितं
तमःस्तोमक्लेशं तरणिरिव सद्यः समुदर्धन् (?) ।
निरुन्द्धे दुर्वृत्तं निखिलमपि पर्यन्तविरसं
पथः पुण्यानेव प्रथयति परिक्लेशविधुरान् ॥ ३ ॥

---

१. 'मूढास्तु ते' ख.

(ततः प्रविशति सत्सङ्गः ।)

**सत्सङ्गः**—आदिष्टोऽस्मि तत्रभवत्या शिवभक्त्या—'चित्तशर्ममुखेन जीवराजवृत्तान्तमवगम्य सपदि परावर्तस्व' इति। (पुरो विलोकयन्।) अयमसौ चित्तशर्मा। यावदेनमुपसर्पामि। (उपसृत्य।) अपि कुशलं वयस्याय।

**चित्तशर्मा**—विशेषतश्च भवत्समागमेन। (सपरितोषम्।) सखे सत्सङ्ग, समये समुपगतोऽसि। शृणु तावत्। अहं किल वयस्येन जीवराजेन संदिष्टोऽस्मि।

**सत्सङ्गः**—कथमिव।

**चित्तशर्मा**—'वयस्य, चित्रदर्शनात्प्रभृति नितान्तदुर्मनायमाना देवी। तत्तदुचितचमत्कारिचतुरतरोपायैरुपसृत्य भवता तथा विधेया, यथा सा स्वयमेव मामुपगम्य वेदारण्यगमनमभ्यर्थयेत' इति। तदनु कथमेतदुपपद्यताम्।

आर्द्रागसा कथमियं हि मयाभ्युपेया
तादृक्करालहृदयाथ कथं प्रसाद्या।
भूयः प्रतीपयुवतिस्मृतिकारिणीषु
वेदाटवीषु गमनस्य कथा कथं स्यात्॥ ४॥

इत्येवमतिमात्रचिन्तातरलिते मयि तत्क्षणमेव सत्वरोपगतया देव्याः सहचारिण्या कुहनयाभिहितम्—'आर्य, भवदाकारणाय भट्टिन्या प्रेषिताहम्' इति। तदवकर्ण्य 'किमेतदापतितम्' इति मयि किमपि किमप्यन्तराशङ्कमाने 'न किंचिदत्र विचारस्थानमार्य भवन्तं संमानयितुमत्रभवती समाह्वयति' इति सा कथितवती।

**सत्सङ्गः**—ततस्ततः।

**चित्तशर्मा**—तदनु 'किमयमसंभावितोपन्यासस्त्वया क्रियते। तदधुना सप्रकारमखिलमावेदय' इत्यनुयुक्ता कुहना यथावृत्तमभिहितवती।

**सत्सङ्गः**—इदं श्रोतव्यम्।

**चित्तशर्मा**—नितान्तदुर्मनायमानां देवीं प्रियसखीं विषयवासना र-

---

१. 'ममा' क.

हसीत्थं बोधितवती । यथा—'प्रियसखि, त्यज्यतामिदमाकस्मिकं वैक्लव्यम् । शृणु तावत् । चित्तशर्मा नामायं जीवस्य नितान्तमन्तरङ्गः । तदस्मिन्नखिलराजकार्यधुरंधरे विरोधो न फलति । अतस्तमिममनुरुध्यैव राजा विधेयीकर्तव्यः' इति ।

**सत्सङ्गः**—सुष्ठु कथितं विषयवासनया ।

**चित्तशर्मा**—तदनु देवीसमक्षमुपगम्य निःशङ्कमहमब्रुवम् ।

**सत्सङ्गः**—कथमिव ।

**चित्तशर्मा**—

'कुतोऽपि हेतोरतिदुर्मनायते चिरेण राजा चतुरा भवत्यपि ।
मनो निरुध्यैव तदीयमात्मनो मनोरथः संप्रति किं न पूर्यते ॥ ५ ॥

तस्य हि चिरादभिलषितो वेदारण्यप्रवेशः । तत्र नित्यसंनिहितशमदमादिविघटनाय प्रागेव संनिधापनीया महामोहादयो महामात्राः । तदनु तत्र भवत्या सह प्रविष्टे राजनि काम्यादिभिः क्रियाभिरुपासनाभिश्च तरलीकृते सेत्स्यति समग्रस्ते मनोरथः' इति ।

**सत्सङ्गः**—सखे, सत्वरमेव निर्वर्तनीयोऽयमर्थः ।

**चित्तशर्मा**—कुतः ।

**सत्सङ्गः**—निवृत्तिमुखाज्जीवराजगुणानवकर्ण्य बलवदुत्कण्ठिता विद्या । तथाहि ।

आदर्शभित्ति भजते न विहारगेह-
　मासन्नचन्द्रमभितः स्वमुखाम्बुजेन ।
आलीरभि प्रतिवचो गृणती गवाक्ष-
　मारामकोकिलभयेन मुहुः पिधत्ते ॥ ६ ॥

तदेवमतिमात्रविरहसंतापजनितोन्मादतरलिता सा ।

**चित्तशर्मा**—(सहर्षम् ।) एवमन्योन्यानुरागे सति सुकरमेव कार्यशेषं तर्कयामि ।

---

१. 'तस्मिन्' ख. २. आदर्शद्वयेऽपि नोपलभ्यते. ३. 'दिभिरुपासनाभिश्च' ख.

**सत्सङ्गः**—सखे, भवन्तमधिकृत्य किंचिदिव संदिहानेन मया कदाचिदत्रभवती शिवभक्तिरभिहिता—'सांप्रतमस्माकमतिविधेयोऽपि चित्तशर्मा चिरतरमविद्यानुबन्धी कथमस्मदभिमतकार्यानुकूलो भवेत्' इति। तदनु निजहृदयनिर्विशेषमेव त्वामिह मन्यमाना भगवती कथितवती—'स एव कार्यमिदं प्रस्तुतमभिनिर्वर्तयिष्यति' इति।

**चित्तशर्मा**—परेङ्गितपरिज्ञानप्रवणहृदया हि महानुभावा भक्तिः। (सस्मितम्।) अये सत्सङ्ग, सत्यमहमेवंशङ्कनीयो भवेयम्, अत्रभवती यदि न मामनुगृह्णीयात्। संप्रति तु मदध्यवसायः श्रूयताम्—

भुञ्जानः सुचिरादभेदविधया भोगानहं स्वामिनो
जीवस्याभ्युदयाय वर्ष्म च तृणप्रायं त्यजाम्यत्र तु।
सङ्ग्रामे समुपागते निजभुजव्याधूतखड्गाहति-
च्छिन्नस्वीयसनाभिवर्मविपिनः कर्णः प्रमाणं मम॥ ७॥

किं च।

गोत्रानुबन्धममतादिषु निर्विशेष-
स्तत्तादृशः कुलमहत्तर एव भीष्मः।
स्वामी सुयोधन इति द्रुतमाजिभूमौ
शास्त्रास्त्रवर्षपरुषोऽजनि पाण्डवेषु॥ ८॥

अतस्तदनुग्रहभाजनमहमन्यथा न शङ्कनीयः। सोऽहमचिरेण राजानमविद्यया सह वेदारण्यं प्रवेशयामि। तदनु तत्र कामनानुविद्धतत्तदुपासनाभिरविद्यापि राजानं प्रलोभयेत। तदनन्तरकरणीये भगवती प्रमाणम्।

**सत्सङ्गः**—अत्रभवती शिवभक्तिस्ताभिरेवोपासनाभिः साकमनतिभिन्नाया दहरविद्यायाः पदान्तर एव विद्यामपि राजमात्रदृश्यतयानुप्रवेशयितुमध्यवस्यति।

**चित्तशर्मा**—अतः सत्वरमिममुदन्तमावेदयितुमत्रभवती शिवभक्ति-

१. 'महमेवमेवं' ख. २. 'स्म जयाय तस्य' ख. ३. दहरविद्या 'दहर उत्तरेभ्यः' इत्यादिसूत्रेषु भगवता व्यासेन निर्णीता.

रुपगम्यताम् । अहमपि भद्रशालाभ्यन्तरे मामेवं सुचिरं प्रतीक्षमाणस्य वयस्यस्य सकाशं गच्छामि ।

(इति निष्क्रान्तौ ।)

**विष्कम्भः[1] ।**

(ततः प्रविशति यथानिर्दिष्टो राजा ।)

**राजा**—(स्मरणमभिनीय ।) हन्त, मया निजकार्यनिर्वर्तनैकचेतसा महदनुचितं कृतम् । यदेष वयस्यो बुभुक्षितव्याघ्रीपरिसरमभिवर्धितो हरिणशाव इव नितान्तपरिकुपिताया देव्याः सविधमार्द्रापराधो गमितः । तत्र कति कति परिभवाननुभूय कथमिव परिखिद्यते वा न जानामि ।

(ततः प्रविशति चित्तशर्मा ।)

**चित्तशर्मा**—हन्त, वयस्योऽयमतिमात्रविद्याविरहतापेन परिभूयते । तथाहि ।

वीक्षानिर्विषया निकाममलसप्रान्ते च कान्ते दृशौ
शश्वत्किंच मितैर्वृतः परिजनैरेकान्तमासेवते ।
नास्था वस्तुषु वल्लभेषु मनसो निष्ठा न कुत्रापि वा
तेजोमात्रससारमूर्तिरधुना जागर्ति जीवो विभुः ॥ ९ ॥

यावदेनमुपसर्पामि । (उपसृत्य ।) विजयतां देवः ।

**राजा**—(दृष्ट्वा सपरितोषम् ।) वयस्य, प्रसन्न इव लक्ष्यसे । किमस्ति कश्चिद्विशेषः ।

**चित्तशर्मा**—अथ किम् ।

**राजा**—कथमिव ।

(चित्तशर्मा किंचिदिवोपसर्पन्निदमित्थमितिवृत्तमखिलमर्थमानुपूर्व्या कथयति ।)

**राजा**—वयस्य, किमत्र देवी संनिदधीत ।

**चित्तशर्मा**—सह परिवारैरुपगतैव ।

(ततः प्रविशति विषयवासनया प्रवृत्त्या च सहाविद्या ।)

**अविद्या**—(सनिर्वेदम् ।) सखि विषयवासने, बहुप्रकारमनुसृतोऽपि

---

१. 'प्रवेशकः' ख.

देवः सर्वथा न यथापुरमस्मासु प्रसीदति । कर्तव्यस्तु समुदाचारः । (इति कतिचित्पदानि गत्वा पुरोऽवलोक्य ।) कथमत्रैव चित्तशर्मणा विविक्तमध्यास्ते देवः । यावदेनमुपसर्पामि । (उपसृत्य ।) विजयतां देवः ।

**राजा**—इत आस्यताम् । (इत्यासनं निर्दिशति ।)

**चित्तशर्मा**—देवि, दिष्ट्या वर्धसे ।

**विषयवासना**—वर्धतां महाराजः ।

(राजा चित्तशर्माणं संज्ञापयति ।)

**चित्तशर्मा**—देव, भवता सह वेदारण्यविहाराय बलवदुत्कण्ठिता देवी । तत्कुतो विलम्बसे ।

**राजा**—यदभिलषितं देव्यै ।

(इति सर्वे उत्तिष्ठन्ति ।)

**देवी**—(स्वगतम् ।) का गतिः ।

**राजा**—कः कोऽत्र भोः ।

(प्रविश्य)

**दौवारिकः**—अहमस्मि ।

**राजा**—संकल्प, वेदारण्यमार्गमादेशय ।

**संकल्पः**—इत इतो देवः ।

(सर्वे वेदारण्यगमनं नाटयन्ति ।)

**राजा**—(वामपार्श्वतः कर्णं दत्त्वा ।) अये चित्तशर्मन्, अत्र केषामपि परस्परालाप इव श्रूयते ।

**चित्तशर्मा**—(स्मरणमभिनीय । किंचिदिवोपसृत्य । जनान्तिकम् ।) वयस्य, 'देव्या हितान्वेषिभिर्मोहादिभिरधर्मार्गे भवत्प्रलोभनाय लोकायतिकादिपाषण्डसिद्धान्ताः संनिवेशिताः' इति वस्तुविचारेण संप्रत्येव मे कथितम् । प्रायस्त एते भवेयुः । (पुरो विलोक्य ।) स एष

असारमेतज्जगदित्यवेत्य तृणादिवत्पश्यति दृश्यजालम् ।
अन्तश्चिरानन्दरसानुभूतिमङ्गैः समुद्यत्पुलकैर्व्यनक्ति ॥ १० ॥

---

१. ख-पुस्तके नोपलभ्यते.

(ततः प्रविशति वस्तुविचारः ।)

**वस्तुविचारः**—आदिष्टोऽस्मि तत्रभवत्या शिवभक्त्या—'वत्स वस्तुविचार, संप्रति जीवराजो वेदारण्यं प्रविविक्षुरिति श्रूयते। तदेनमपथान्निवर्त्य सतैव पथा समानेतुमस्य परिसरोऽधिगन्तव्यः' इति। (पुरो विलोक्य।) स एष जीवराजः। यावदेनमुपसर्पामि। (उपसर्पति।)

(राजा चित्तशर्मणा सह प्रणमति।)

**वस्तुविचारः**—सिद्धसंकल्पौ भूयास्ताम्।

**अविद्या**—(सविषादम्। स्वगतम्।) हन्त, विफलो मे मनोरथः पाषण्डेषु।

(ततः प्रविशन्ति पाषण्डसिद्धान्ताः।)

**लोकायतिकसिद्धान्तः**—

न क्लेशलेशयोगो भागोऽनुपरोध एव सर्वत्र।
इति सति किं न रमन्ते मन्दधियो मामके तन्त्रे ॥ ११ ॥

(इति परिक्रामति।)

**चित्तशर्मा**—(राजानं प्रति।) अत्रायमस्याशयः—'प्रत्यक्षमेव प्रमाणम्, अदृष्टचरं तु नास्त्येव। तथा च।

पृथिव्यापो वह्निः पवन इति सत्याः परममी
तदेषां संघातो भवति वपुरात्मा बहुविधः।
समष्टेस्ताम्बूलादरुणिमवदुन्मीलति मतिः
सुखादिव्यापारैरुपनमति धर्मादि तु मृषा ॥ १२ ॥

अतः।

देशः कालोऽथ जातिः कुलमकुलमियं स्वा परेत्यादिहेतो-
र्वर्ज्यावर्ज्येतिमिथ्याकुहकविरचितां यन्त्रणामन्तरेण।
आद्ये खाद्येऽथ पेयेऽप्यनियमिततया काममापुष्य गात्रं
दृष्ट्वा मिष्टामवाप्य स्मरमदमुदितां भोग एवाभ्युपेयः ॥ १३ ॥

इति।

**चित्तशर्मा**[1]—(सभ्रूभङ्गम्।) वयस्य, लोकायतिकमतमिदमतिरमणीयं

---

१. आदर्शद्वयेऽप्युपलभ्यमानमपि प्रक्षिप्तं प्रतीयते, पूर्वं पात्रान्तरस्यानुपलम्भेन चित्तशर्मण एव प्रक्रान्तत्वात्.

प्रतीयते । यदत्र 'न विधिर्न निषेधो न धर्माधर्मौ नास्ति परलोकः' इत्यादिना प्रत्यक्षसिद्धविषयाभिरतिर्निरातङ्का हि प्रतीयते ।

**अविद्या**—(स्वगतम् । सहर्षम् ।) कथमप्यसदीय एव चित्तशर्मा ।

(राजा सस्मितं वस्तुविचारं पश्यति ।)

**वस्तुविचारः**—(सोद्वेगम् । स्वगतम् ।) प्रमादः प्रमादः । पर्यायेण सत्पथमेनं नयेयम् । (प्रकाशम् ।) किमये चित्तशर्मन्, अनभिज्ञ इवालपसि । वयं किम् 'इदमखिलमस्ति' इत्यवोचाम । 'किमपि नास्ति यत्साक्षात्' इति प्रत्यक्षसिद्धार्थाभिरतिरनातङ्केति ब्रूमहे । शापादिवशादिहार्थान्तरभ्रमेण विशृङ्खलविषयाभिरतिस्तु नरकाय भवति । तथा च तस्य प्रत्यक्षप्रमितार्थसत्यत्ववादोऽप्येतदभिप्रायक एव । 'नास्ति परलोकः' इत्यादीनि च ब्रह्मव्यतिरिक्तस्य सर्वस्याप्यभावोपलक्षकाणि । तस्य देहात्मत्ववादोऽप्यन्नमयकोशस्यात्मोपलक्षकत्वनिबन्धन इति सर्वमद्वैतपर्यवसाय्येव ।

**राजा**—(सशिरःकम्पम् । पुरोऽवलोक्य ।)

परिहितकषायवासाः परिहृतहिंसः समस्तभूतेषु ।
अभ्येति भिक्षुवेषः कच्छविहीनोऽत्र बुद्धसिद्धान्तः ॥ १४ ॥

**बुद्धः**—अहो मन्दमेधसः, स्वानुभवविरुद्धो व्याहारः ।

प्रत्यक्षतो यत्प्रमितं कदापि तदेव सत्यं न ततोऽन्यदस्ति ।
इत्येव बुद्धिर्यदि तर्हि कस्मादपत्यहेतोरबलामुपैति ॥ १५ ॥

**चार्वाकः**—अये बुद्धसिद्धान्त, किमनुमानमपि ते प्रमाणम् ।

**बुद्धः**—कः संदेहः ।

ऊर्ध्वं चाधश्च नानाविधभुवनभिदा नामरूपव्यवस्था-
मुर्व्यामाचक्रवालाद्वनगिरिसरितामर्णवानां च तत्त्वम् ।
ज्योतिश्चक्रोपरागस्थितिगतिसदसद्भाविभोग्यानि येन
प्रत्यक्षं दर्शयेऽहं क इव विवदतामत्र हन्तानुमाने ॥ १६ ॥

अतः ।

प्रत्यक्षमनुमानं च प्रमाणं मे न संशयः ।
अस्ति स्वर्गश्च नरको धर्मोऽधर्मश्च कारणम् ॥ १७ ॥

परं तु परिदृश्यमानमखिलमपि क्षणक्षणविलक्षणतया क्षणिकमेव। पश्य तावत्।

क्षणादूर्ध्वं न तिष्ठन्ति शरीरेन्द्रियबुद्धयः।
दीपार्चिरिव वर्तन्ते स्कन्धाः क्षणविलम्बिनः॥ १८॥
प्रत्यक्षं जायते विश्वं जातं जातं प्रणश्यति।
नष्टं नावर्तते किं तु जायते च पुनः पुनः॥ १९॥

तथा च।

कर्मोत्तेजितवासनाकृतजगज्जन्मप्रवाहो यथा
जालान्तःप्रसृतार्कतेजसि रजःस्तोमस्तथा भासते।
धारावाहिनि बोध एव गलति ज्ञानेन सा वासना
पश्चान्निर्विषयोऽमलश्च स भवन्नात्मापवर्गो मतः॥ २०॥

अत्र 'बाह्यार्थः प्रत्यक्षसिद्धः' इति **वैभाषिको** जग्राह। 'बोधाकारानुमेयो बाह्यार्थः' इति **सौत्रान्तिकः**। 'बुद्धिमात्रमर्थो न कश्चिदपि बाह्यः' इति **योगाचारः**। 'न बुद्धिमात्रमपि शून्यमेव तत्त्वम्' इति **माध्यमिकः**। तदेवं चतुर्मतमेतच्छास्त्रम्।

**चित्तशर्मा**—वयस्य, नियताध्ययनविहितानुष्ठानसंकटमन्तरेण सुगमनिःश्रेयसमिदं सुगतमतमनादरणीयम्।

**वस्तुविचारः**—तदपि श्रूयताम्। अनाद्यविद्यावासनाप्रपञ्चिता विषयसंततिः। स्वरूपज्ञाने प्रतीयते। तदिदमेव संसरणं नाम। तदनु—तत्त्वज्ञानतो वासनाविगलने सति स्वरूपज्ञानस्य निर्विषयोपरागत्वमेवापवर्ग इत्यद्वैतमेवाभिमतमस्य सुगतसिद्धान्तस्यापि। अत एवामुष्य जगन्मिथ्यात्वाभिप्रायः शून्यवादः। क्षणिकतावादस्तु विशेषणीभूततत्तत्क्षणानित्यत्वाभिप्रायकः। स चायमपवर्गः। 'निष्कामकर्मानुष्ठानजन्यचित्तशुद्धिद्वारकं उपनिषदधिगम्यः' इत्येतदाशयमविज्ञाय। शापवशेन निगमपथपरित्यागस्तु नरकाय भवति।

---

१. 'दिश्यमान' ख. २. 'तम' क.

(लोकायतिकसिद्धान्तो विवसनसिद्धान्तं पश्यति ।)

**विवसनसिद्धान्तः**—(सहस्ततालं विहसन् ।) अहो, स्वव्याघातोपहतोऽयमस्योपन्यासः ।

प्रत्यक्षाधिकमप्रमाणमुररीकृत्यानुमानं ततो[1]
गम्यं धर्ममुरीकरोति च ततः स्वर्गादि भोगादि च ।
यत्सत्तत्क्षणिकं ब्रवीति च पुनर्व्याहन्यते स्वं वचः
स्वेनैवास्य न किं जिगीषति कथं बुद्धो मतेनामुना ॥ २१ ॥

**सुगतः**—(साभ्यसूयम् ।) अये नग्नक्षपणकसिद्धान्त, दूरत एव तिष्ठ। स्नातः पूतः संनिधेहि स्वमतमभिधातुम् ।

**विवसनः**—

देहोऽयं मलभाण्डमस्य शुचिता का नाम तीर्थोदकै-
र्देही निर्मल एव तिष्ठति घटस्यान्तः प्रदीपो यथा ।
देहो नान्तरितस्तु संसरति स स्वीयैर्हृतः कर्मभिः
प्रारब्धानुगुणं प्रपद्य च वपुर्भुङ्क्ते सुखं वासुखम् ॥ २२ ॥

**बुद्धः**—अये, किमर्थमावरणं न क्रियते ।

**विवसनः**—

जीवस्यावरणं देहो देहस्यावरणं कुतः ।
यदि तस्यापि कार्यं स्यात्तस्यापीत्यनवस्थितिः ॥ २३ ॥

**बुद्धः**—अये, कथमेतादृशस्य जीवस्य मोक्षः ।

**विवसनः**—शृणु तावत् ।

मयूरपिच्छधारणं मलं च केशलुञ्चनं
महर्षिपूजनानि नग्नता मनस्यनीर्ष्यता ।
अहिंसनं क्षमा दया सदेति मोक्षसाधनैः
शरीरकारि कर्म तत्सवासनं विनश्यति ॥ २४ ॥

---

१. 'प्रत्यक्षाधिकं प्रमा' क-ख.

तथा सति ।

उच्चैर्भूरिमहो निरन्तरमहालोकान्तराणामुप-
　र्यास्ते मोक्षशिला नितान्तमहिता ज्योतिर्मयी शाश्वती ।
तामभ्येति झटित्यसौ तडिदिवोद्गच्छन्वपुर्ध्वंसना-
　त्तत्रायं परमात्मनाथ घटते मोक्षोऽयमर्हन्मतः ॥ २९ ॥

**बुद्धः**—अये, कुतस्तवायमध्यवसायः ।

**विवसनः**—शब्देनानुमानेन च ।

**बुद्धः**—किमयमेव सिद्धपरमेष्ठिपदाभिधेयः परमात्मा तव मते जगत्कर्ता ।

**विवसनः**—नहि नहि । कर्मभिरेव जगन्ति जायन्ते विनश्यन्ति च ।

**वस्तुविचारः**—अस्यापि स्वप्रकाशसंविद्रूपदेहातिरिक्तात्माभ्युपगमेन सिद्धपरमेष्ठिनामकपरमात्माभ्युपगमेन च जीवपराभेदरूपमद्वैतमेवाभिमतमिति रमणीयमेव मतम् । परं त्वेतदभिमताहिंसाक्षमा । दयादिपारम्यानुसंधानतो यज्ञादिकममुष्यानभिमतमिति भ्रान्त्वा शापवशेन निगमपथपरिभ्रेषस्तु पतनाय जायते । अतः 'स्यादस्ति' इत्यादिसप्तभङ्गीप्रतिपादनं जगदनिर्वचनीयत्वतात्पर्यकम् । देहशौचाद्यभावप्रतिपादनं चात्मनः स्वतो निर्मलत्वाभिप्रायकम् ।

**अविद्या**—(जनान्तिकम् ।) सखि विषयवासने, देवोऽयम् 'अवैदिकानि' इति खलु मतान्यमूनि न संमन्यते । वैदिकेषु सोमसिद्धान्तादिषु वा किंचिदभिनिवेश्य यदि सगुणविद्याभिरभिरमेत, तावतापि ननु भवेदस्माकमाश्वासः । तेजस्तिमिरवदद्वैतविद्या किलात्यन्तिकविरोधिनी दृश्यते ।

**राजा**—(पुरो विलोक्य ।) क एष

भस्मलेपशरदभ्रविभ्रमं बिभ्रदुग्रवपुरद्भुतभ्रमः ।
पुण्डरीकधवलाननभ्रमच्चण्डकोकनदचारुलोचनः ॥ ३६ ॥

**चित्तशर्मा**—अयमेव सोमसिद्धान्तो नाम ।

---

१. आदर्शद्वयेऽपि नास्ति.

**सोमसिद्धान्तः**—(सस्मितम्।) हन्त, प्रमाणपथातिवर्तिन एवानेन केनापि केऽपि पदार्थाः प्रतायन्ते। अपि च।

तदागमास्तद्गिर एव वर्ततामतोऽपवर्गोऽस्य यथाकथंचन।
यदैहिकं सौख्यमिदं किमीर्यतामतो भृशं गर्हितमार्हतं मतम्॥ २७॥

(किंचिदन्तर्विमृशन्।) अहो बत मामकमतस्य रमणीयता।

ज्योत्स्नाधौतदिशा निशा परिकरैर्विश्वोत्तरं चत्वरं
मद्यं हृद्यरसं मदालसवधूवक्त्राम्बुजामोदितम्।
आस्वाद्यं तरसं घृतादिसरसं कान्ताकरान्तादिति
स्वर्गं प्राप्य समग्रमत्र परतः प्राप्योऽपवर्गोऽपि यत्॥ २८॥

**विवसनः**—(सभयोद्वेगम्। स्वगतम्।) हन्त, कथमयमन्तक इव चिन्ताविषयोऽपि संतापयति। (प्रकाशम्।) अरे सोमसिद्धान्त, कस्तव मते धर्मः, कथमिव स्वर्गः, क इव चापवर्गः।

**सोमसिद्धान्तः**—अरे, श्रूयताम्।

'प्रत्यग्रप्रहृतक्षरज्झलझलद्रक्तप्रवाहक्षणो
नृत्यन्मर्त्यनवोपहारनिवहैर्मद्यैश्च संप्रीणितः।
सार्वज्ञ्यादिसमग्रदिव्यगुणसंपत्त्या महाभैरवः
सारूप्यं निजमातनोति बलभिद्योग्यं च भाग्यं दिशन्॥ २९॥

सदेहकैवल्यमिदमेव नः परमपुरुषार्थः' इति। स्वर्गस्त्वयमेव, यदत्र समभिलषितसर्वार्थसिद्धिभिरनियन्त्रिताः कामोपभोगा इति।

**वस्तुविचारः**—अये चित्तशर्मन्, एवमेव भेदवादिनः सर्वेऽप्यसदीयसगुणोपासनफलीभूतेषु तत्तदुपासनतरतमतानुगुण्येन सालोक्यसामीप्यसारूप्यरूपेषु पदेषु रममाणास्तदेव परमममृतं मन्यन्ते। तथाहि—जीवाणुत्वनित्यत्ववादिनो 'रामानुजीयाः 'चिराद्दुष्कर्मकर्मकवलितज्ञानानन्दस्वभावतया संसरन्तो जीवा दुःखानुभवनिर्विण्णा भक्त्या प्रपत्त्या वा हरिमाराध्य तत्प्रसादेन विगलत्कर्मबन्धा भगवत्सारूप्यमधिगम्य स्वकीयधर्मज्ञानविकासेन भगवदानन्दमनुभवन्ति' इत्यभिदधते। तथैव प्रत्यक्षादित्रयप्रा-

माण्यजगत्सत्यत्ववादिनो माध्वा अपि 'अविद्यासंकटविघटितज्ञानानन्दस्व-भावास्तत्त्वतो भगवद्भिन्ना जीवाः संसरणदुःखानुभवनिर्विण्णाः सकलाम्नायसमधिगम्यं भगवन्तं भक्त्या समाराध्य तत्प्रसादतः श्रवणमननादिविगलदविद्यावरणतया विशुद्धस्वभावा भगवच्छरीरं भूतादिवदाविश्य नीरक्षीरवदवस्थिताः स्वस्वाधिकारतरतमतानुगुण्येन तदीयैरेवावयवैः स्वस्वजात्यनुगुणान्भोगान्भुञ्जते, स एव च मोक्षः' इत्याचक्षते।

(सोमसिद्धान्तः किमपि किमप्यालपन्पारवश्यमभिनयति।)

**राजा**—(पुरोऽवलोक्य।) अये, किमेतावदस्य वैकृतं कापालिकस्य।

**चित्तशर्मा**—अयं किल महाभैरवपूजावसाने निपीय मद्यमतिमात्रमुन्मस्तकितमदावेशविवशो विलुठति।

**सोमसिद्धान्तः**—(सरभसमुत्थाय विकटताण्डवं नाटयन्परिक्रामन्।) अहो प्रमादः प्रमादः। मदीयः किल परमपुरुषार्थः केनापि दुरात्मना चोरितः। किमितो विधातव्यम्। (पार्श्वतोऽवलोक्य[1]।)

प्रत्यङ्गभासिपरिपाण्डुघनोर्ध्वपुण्ड्रः
पद्माक्षजालतुलसीमणिहारकण्ठः।
भाषास्तुतिं परिपठन्निह पाञ्चरात्र-
सिद्धान्त एष शुचिवेषभृदभ्युपैति॥ ३०॥

(सरभसमुत्सृप्य[2] तान्त्रिकं पाणौ गृह्णन्।) कथमरे, मदपवर्गमचूचुरस्त्वम्।

**तान्त्रिकः**—(श्रवसी कर्णाभ्यां पिधाय।) रामानुज रामानुज, किमहं चोरयामि।

**श्रीवैष्णवः**—सोमसिद्धान्त, यदि प्रमाणतो महाजनानुमतमेव चौर्यमवसितम्, तर्हि किं क्रियेत तत्प्रतिश्रूयताम्। (सर्वान्प्रति।) अहो भवन्तः सर्वे साक्षिणः शृण्वन्तु।

**तान्त्रिकः**—यदि तथा स्यात्तर्हि तव दासो भवेयम्।

**सोमसिद्धान्तः**—तदिदं भवन्तो विमृशन्तु।

---

१. 'विलोक्य' ख. २. 'मुपसृप्य' ख.

**बौद्धादयः**—अरे, कथ्यतामपवर्गस्त्वदीयः।

**तान्त्रिकः**—(कर्णे।) एवमेव।

**बुद्धादयः**—(श्रुत्वा विहस्य।) अये तान्त्रिक, वञ्चितोऽसि पाषण्डकापालिकदास्येन। यतः।

सारूप्यरूपं सविशेषमेतत्सदेहकैवल्यमिदं मदीयम्।
एकीभवन्त्यत्र भवन्त एव स चेत्स राजात्र कलिः प्रमाणम्॥ ३१॥

(ततः प्रविशति कलिः।)

**कलिः**—

बालोऽप्ययं पटुरिति प्रतिबुध्य तत्त्व-
माहूय मामकृत कैः प्रणयैरविद्या।
मह्यं वराय सदृशीं कुहनां स्वकीयां
दत्त्वातनिष्ट सुमहत्किल कौतुकं मे॥ ३२॥

तदस्याः किमिव मया च प्रियमाचरणीयम्। (इति सकौतुकं परिक्रामति।)

**सोमसिद्धान्तः**—राजन्कले, विजयी भव। प्रतिपद्यतामत्र किंचिदिव दण्डनीतिः।

**कलिः**—तत्किं नाम।

**सोमसिद्धान्तः**—तान्त्रिकोऽयं चोरितमदीयपुरुषार्थो मध्यस्थैरध्यवसितप्रमोषश्च प्रतिश्रुतं तु नानुतिष्ठति।

**कलिः**—(जनान्तिकम्।) अये, तान्त्रिकोऽयं वैदिकः श्रूयते। तत्कथमसावभिभावनीयः।

**सोमसिद्धान्तः**—यद्येवं मन्यसे, तर्हि श्रूयताम्—'वयं यथा भैरवागमानुरोधेन वेदप्रामाण्यवादिनो वेदविरुद्धमधुमांसादिनिषेवणाभिर्वेदबाह्यतया पाषण्डेषु गण्यामहे, तद्वदिमेऽपि पाञ्चरात्रागमानुरोधेन वेदप्रामाण्यवादिनो वेदविरुद्धैराचारैः पाषण्डा एव। किं च—द्विविधा इमे तान्त्रिकाः, उदीच्याः केचित्, अपाच्याः परे, इति। तत्र तावदपाच्या नाम पाषण्डाः, ते पशव एव। यतः।

अप्राकृतानकृतकानपहाय वेदां-
स्तत्प्रातिभस्थ्यविनिवेशितनीचभाषाः[1] ।
कर्म त्यजन्ति विहितं विहितेतराणि
निर्माल्यपैतृकमुखानि वितन्वते च ॥ ३३ ॥

हन्त बुद्धेरुपरिप्लवता ।

आचार्यहस्तादधिगम्य चीटीं निबध्य कण्ठे कुणपस्य दग्ध्वा ।
वैकुण्ठवीथ्यां गृहनिश्चयेन नन्दन्ति मूढाः पशवो न किं ते ॥ ३४ ॥

**कलिः**—(स्वगतम् ।) तदहमप्येवमेनं प्रतारयामि । (प्रकाशम् ।) अये, प्रतिश्रुतम् । पाषण्डदास्यमनुतिष्ठ । परया(?) वैकुण्ठे शमलभूमिपरिसरे तव निवेशनाय चीटिकामहं प्राहिणुयाम् ।

**तान्त्रिकः**—(सभयम् ।) राजन्, यद्रोचते भवतस्तदाचरामि । (इति श्रद्धया बद्धाञ्जलिस्तिष्ठति ।)

**कलिः**—(पुरो विलोक्य ।)

उत्तुङ्गद्विपकुम्भकर्कशकुचाभोगा रणन्मेखल-
श्रोणीमण्डलभारमन्थरगतिः कंदर्पदर्पोद्धता ।
उन्मीलन्मदिराविकारविवशव्यालोलतारेक्षणा
स्निग्धालोकनमोहिनी विलसति श्रद्धा पुरस्तामसी ॥ ३५ ॥

(विचिन्त्य ।) महाप्रभावा ह्येषा

शास्त्रं किंन्विदमप्रमाणमिह किं न प्रीयते देवता
सा प्रीता यदि किं कुहापि भुवने दुष्प्रापमेकं भवेत् ।
भोगानत्र बहून्प्रदाय परतः कैवल्यलक्ष्मीप्रदे
सद्यःसिद्धिपदे जनः कुलपथे कस्मान्न संनह्यति ॥ ३६ ॥

इत्यादिनानाविधसाधनबोधनैर्बाधनैरापामरपण्डितमखिलमपि जनमिह कुलपथे महोत्सव इव निबिडयन्ती दक्षिणपथमप्रचारेण वितथमिव कृतवती । अयि श्रद्धे, परिगृह्यतामयं तान्त्रिकः ।

---

1. 'निविवेशित' क.

**श्रद्धा**—तथा । (इति गाढमालिङ्गति ।)

**तान्त्रिकः**—(सुखपारवश्यमभिनयन् ।)

स्वर्गो दिवः किं गलितोऽयमुर्व्यामुर्व्येव किं स्वर्गदशां प्रपन्ना ।
सत्त्वातिरेकक्षरदात्मतत्त्वं विश्वं किमानन्दमयं विधत्ते ॥ ३७ ॥

इति श्रद्धापरवशो दासोऽहम् । (इति साष्टाङ्गं प्रणमति ।)

**राजा**—स्थाने सांप्रतमस्य न्याय्यतया दासत्वम् । अन्यथा ब्राह्मणो दास इति विप्रतिषिद्धमेवैतत् ।

**कलिः**—दिष्ट्यायमप्रयासतः प्रामाणिको दासलाभः ।

**सोमसिद्धान्तः**—राजन्, एवमेव लाभान्तरमपि नः संनमति । (पुरतो निर्दिश्य ।)

तिर्यगतिर्यग्विदलितपरिणतपृथुकारवल्लिभद्राभिः ।
मुद्राभिर्जटिलतनुर्दग्धो माध्वोऽयमापतति ॥ ३८ ॥

**माध्वसिद्धान्तः**—अद्य खलु लवङ्गिकायां घृतशौचप्रायश्चित्ताङ्गमभिनवतीर्थस्वामिपादैः श्रीवैष्णवसमाराधनं क्रियत इति निशम्य श्रीमुष्णतोऽहमागच्छामि । (ऊर्ध्वमवलोक्य ।) तदितो यावत्समयानतिपातमाचार्यस्वामिपादवन्दनमाचरणीयम् । (इति ससंभ्रमं परिक्रामति ।)

**कापालिकः**—(कलिं प्रति ।) राजन्, य एष

अंसे बिभ्रददभ्रदुर्भरभरां घोणीं मधुष्ठीलव-
त्क्षुद्रम्लेच्छमुखालुसंकुलकरः प्रारब्धवायुस्तुतिः ।
अङ्कुरानिव पाप्मनामविरलानङ्गे मषीलाञ्छना-
न्बिभ्रच्चकितो वलीमुख इवोदग्रप्लुतं हिण्डते ॥ ३९ ॥

अयं तावद्दुराचारैस्ततोऽपि वेदबाह्यः ।

**कलिः**—कथमिव ।

**कापालिकः**—

उपवासदिनभ्रान्त्यामप्येष किल दुर्मतिः ।
न जुहोति न दत्ते वा पितृश्राद्धं च मुञ्चति ॥ ४० ॥

१–२. नपुंसकनिर्देश आदर्शद्वयेऽप्युपलभ्यते.

किंच ।

स्नानं सांध्यविधिर्जपोऽथ हवनं स्वाध्यायमाध्याह्निके
　देवाभ्यर्चनमित्यमून्यविकलं कृत्यानि निर्वर्तयन् ।
सद्यःस्नातरजस्वलाकृतपतिश्राद्धेऽमितद्वादशी-
　काष्ठाभ्यन्तर एव पारणमयं कृत्वा चिरान्निर्गतः ॥ ४१ ॥

**कलिः**—हन्त, समग्रो वैदिकाचारो(?) पाषण्डस्य माध्वसिद्धान्तस्य प्रशिष्यतामपि नार्हति । अयं मूढस्तिष्ठतु वराकः । किमनेन ।

**जीवराजः**—सखे चित्तशर्मन्, अमीषां मुखान्यवलोकनीयानि । तदितो वामेतरेणैव पथा मृगयाविनोदिनो वेदारण्यमधिगच्छामः ।

**पाषण्डः**—(अपवार्य । परस्परमुखान्यवलोक्य । सनिर्वेदम् ।) मतान्तरे बलवदभिनिवेशितोऽयमधृष्योऽस्माभिरितो यथागतमपसरामः ।

**अविद्या**—(जनान्तिकम् ।) अयि विषयवासने, दृष्टानि खलु वस्तुविचारदुश्चेष्टितानि पाषण्डेषु । एवमग्रेऽपि शमादिभिरुपनिपत्य यदि किल राजा यमनुरुध्येत, तर्हि सुमहत्किल संकटमापद्येत । तदितो वयमग्रत एव गत्वासूयया संनिधाप्यमानैर्मोहादिभिरस्मदीयैः शमादिप्रचारोपरोधाय निपुणतरं किमपि संनिधातव्यम् ।

**विषयवासना**—साधु चिन्तितं भट्टिन्या ।

**अविद्या**—(प्रकाशम् ।) यावदमी वयमृजुनैव पथा किंचिदग्रतो गच्छामः।[1]

(इति निष्क्रान्ताः सर्वे ।)

इति चतुर्थोऽङ्कः ।

---

पञ्चमोऽङ्कः ।

(ततः प्रविशति सह परिवारैरविद्या ।)*

**अविद्या**—हन्त, तदेवमतिमहति संकटे निपत्य करणीयताविमूढामिह न कोऽपि मामुपसरति ।

---

१. 'ऽवगच्छामः' क.

(पुरोऽवलोक्य ।) हन्त, स्मृतमात्र एव संनिहितः । यदेष

हस्तेनानुपदं प्रियस्य सुहृदो हस्तं समास्फालय-
न्हासोत्तालसमुल्लसत्कलकलः संफुल्लवक्त्राम्बुजः ।
दूरीकृत्य विषाददैन्यजडताचिन्तादिभावानसा-
वुत्साहेन सहात्मजेन वलते हर्षोऽतिमात्रोत्सवः ॥ १० ॥

(ततः प्रविशति हर्षः ।)

**हर्षः**—

वध्यं च वारणपतेर्निदधामि कण्ठे
कुर्वे च रत्नपटलीकनकाभिषेकान् ।
न प्राणतो हि परमस्ति शरीरभाजां
तानप्यहं तृणमिव प्रतिपादयामि ॥ ११ ॥

(इति परिक्रम्य ।) विजयतां देवी । (इति लोभस्य प्रतीपमुपविशति ।)

**विषयवासना**—अये हर्ष, भवदनुजन्मा मदः किं न दृश्यते ।

**हर्षः**—(अग्रतो निर्दिशन् ।) इतो दृश्यताम् ।

आलिङ्गितोऽयमवधीरणया रमण्या
पुत्रैः प्रमादविपदस्सरणैः परीतः ।
दूरीकृतो विनयधर्मविचारगन्धैः
सोऽयं मदो जयति मन्थरदृष्टिपातः ॥ १२ ॥

(ततः प्रविशति मदः ।)

**मदः**—

उन्मीलितालानमुदग्रसत्त्वं मदावलं भूरिमदान्धमेतम् ।
बाले समालम्ब्य बलाद्विकर्षन्निवर्ततेऽयं धुरि निःसरन्तम् ॥ १३ ॥

(इति विकटं परिक्रम्य हर्षोपकण्ठे निषीदति ।)

**प्रवृत्तिः**—भद्गिनि, यथा ह्ययं धर्मातिक्रमादिना कीदृशमप्यसदधीनं करोति, तथैव मानोऽपि महदविनयादिना कमपि मदधीनये देव । तथाह्येष

विगर्हितनमोवाको विनयादिपराङ्मुखः ।
आहो पुरुषिकाप्रेयानायान्मानो मदोच्छ्रितः ॥ १४ ॥

(ततः प्रविशति मानः ।)

**मानः—**

इष्टापूर्तसहस्रलब्धपरमापूर्वातिपूतात्मके
विज्ञानातिशयप्रभूतविभवे विश्वैकवन्द्ये मयि ।
वेष्टन्ते तिलयन्त्रनद्धवृषवत्किं कोऽपि देवालये
वन्दन्ते कृकलासवच्च शिरसः किं न्यञ्चितोदञ्चितैः ॥ १९ ॥

(इति परिक्रम्य ।) विजयतां देवी । (इति क्रोधसमीपमधिवसति ।)

**विषयवासना—**भट्टिनि, लोभमहिम्ना कर्म कुहापि प्रायशो नानुतिष्ठेदेव । कथंचिदनुष्ठितान्यपि परातिसंधानेन विफलयतापि केनचिद्भवितव्यम् ।

**प्रवृत्तिः—**(पुरतो निर्दिश्य ।) सोऽपि संनिहित एव । यदेष

सौवर्णलेपनधगद्धगितांशुजाल-
मापादचूडमयमाभरणं दधानः ।
विष्टब्धमूर्तिरतिधीरगतिः प्रसन्नो
मिथ्याविलासरसिको मिलतीह ड(द)म्भः ॥ १६ ॥

(ततः प्रशिशति ड(द)म्भः ।)

**ड(द)म्भः—**

इन्द्रः कुबेर इति ये महिताः सुरास्ते
बाह्याङ्क(ङ्ग)णं निबिडयन्ति निरन्तरं मे ।
एतेषु मे यदिह किंचिदुदञ्चितभ्रूः
किं किं न सिध्यति जनस्य मदाश्रितस्य ॥ १७ ॥

(इति परिक्रम्य ।) विजयतां देवी । (इति सर्वेषामग्रतस्तिष्ठति ।)

**विषयवासना—**भट्टिनि, तदेतेषां क्रियासिद्धिषु महाप्रभावो मोहः सहकारी ।

(ततः प्रविशति मोहः ।)

(मोहो देवीं प्रणम्य तदन्तिके निषीदति ।)

**प्रवृत्तिः—**भट्टिनि, श्रूयताम् ।

---

१. 'लोभादिमहिम्ना' ख.

ये[1] संसारपथं विचिन्त्य वितथं तत्त्वावमर्शोन्मुखाः
संनह्यन्ति भृशं मनागपि शिशोराकर्णिते क्रन्दिते ।
हित्वा तत्त्वकथामपास्य नियमानुत्प्लुत्य धावन्ति ते
मोहः सोऽयमलङ्घनीयमहिमा केनैष जय्यो भवेत् ॥ १८ ॥

**विषयवासना**—तदेवमपारबलविभवसारेषु निजपरिवारेषु किमसारविषयिणीभिराशङ्काभिरात्मानमाकुलयसि ।

**अविद्या**—भोः कामादयः, श्रूयन्ताम् । निजकुलसमापतितविकटसंकटविघटनाय हितकार्यघटनाय चायमवसरः । अतो मया किंचिदभिधीयते । तदवहितैरेव भवद्भिराचरितव्यम् ।

**कामादयः**—यदाज्ञापयति देवी ।

**अविद्या**—सहजसिद्धविरुद्धस्वभावशमदमादिकृतदुर्बोधनेन मयि विरसीकृतात्मा देवश्चित्तशर्मणा साकमत्र परिसरे निमिषमात्र एव संनिदधीत । ततः पूर्वमेव शिवतद्भक्तिप्रभावैर्युष्माभिरप्रमादमेव निजनिजपरिवारैः सममयमुद्देशः सर्वोऽपि यथा शमदमादीनामीषदुच्छ्वसितुमपि नावकाशः, तथा निबिडयितव्यः ।

[**कामादयः**—]प्राप्तावसरमेव पराक्रमयिष्यामस्तावत्, यदादिशति भट्टिनी । (इति कामादयो निष्क्रामन्ति ।)

(ततः प्रविशति चित्तशर्मणा सह जीवराजः ।)

**राजा**—(पुरोऽवलोक्य ।) कथमत्रैव सपरिवारा देवी ।

(सर्वाः ससंभ्रममुत्तिष्ठन्ति ।)

**प्रवृत्तिः**—देव, कियच्चिरमभूदस्माकमिहागतानाम् ।

**राजा**—चित्तशर्मन्, इतोऽपि कियदन्तरे वेदारण्यभागः ।

**चित्तशर्मा**—ननु प्रविष्ट एव । यदिदानीं

स्फायन्ते पृषदाज्यगन्धिन इमे वाताः क्वचित्कुत्रचि-
त्सर्पिष्मच्चरुशंसिनः क्वचिदपि स्निग्धा वपामोदिनः ।

1. 'आसंसारपथं' क.

एते चानुपदं पयोदपटलीसौहित्यनाडिंधमा
　धूमा व्योमपथं तरन्ति मखभुक्संचारनिःश्रेणिकाः ॥ १९ ॥

अपि चात्र

प्रक्रीडच्छुकसारिकादिपटलीशश्वत्समाश्रावित-
　प्रत्याश्रावितमुह्यदृत्विगपथप्रक्रान्तिसंदेहतः ।
एते जाग्रति साग्रहाः सुमतयः सभ्याः समं यज्वभि-
　र्वैदुष्यप्रथनाय वागवसरौचित्यप्रतीक्षाकुतः ॥ २० ॥

यावदिह प्रविश्य चक्षुषी विनोदयामः । (इति सर्वे तथा कुर्वन्ति ।)

**राजा**—(समन्तादवलोक्य । सानन्दम् ।)

विहितेष्टयो मतिमतां पर्वसु काम्यक्रिया एताः ।
प्रमदा इव खलु रमयन्त्यक्षय्याः पूर्वसंपदुल्लसिताः ॥ २१ ॥

अपि च ।

विहरति विस्मयनीया कुहचन सौत्रामणीलक्ष्मीः ।
संपूर्णसोममुख्यस्फीतरसाश्च क्रियाः क्वचिद्भान्ति ॥ २२ ॥

(विमृश्य ।)

कमलोल्लासिपदानां कमनीयविचित्रभूरिभोग्यानाम् ।
आसां कामपरिस्फुरदमृतं मुखमातनोति सुखम् ॥ २३ ॥

**विषयवासना**—(जनान्तिकम् ।) सखि प्रवृत्ते, काम्यक्रियाणामासां निर्वर्णनेन तत्फलप्रशंसया च कामाविष्ट इव दृश्यते देवः ।

**प्रवृत्तिः**—ननु महाप्रभावः कामः ।

**चित्तशर्मा**—(स्वगतम् ।) हन्त प्रमादः । दुरात्मना कामेनाभिभूयमानः सव्याजमन्यतोऽवकर्षणीयो देवः । (प्रकाशम् ।) पदान्तर एव परिणतफलागममिमं प्रदेशमासाद्य विश्रमसुखमनुभूयतां देवेन ।

**राजा**—तथा । (इति किंचिदन्यतो गत्वा परतो निर्दिश्य ।)

शस्त्रस्तोत्रमयीर्गिरः श्रुतिपुटीसौहित्यनाडिंधमा
　वैतानानिह पावकान्कृतझरीकिंजल्किताग्रानपि ।

अङ्गान्युत्पुलकानि मे विदधतः पूतांश्च व्रातानिमा-
न्हातुं न प्रभवामि पावनहविर्गन्धानुबन्धानपि ॥ २४ ॥

**अविद्या**—सखि विषयवासने, लब्धापरित्यागाभिलाषस्वभावेन लोभेनापि वशीकृत इव देवः। यदयमिमान्विषयान्न परित्यक्तुमुत्सहते ।

**चित्तशर्मा**—(स्वगतम् ।) आः किमिह लब्धप्रसरो लोभहतकोऽपि । भवतु । निवारयाम्येनमितोऽपि गुणवद्विषयान्तरप्रदर्शनेन । (प्रकाशम् ।) वयस्य, किंचिदत्र परभागे दीयतां दृष्टिः ।

**राजा**—(विलोक्य । साश्चर्यम् ।)

तडिज्जटिलिता दिशस्तरणिकोटिभिर्भास्यते
नभःस्थलमुपस्थितैरनुपमैश्च तौर्यत्रिकैः ।
मनोऽपि च विनोद्यते मधुसुधाझरीमाधुरी-
निरन्तरधुरंधरैर्निखिलदुर्लभैः सौरभैः ॥ २५ ॥

वयस्य, किमेतद्विमृश्यताम् ।

(चित्तशर्मा संकल्पं पश्यति ।)

**संकल्पः**—(विचार्य ।) देव, काम्योपासनाः संघीभूय भवदनुजिघृक्षया संनिदधते ।

(ततः प्रविशन्ति काम्योपासनाः ।)

**काम्योपासनाः**—विजयतां देवः ।

**राजा**—

बृहस्पतिर्मे स कियान्वचःक्रमे दिवस्पतिर्वा विभवेषु मे कियान् ।
इमा दुरापास्तपसापि भूयसा यदाविरासन्ननुपाध्युपासनाः ॥ २६ ॥

(इति स्तब्धोरस्तटमविनीतस्तिष्ठति ।)

**चित्तशर्मा**—(स्वगतम् ।)

विनीतोऽयं विभुर्हन्त वितनोति विकत्थनाम् ।
महतामपि दुष्टात्मा मानो हि दुरतिक्रमः ॥ २७ ॥

(प्रकाशम् ।) वयस्य, सविनयादरमिमा महोपासना यथोचितमर्हणीयाः ।

**राजा**—तथा । (इति सभयं परावृत्य सप्रश्रयादरमभ्युद्गमं नाटयन्यथोचितं संभावयति ।)

**संकल्पः**—(पुरतो निर्दिश्य ।)

इष्टाङ्गलक्षितरतिक्रमशोभितैषा
श्रृङ्गारिणी विजयते धुरि वामदेव्या ।
आयुः सुदीर्घमभिनन्द्यगुणान्कुमारा-
न्हृद्यां च कीर्तिमियमातनुते हि विद्या ॥ २८ ॥

**चित्तशर्मा**—उपपद्यत एव । ऋत्वङ्गभूतहिंकारप्रस्तावोद्गीथप्रतिहारनिधनेषु योषिदुपमन्त्रणसहशयनाद्यभेदप्रतिपत्तिरूपेयम[1]ङ्गावबद्धोपासना बहुफलो कल्पलतेव कस्य वा मनो न हरति ।

(राजा सरोमाञ्चविकसितकपोलं चित्तशर्मणो हस्तमास्फालयति ।)

**विषयवासना**—किमिहापूर्वार्थसंदर्शनजनितचित्तविस्तारात्मको हर्षोऽपि । दिष्ट्या दिष्ट्या ।

**चित्तशर्मा**—(स्वगतम् ।) हन्त, हर्षेण महताविष्टो वयस्यः । यदि किलैतत्प्रतिनियतवृत्तिरत्र मदोऽपि संनिदधीत, ततोऽति हि नाम संकटमापद्येत । तदिममन्यतोमुखयितुमेवं ब्रवीमि । (प्रकाशम् ।) वयस्य, पार्श्वतो दीयतां दृष्टिः ।

(राजाश्रुतिमभिनयन्गजमीलनानि करोति ।)

**विषयवासना**—पुष्कलोऽयमस्मि[2]न्मदावेशः ।

**चित्तशर्मा**—(आत्मगतम् ।) आः प्रमादः प्रमादः । कथमेनमितोऽहमभिमतमुद्देशं गमयेयम् । (संकल्पमवलोक्य संकेतयते ।)

**संकल्पः**—देव, महदत्र किंचिदक्षिसौभाग्यम् ।

**राजा**—किमिव ।

**संकल्पः**—

रचितरुचिरशोभा ऋग्यजुःसामपुष्पै-
र्द्रुतनिगमरसौघप्रस्फुरद्दिव्यरूपा ।
सदमृतवसुरुद्रादित्यसाम्राज्यदात्री
विलसति मधुविद्या वीतदोषा तदेषा ॥ २९ ॥

१. '३।३।२' वेदान्ताधिकरणे व्याख्याता. २. 'मसून्मदा' ख.

**चित्तशर्मा**—(स्मरणमभिनीय ।) श्रूयते हि—दिव्यमधुमूर्तेरादित्यस्यान्तराम्नायरसरूपममृतमग्न्यादिमुखेन वस्वादयो देवा दृष्ट्वैवाभिनन्दन्ति तदेव रूपं प्रतिपद्यन्ते, तत एव चोद्यन्ति, यस्तावदेतदमृतमेवं वेद स वस्वाद्यन्यतमो भूत्वा तत्साम्राज्यमविनाशित्वमपि पर्येति ।

**राजा**—(स्वरूपमहिमफलान्यनुसंधानसौवर्गसुखचिन्तां नाटयन् ।)

नेदीयःसुरदीर्घिकातिशिशिरे कल्पद्रुपुष्पोत्करैः
स्फारामोदिनि मारुते विवलति प्रासादशृङ्गोदरे ।
पुंभावालसभव्यदिव्यमहिलाबिम्बाधरास्वादने
तत्तादृक्सुखवैखरी शिव शिव प्राप्येत वै जात्वपि ॥ ३० ॥

(इति मुह्यति ।)

**विषयवासना**—भट्टिनि, मधुविद्यायां भजति व्यामोहमेष नो देवः ।

**अविद्या**—केनैष लङ्घनीयप्रसरः समये महामोहः ।

**चित्तशर्मा**—(स्वगतम् ।) हन्त, नितान्तमभिभूयते वयस्यो मोहेन । (प्रकाशम् ।) देव बुध्यस्व बुध्यस्व । धीरः खल्वसि ।

(राजा प्रतिबुध्यते ।)

**चित्तशर्मा**—

स्मृतिमात्रतोऽपि यस्याः कमपि विकारं प्रपद्यते देही ।
आसादिता यदि हि सा मदयति कं वाविवेकिनं नैषा ॥ ३१ ॥

**राजा**—(श्रुत्वा । सप्रत्यभिज्ञम् ।) नैषा विवेकाद्यभिमता विद्या । अत एव किल 'अविवेकिनमेषा मदयति' इति चित्तशर्मणा सव्याजमभिहितम् । (प्रकाशम् । पुरतो विलोक्य ।) संकल्प, कैषा महाभागा ।

**चित्तशर्मा**—(स्वगतम् ।) हन्त, विवेकादिस्मृतिमात्र एव प्रकृतिमासादितो वयस्यः ।

**संकल्पः**—

कमपि हृदि दधाना कान्तरूपं महान्तं
तदुपरि निदधाना भावभेदानशेषान् ।

---

१. 'प्रतिपद्यते' क-ख.

इयमपहतपाप्मा सत्यसंकल्पकामा
जयति दहरविद्या सद्गुणैः श्लाघनीया ॥ ३२ ॥

**राजा**—(स्वगतं सगौरवं सादरं च ।) पदमात्रान्तरैव खल्वियमात्मविद्यायाः, यदपहतपाप्मत्वादिकतिपयगुणारोप एव विशेषः ।

**चित्तशर्मा**—(जनान्तिकम् ।) वयस्य, तदस्या दहरविद्यायाः पदान्तर एव तत्रभवत्या शिवभक्त्या निरतिशयनिजप्रभावेण भवदभिलषितपरमानन्दकन्दली विद्यापि भवदक्षिपथैकगोचरतयानुप्रवेशिता स्यात् । तत्र सावधानं दीयतां दृष्टिः । यतो महामोहादयस्तदपवारणाय संनह्यन्ति ।

**राजा**—(निभृतं निरूप्य । विद्यामुपलभ्य । स्वगतम् ।) हन्त, सैवेयं नयनानन्दचन्द्रिका । (जनान्तिकम् ।) वयस्य, किं ब्रवीमि । पुरा किल

एषा चित्रगता मनो हृतवती सौन्दर्यसारोद्भवै-
रानन्दैरतिमोहिनीं किल दशामातन्वती कामपि ।
स्यादेतत्करशिल्पमुच्छ्रितमिदं चित्रं किलेत्यास्थितं
तत्तस्याः करशिल्पमल्पितवती सैषातिहृद्याकृतिः ॥ ३३ ॥

(चक्षुषी निमील्य । संमोहं नाटयन् । प्रकाशम् ।)

अङ्गेनैव किमर्चिरादिभिरहं नीतोऽस्मि धातुः पदं
किं वा मत्सुकृतैरसावियमिमौ लोकौ विपर्यासितौ ।
हन्तैतन्मुखचन्द्रमःप्रतिगुणादुत्कूलितेयं व्यथा-
दात्मानन्दसुधासमुद्रलहरी विश्वं किमेकार्णवम् ॥ ३४ ॥

अपि च ।

सुषुप्तिर्वा चित्साक्षिकहृदयविश्रान्तिलसिता
मदो वा मोहो वा घनसुखमयः कोऽप्यभिनवः ।
निरुन्धानो बाह्यं करणपटलं निह्नुतजग-
त्प्रकारः कोऽप्यन्तः प्रसरति विकारो मनसि मे ॥ ३५ ॥

(इति स्तम्भं नाटयति ।)

---

१. १।३।५ वेदान्ताधिकरणे व्याख्याता. २. 'यतो मोहा' क. ३. ब्रह्मणः. ४. 'प्यभिनयः' ख.

**विषयवासना**—(जनान्तिकम् ।) भट्टिनि, दिष्ट्या फलितस्ते[1] ननु म-नोरथः । यदयमासामुपासनानां प्रभावविलसितैरतिमात्रपर्युत्सुकितः प्रमोद-भरविकसितवदनारविन्दश्रिरेण परवानास्ते । पश्य तावत् ।

प्रावृषि नीपद्रुम इव परितः स्तबकैरुदग्रकुड्मलितैः ।
अङ्गैरविरलपुलकैराविष्कृतसत्त्वविक्रियैर्लसति ॥ ३६ ॥

**अविद्या**—अपि विषयवासने, देवस्य विकारोऽयमुपासनासक्तिनि-बन्धन इति मनो मम न प्रत्येति । यदिह मद्विषयकप्रणयगौरवगन्धोऽपि नोपलभ्यते ।

**विषयवासना**—किमन्यदित्याह कारणं संभाव्यते ।

**राजा**—(सोन्मादम् ।)

मधुलहरीनयनपथे मम मिलिता कापि विद्येति ।
दृष्ट्वाभिनन्दिता सा तन्मयमास्ते जगत्समस्तमिदम् ॥ ३७ ॥

**अविद्या**—विषयवासने, श्रुतं खलु देवस्य । विद्यानुरागसंमोहपल्ल-वितमेतत् ।

**विषयवासना**—फलितमिव ते संदेहेन । भवतु । भूयोऽपि विमृ-शामः ।

**चित्तशर्मा**—(स्वगतम् ।) हन्त, प्रमादः प्रमादः । तदिदमस्य विद्या-रतिपारवश्यविजृम्भितं वयस्यस्य । जल्पितमेवमन्यथयामि । (प्रकाशम् ।) देवि, दिष्ट्या बलवदुपासनासक्तहृदयो देवः । अतः किल 'मधुलहरी, दृ-ष्ट्वाभिनन्दिता'इत्यादि मधुविद्यास्वरूपगन्धिनी वागस्य प्रसृता ।

**विषयवासना**—भट्टिनि, विमर्शविषय एवायमस्य विकारः ।

**अविद्या**—कामं विमृश्यताम् । मम तु न संदेहः । विद्यानुरागोन्मा-दविजृम्भितमेवैतत् । हन्त, बहिःप्रवृत्त्युपलम्भाय प्रहिता किमद्याप्यसूया चिरयति ।

---

१. 'स्ते मनो' क.

(ततः प्रविशत्यसूया ।)

(असूया राजानं प्रणम्य देव्याः समीपे निषीदति ।)

**देवी**—(अपवार्य ।) अये असूये, काम्योपासनादर्शनप्रकरणे किमपि पर्युत्सुकितः स्तब्ध इव दृश्यते देवः । तत्किमत्र कारणं भवेत् ।

**असूया**—देवि, तदिदमेव वक्तुकामागतास्मि ।

**प्रवृत्तिः**—कथमिव ।

**असूया**—'तत्रभवती शिवभक्तिरेतास्वेवोपासनासु विद्यामपि राजमात्रदृश्यामनुप्रवेशितवती' इति ततस्ततः संचरन्त्या मया श्रुतमभूत् ।

**प्रवृत्तिः**—युज्यते हि तादृशीषु तादृशो महान्प्रभावः ।

**अविद्या**—(स्वगतम् ।) हन्त, किमिदमापतितम् । अभिमतसिद्धये यतमानायास्तत्प्रतीपमुपनमितं दैवेन । तदितोऽपकृष्य विषयान्तरप्रदर्शनेन देवो विनोदयितव्यः । (प्रकाशम् ।) महाराज, स्थिरप्रणयेन भवता निकाममभिनन्दितास्मि । किमतः परं मम प्रियमस्ति ।

**चित्तशर्मा**—(जनान्तिकम् ।) हन्त, तदुक्तिरेव तदनर्थनिदर्शनतया प्रवृत्ता । भवतु । एवमेव ।

**अविद्या**—तदग्रतो गच्छामि । सुचिरमिह परिभ्रमणपरिश्रान्तमात्मानमवस्थापयितुं न पारयामि । (राजानं चिरं निर्वर्ण्य ।)

मामेवं विविधोपभोगललितामुत्सृज्य किं ऌप्स्यते
भूयः प्रागिव सा दशा परिणमेदात्मावशेषीकृता ।
वेक्ष्यन्ते करणान्यमूनि तु परं किं तत्र पश्यन्मुखं
साकूतस्मितकेलिलोलनयनं बिम्बाधरं पास्यसि ॥ ३८ ॥

किं च ।

न वात्र रूपं न रसो न गन्धो न स्पर्शनं वा सुखहेतुरस्ति ।
भवानहो कं गुणमाकलय्य विद्येति संमुह्यति वा न जाने ॥ ३९ ॥

(इति सकोपा सपरिवारा गन्तुमिच्छति ।)

**राजा**—(सभ्रूभङ्गम् ।) किमये चित्तशर्मन्, विद्यामधुकृतं ममोन्मादमियदतिभूमिं गतमुपेक्षितवानसि । अतः किलैवमकाण्डे दुर्मनायते देवी ।

---

१. आदर्शद्वयेऽपि नोपलभ्यते. २. 'पच्यन्ते' ख.

**चित्तशर्मा**—यदर्थोऽयमारम्भः । अथवा ।

मोहस्य किल संवेगः केनापि न निवार्यते ।
कोऽनुरुन्धीत वा वेगं नीचप्रवणपाथसाम् ॥ ४० ॥

**राजा**—(स्वगतम् ।) सम्यगनुशासितोऽस्मि कामादिप्रवणोऽहं 'नीचप्रवण' इति वयस्यस्य संबोधनेन ।

**अविद्या**—अलमलममीभिरसारोपचारैः । (इति सकोपं सपरिवारा निष्क्रामति ।)

**उपासना**—हन्त, बलवता विषयान्तरेण विफलीकृतो नः संरम्भः । (इति समन्दाक्षं तिरोधत्ते ।)

(सहैव ताभिर्विद्यापि ।)

**राजा**—सखे चित्तशर्मन्, भवतु । यथाकथंचिदखिलमपि समये कथमपि समाधीयते । दुर्लभं तु लब्धमेव । तदितः परमविलम्बितमेव कार्यसिद्धौ व्यापर्तव्यमस्माभिः ।

(इति निष्क्रान्ताः सर्वे ।)

इति पञ्चमोऽङ्कः ।

---

षष्ठोऽङ्कः ।

(ततः प्रविशति चित्तशर्मा ।)

**चित्तशर्मा**—अद्य खलु दहरोपासनादिभिः सह विद्यादर्शनप्रभृति निकाममस्वस्थहृदयो महाराजः । तथा हि ।

विश्लेषव्यथया चिरेण हृदयानुस्यूतया कर्शितो
निश्वासेन घनोष्मणा मलिनयन्नोष्ठं निसर्गारुणम् ।
प्रम्लायन्मुखपङ्कजो न भजते निर्वेशलेशं मना-
गन्तः कोटरलग्नपावक इव श्रीखण्डशाखी चिरात् ॥ १ ॥

एवमेव महाराजदर्शनप्रभृति सा विद्यापि नितान्तदुःसहेन विरहसंतापेन परिभूयत इति बहुधा श्रूयते । तथा हि ।

नैदाघोष्मनिमीलदुत्पलदलच्छायामुषी चक्षुषी
ज्योत्स्नाहीनशरत्सुधाकरसखं वीतप्रसादं मुखम् ।

उद्भूतप्रसवेव लोध्रलतिका धत्ते तनुः पाण्डुता-
मङ्गैरेवमनङ्गतन्त्रललितैरास्ते विनिद्रा चिरम् ॥ २ ॥

अपि च ।

आलीभिः किल शायिता मरकतस्निग्धे नलिन्या दले
पाथोबिन्दुरिव प्रकामतरला बालाधिकं म्लायति ।
सिक्ताश्चन्दनबिन्दवश्चुरुचुरायन्ते स्तनाभोगयो-
र्मुक्ता भान्ति च सुभ्रुवः स्तबकयोः सक्ता मिलिन्दा इव ॥३॥

अतो न विलम्बसहा दशेयमस्या इति करुणया मैत्रीमुखादभिधाय प्रेषितम् । तदनयोरितरेतरप्ररोचनविषये यत्नो न विधेय एव । परं त्वसूयाभिहितवृत्तान्तश्रवणप्रभृति नितान्तपरिकुपिता तावदविद्या कथमिव समाधेया स्यात् । (विचिन्त्य ।) हन्त, लब्धोऽयमुपायः । तदेवं समाधास्ये । (अग्रतोऽवलोक्य ।) कथमसूया ।

(ततः प्रविशत्यसूया ।)

**असूया**—प्रेषितास्मि देव्याहमविद्यया चित्तशर्माणमभिधातुम् । तमहं क्व पश्यामि । (पुरतोऽवलोक्य ।) दिष्ट्या सोऽयमित एवाभिवर्तते चित्तशर्मा । यावदेनमुपसर्पामि । (उपसृत्य ।) आर्य, देवी समाज्ञापयति—'वयस्य, तदेवं देवो मयि विमुखतां प्रतिपद्यमानो विमतासक्त एव ननु शाठ्यमवलम्बते । भवतापि न खलु कश्चिदिहोपायश्चिन्त्यते' इति ।

**चित्तशर्मा**—अये, मद्वचनादुच्यतां देवी ।

**असूया**—किमिति ।

**चित्तशर्मा**—प्रकृतिकोपनायास्तव निकामकार्कश्येन वैरस्यमुपलभ्य निर्विण्णः स्वयमपि राजा 'बृहदारण्यपरिसरे कुत्रापि शिवक्षेत्रादिषु तापसैः सह चिरं निवत्स्यामि' इति चिन्तयन्नास्ते । त्वं पुनरेवं मामुपालभसे । किमहं करोमि । भवतु । क्रियतामेवम् । 'त्वया कंचित्कालं सह परिवारेण कोपागारमनुप्रविश्य स्थीयताम् । राजैव यदि प्रसादनाय कदाचिदागच्छेत्तदापि सरलतया झटिति प्रसादो न करणीयः । तदुपरि सकलमहमेव समीकरिष्यामि' इति ।

**असूया**—यदाज्ञापयत्यार्यः । (इति निष्क्रान्ता ।)

**चित्तशर्मा**—यावदहमपि विजने शृङ्गारवने मदनपर्याकुलस्य सवयसो महाराजस्य परिसरवर्ती भवामि । (इति निष्क्रान्तः ।)

प्रवेशकः ।

---

(ततः प्रविशति क्रोधागारं सपरिवारा देवी ।)

**देवी**—सखि विषयवासने, कियदनुसृतोऽपि देवो मयि विरसहृदय[1] एव । तथा हि ।

यातं तत्प्रणयानुबन्धि गरिमस्फीतं मयि प्रेक्षणं
पृष्टं चेत्प्रतिवक्ति किंचन परासक्तं विकर्षन्मनः ।
अभ्याशागतमुत्तमर्णमिव मामभ्यागतामीक्षते
चेतः कृन्तति नीरसानुलपनैर्बाह्योपचारैरपि ॥ ४ ॥

प्रत्युत 'तापसाधिष्ठितेष्वरण्येषु तपश्चरामि' इति वदति । किमत्र कर्तव्यम् ।

**विषयवासना**—देवि, मा भैषीः । यतश्चित्तशर्मायमस्माकमनुकूलस्तिष्ठति ।

**देवी**—(विचिन्त्य ।) 'तेषु तेषु सिद्धक्षेत्रेषु तपश्चरणाय गते राजनि परा शिवभक्तिरुपेत्य कदाचित्तया सह संघट्टनाय यत्नं करिष्यति' इति चिन्तातरलितं मम हृदयम् ।

**विषयवासना**—सखि, तत्रापि किंचित्प्रतिविधानमध्यवसितमस्ति ।

**देवी**—कथमिव ।

**विषयवासना**—

भवदनभिमताया देवि तस्यास्तु भक्ते-
रनभिमतविधाना तामसी राजसी च ।
प्रचरति शिवभक्तिस्ते ममाप्यन्तरङ्गे
झटिति विघटयिष्ये तन्मुखात्तत्प्रयत्नम् ॥ ५ ॥

---

१. 'विशस' क.

तदेनयोः समुत्साहनाय समये राजसंमुखीकरणाय च सद्य एव विसृज्यतामसूया ।

**देवी**—सम्यगुचितमेव चिन्तितम् । असूये, सपदि वेदारण्यमधिगम्य तत्र विनयेन तामसराजसशिवभक्तयोः सविधमुपसृत्य मद्वचनाद्ब्रूहि—'यदि खलु तत्र जीवराजः समागच्छति तमभिमुखीकृत्य भवद्भिर्धेयेषु काम्यक्रियोपासनादिष्वेव संनहनीयः' इति ।

**असूया**—यदादिशति भट्टिनी । (इति निष्क्रामति ।)

**देवी**—विषयवासने, तदितः परमानुकूल्यमुपागत एव महाराजः ।

(ततः प्रविशति चित्तशर्मणा सह राजा ।)

**राजा**—सखे चित्तशर्मन्, अपि नाम मया प्रसादितापि देवी मामवधीर्य कोपागार एव निवसेत् ।

**चित्तशर्मा**—कः संदेहः । दुष्परिहरतया तथातिभूमिं गमितो हि मया तदीयकोपः । यथा स्वामिकार्यमनन्तरायमेव संपद्येत ।

**राजा**—भवतु । यावदेनामुपसर्पामि । (उपसर्पति ।)

(देवी राजानमवलोक्य मुखं परावर्त्य[1] तिष्ठति ।)

**राजा**—

विसृज सुतनु मौनं विस्मरेदं व्यलीकं
　प्रणयिषु ननु कोपः पद्मपत्रोदबिन्दुः ।
अधर इव किमेतद्रागमभ्येति चक्षु-
　र्गमय हृदयमेनं गाहमाना सुखानि ॥ ६ ॥

**देवी**—सखि विषयवासने,

किमेतैरायासैर्व्रजतु स यथेष्टं मम किल
　स्वभावोऽयं कीदृक्प्रणयपदभूतेऽपि विषये ।
मनाग्दृष्टे शाठ्ये मधुनि विषसंपृक्त इव मे
　क्षणध्वस्तप्रेम प्रसरति पुनर्जातु न मनः ॥ ७ ॥

---

१. 'परावृत्य' क.

**राजा**—हन्त, कियदनुनीतापि प्रेयसी न प्रकृतिमापद्यते।

(देवी तमनालोकयन्त्येव सभ्रुकुटि चित्तशर्माणं पश्यति।)

**चित्तशर्मा**—(साकूतम्।) देवि, प्रसीद प्रसीद। भवदधीन एव राजा। ननु चिराय निर्विद्यते।

**राजा**—हन्त, कियदनुसृतापि नितान्तविमुखी मामवधीरयत्येव। तदहमितःपरमरण्येषु कुहचिदाश्रमेषु तापसैः सह निवृत्त्युन्मुख एव तपश्चरेयम्। (इति सकोपाटोपं परावृत्य गच्छति।)

(चित्तशर्मा देवीं संज्ञाप्य राजानमनुसरति।)

**देवी**—अयि प्रवृत्ते, वयमपि तदनालक्षिता एव राजानमनुसरामः।

**प्रवृत्तिः**—उचितमाह देवी।

**राजा**—कः कोऽत्र भोः।

(प्रविश्य।)

**दौवारिकः**—अयमस्मि।

**राजा**—संकल्प, वेदारण्यमार्गमादेशय।

**संकल्पः**—इत इतो देवे[1]।

(सर्वे वेदारण्यगमनं नाटयन्ति।)

**राजा**—(जनान्तिकम्।)

सत्यं नैव सुखं कदाचिदनया जायेत न प्रत्युत
प्रत्यूहः प्रकृतस्य सांप्रतमसावुच्चैस्तरश्रेयसः।
त्यक्तव्या महती रुजेव बहुना यत्नेन दैवादसा-
वस्मानुत्सृजति स्वयं यदि ननु ध्वस्तानि दुःखानि नः॥ ८॥

**चित्तशर्मा**—वयस्य, तदेतत्प्रकरणं च भवदाश्रयं च विज्ञानतयेव मया कृतमेवंसंविधानम्।

**राजा**—सखे चित्तशर्मन्, अयि नाम हृदयानन्दचन्द्रिकप्रियतमा मयात्र समधिगम्येत।

---

१. 'देवः' क-ख.

**चित्तशर्मा**—कः संदेहः । अघटितघटनापटीयसि भवदभ्युदयैकताने मयि तव सचिवे जाग्रति किमिव नाधिगम्येत । शृणु तावत् ।

संदिश्ये यदि वत्सलेन भवता कार्येषु केष्वप्यहं
　कुर्यामेव हि मन्दरस्य शिखया मेरोः शिखाग्रन्थनम् ।
तैलं पाणितले निघृष्य सिकता निष्यन्दयेयं क्षणा-
　त्कान्तासंघटनं मिथः सरसतासंपादनं मे कियत् ॥ ९ ॥

**राजा**—सखे, त्वयि सर्वमुपपद्यत एव । (स्मरणमभिनीय ।)

निर्व्याजोपनमद्दयासरलया भक्त्या किमप्यद्भुतं
　कन्यारत्नमदर्शि तत्तडिदिवाकाशे विलिल्ये पुनः ।
किं नु स्वप्नविशेष एष मनसः कश्चिद्विकारोऽथवा
　तत्त्वं तस्य न वेद्मि तत्परिणये पुष्णाति तृष्णां मनः ॥ १० ॥

अपि च ।

चित्रेणापहृतं तदाकृतिमता चित्तं ममार्धं सखे
　भूयः सा मम भाग्यतो नयनयोः पन्थानमासादिता ।
निःशेषं तदपाहरद्विधुमुखी सर्वैः सहैवेन्द्रियैः
　प्राणा एव लुठन्ति केवलमिमे गात्रेषु मे संदिताः ॥ ११ ॥

सखे चित्तशर्मन्, अपि नाम तदेनामधिकृत्य समवकर्णिता कापि वार्ता ।

**चित्तशर्मा**—अथ किम् ।

**राजा**—वयस्य, कथय कथय ।

**चित्तशर्मा**—अद्य किल तत्रभवत्या प्रहिता मुदिता मामुपेत्य तद्वचनादभिहितवती । यथा किल—'अये चित्तशर्मन्, जीवराजस्य विद्याभिलाषजनितविरहसंतापातिशयः सत्सङ्गेन यथावदिहाभिमतः । श्रुत एव खलु भवता मैत्रीमुखेन जीवराजविरहखेदपरिभवो विद्याया अपि । तदेवमुभयानुरागे परां कोटिमधिरोहति कार्यस्य विलम्बनमनुचितमेव । अतः कथमपि जीवराजो वेदारण्यपरभागमचिरेणैव प्रापणीयः । अहमपि तदागमनसमनन्तरमेव कार्यस्य सिद्धये कृतसंधाना भवामि । अन्यदपि किंचि-

दिह कार्यमावश्यकमभिधीयते। तदवहितेन श्रोतव्यम्—अत्र तावदस्मदनभिमताचारे तामसी राजसी च शिवभक्ती निकाममोजायेते। तयोस्तावदेवं हृदयम्—'आवयोरिह जाग्रत्योरविद्याया नियोगमतिवर्तेत को नाम, स तावदत्र यदि विधिविहितान्यनुरुन्धीत तर्हि कामनामनुप्रवेश्य तमविद्याविधेयं कुर्वहे, यदि खलु नानुरुन्धीत तर्हि तत्प्रत्यवाय एव तमभिहत्य मोहादिवशे कुर्यात्, ईश्वरोऽपि किमत्र कुर्वीत' इति। अतः

नह्येतामिह ते नृपं सुखरुचीरुत्पाद्य पर्यायतः
कर्मोपासनजालकेऽतिगहने नैतत्पराणुद्यताम्।
देवस्यैव हि शासनानि विधयो नामाविलङ्घ्या हि ते
भक्तयोः किं तु तयोर्मनागभिमतावाप्तिर्न संपाद्यताम्॥ १२॥

तदर्थमेवं करोतु वयस्यः। यथा—

विलासेष्वासक्तिं विदधदपि तद्भोगविमुखो
निरुद्धः कामिन्या निपुणरसिकः श्रोत्रिय इव।
भजत्वत्रासक्तिं फलमनभिसंधाय चरितै-
रिदं यावद्विद्याधिगममुपदेशोऽस्य भवतु॥ १३॥

अतो यावदहं निवृत्त्या सममीश्वरस्य दौवारिकमष्टाङ्गयोगं प्रहिणोमि। तावदिह वेदारण्यपूर्वभाग एव महेश्वरशासनरूपा विधयो यथायोगमनुरोद्धव्याः' इति।

**राजा**—हन्त, कियदनुकम्पते निरुपाधिवत्सला भगवती शिवभक्तिरस्मासु। (पुरोऽवलोक्य।) हन्त, दयिताविषयकसंकथनरसाभिनिवेशवशादनवगतविप्रकर्षोऽयमस्माभिरधिगत एव वेदारण्यभागः।[1] यदत्र शिक्षाकल्पादिनामानो विचित्रगहनरमणीयास्तदेकदेशभेदा दृश्यन्ते। (स्वगतम्।) उपपन्नमेवैतत्। सकुतुकमभितो विलोकयन्। अत्र किल

नादब्रह्मविनोदिनी विजयते गान्धर्वविद्येति या
या विद्या विजयश्रियो जननभूश्चापेषुसंबन्धिनी।

---

१. अत्र त्रुटिचिह्नं काकपदं कृत्वा 'यदग्रतस्तापसगणोऽयमालक्ष्यते। **चित्तशर्मा**—अथ किम्। **राजा**—(सविनयम्।) अये, विमृश्यतां क इम इति।' ख.

जीवानन्दनिदानपारदगुणप्रख्यापयित्री च या ।
विद्याशेषतया विभाति सकलं भक्तिप्रभावान्मम ॥ १४ ॥

**चित्तशर्मा**—किं बहुना । वैषयिकपरिपोषणैकनिरतो वात्स्यायनतन्त्रसिद्धान्तोऽपि तदीयपरिणतिवैरस्योपनमदतिजुगुप्साहितनिर्वेदातिशयफलितपरमार्थसुखस्वरूपजिज्ञासामुखेन विद्याशेषतयैवाध्यवसीयते ।

**राजा**—(पुरोऽवलोक्य ।)

गाढोद्बद्धजटासनीडनिबिडव्यानद्धनीडोदर-
क्रीडन्नीडजकाकलीकलकलाटोपैरविक्षेपिणः ।
देवे क्वापि निविष्टतुष्टमनसः शिष्टा इमे तापसाः
संघीभूय समापतन्ति क इमे धर्मा विशुद्धा इव ॥ १५ ॥

अये विमृश्यताम्—'इमे के' इति ।

**संकल्पः**—देव, संनिहितमिह भवन्तमवकर्ण्य पुण्याभिराशीर्भिर्योजयितुकामा वेदारण्यवासिनस्तापसाः संप्राप्ताः ।

**चित्तशर्मा**—(किंचिदिव राजानमुपसृत्य । जनान्तिकम् ।) वयस्य, मुख्याधिकारतया साधनचतुष्टयत्वेनाभिमता विवेकादयो मोहादिभिरनभूततया भवदुपनयनाय भगवत्या तापसवेषेण प्रहिताः ।

**राजा**—(सपरितोषम् ।) वयस्य, तर्हि वयमभ्यु(प्यु)पगच्छामः । (इत्युपगच्छति ।)

(ततः प्रविशन्ति विवेकादयस्तापसाः ।)

**तापसाः**—आदिष्टा वयमत्रभवत्या शिवभक्तया—'जीवराजमधिगम्य विद्यापरिणयेऽधिकारनिर्वहणाय तददृष्टपूर्वोऽयमस्माभिरिह कथं विधेयीकरणीयः । अथवा तदीयनर्मसचिवश्चित्तशर्मा परिचितपूर्वः, स एव सर्वमपि नः संविदधीत ।

(राजा सविनयादरमुपसृत्य सप्रश्रयाञ्जलिश्चित्तशर्मणा सहानमति ।)

**तापसाः**—राजन्, महत्तरेण श्रेयसा युज्यस्व ।

**चित्तशर्मा**—(पुरतो निर्दिश्य ।)

विद्युत्ताण्डवडम्बरं जगदिदं मृत्योर्मुखान्तर्गतं
सत्यज्ञानसुखैकरूपममलं ब्रह्मैव तच्छाश्वतम्।
तत्प्राप्ता वयमभ्युपाय इति च प्रज्ञानसंशीलना-
दन्तस्तोषविकासिवक्त्रकमलः सोऽयं विवेकः सुधीः ॥ १६ ॥

अस्य नामनि स्मृतेऽपि मोहो न प्रभवत्येव। (पुरतो निर्दिश्य।)

अयं विरागः परिशुद्धमूर्तिरलक्षितब्रह्मपुरंदरादिः।
तदस्य दृष्ट्या न कुतोऽपि किंचित्कणात्कणीयान्कनकाचलोऽपि ॥ १७ ॥

किंच।

मज्जत्वर्णवमेलनेन जगती कान्तारशैलोत्करै-
स्त्रुट्यद्भ्रश्यतु चान्तरिक्षमभितो नक्षत्रचन्द्रग्रहैः।
कल्पान्तज्वलनः प्रसृत्य सकलं साटोपमालेढु वा
तत्त्वामर्शविनोदिनोऽस्य तु दृशा लोमापि नो मीयते ॥ १८ ॥

तदेतस्य संनिधाने कामः परासुरेव। (इतरतो निर्दिश्य।)

ताविमावप्राकृतसुखप्रापणकृतप्रातिभव्यौ।
अपरिमितसुकृतपरिपाकभूतौ शमदमौ ॥ १९ ॥

अपथविधाविनो विषयरूपनिपातकृतो
बहिरबहिश्चरेन्द्रियकरालतुरङ्गगणान्।
दृढमवयम्य सद्गुणशतेन पदं परमं
गमयितुमीश्वरः शमदमप्रतिमो न परः ॥ २० ॥

**राजा**—(स्वगतम्) एतेन—'बहिरिन्द्रियनिग्रहः शमोऽयम्, अन्तरिन्द्रियनिग्रहो दमोऽयम्' इत्यभिहितं भवति।

**चित्तशर्मा**—वयस्य, तदेतैरविश्लिष्टतयैव गम्यतामिष्टलाभाय।

त्वय्यमीभिर्वृते दृष्टे संयमीन्द्रैर्वनाद्वनम्।
नीयमानः स्वकार्याय स्मर्यते रघुनन्दनः ॥ २१ ॥

**अविद्या**—विषयवासने, क एते राजानमभितः परिवार्य गच्छन्ति।

**विषयवासना**—परिसरवर्तिनो योगक्षेमार्थमुपागताः केऽपि तापसाः स्युः।

**राजा**—(पुरतो निर्दिश्य ।) किमिदमकाण्ड एव विद्युत्पुञ्जपिञ्जरितमिव सप्रकाशं नभो दृश्यते ।

**संकल्पः**—देव, भवदभ्युदयाय सकलमन्त्रतन्त्रपटलीर्नानाविधक्रतुविततीरुपासनाश्च संनिधाप्य तामसी च शिवभक्तिरितोमुखतया भवदुपगमं प्रतीक्षते ।

(राजा ससंभ्रमादरमभिगमनं नाटयति ।)

(ततः प्रविशतः शिवभक्ती ।)

**शिवभक्ती**—यथाकथंचिदावाभ्यामैहिकामुष्मिकाभ्युदयविशेषेषु निकाममवकृष्य जीवराजोऽयमविद्याविधेयीकरणीयः ।

(राजा सप्रश्रयमुपसृत्य प्रणमति ।)

**भक्ती**—वत्स, सकलकल्याणभाजनं भूयाः ।

**राजा**—भगवत्यौ, मदुद्देशादिहोपगमनस्य प्रयोजनमवगन्तुमिच्छामि ।

**भक्ती**—वत्स, भवदभिनन्दनमन्तरेण न किंचिदिह नौ साधनीयमस्ति ।

**राजा**—सदृशमेव खलु तद्भवादृशीनां महानुभावानाम् । (पुरतो निर्दिश्य ।) भगवत्यौ, किमेतदतिबहलकदलनसितशिखज्वालजालजटालानि कान्यपि महोमण्डलानि दृश्यन्ते ।

**तामसी**—भुवनहिताय बभूवुः पशुपतिविष्ण्वादयः, स्वयं यान्येतानि[1] संनिदधते पाशुपतादीनि तानि तेऽस्त्राणि ।

**राजसी**—वत्स, सप्रश्रयेणोपसदनेन परिगृह्यता(न्ता)मिमानि दिव्यास्त्राणि । एतानि स्मृतप्रत्युपस्थितानि समयेषु भवतः श्रेयो महद्विधास्यन्ति ।

**राजा**—तथा । (इति चरणग्रहणं नाटयति ।)

**असूया**—भट्टिनि, राजानः खल्वपूर्वशस्त्रास्त्रप्रिया भवन्तीति पाशुपतादिदिव्यास्त्रप्रतिपादनेन शिवभक्तिभ्यामात्मनिघ्नीकृतो देवः ।

---

१. 'यान्ति । एतानि' क.

**राजा**—(सपरितोषम् ।) भगवत्यौ, परमनुगृहीतोऽस्मि । निःशङ्कमभिमतेषु विधेयेष्वनुयुज्यतामयं जनः ।

**तामसी**—राजन्, इतः परिसर एव । (पुरतो निर्दिश्य ।)

मन्त्रोऽयं शरभेश्वरो विजयते सर्वार्थचिन्तामणि-
विख्यातो बगलामुखीमनुरसावल्पश्रमैः सिध्यति ।
यस्यानुग्रहमीहसे तदमुना धन्यः स सर्वो भवे-
त्सन्त्येवं मनुकोटयोऽत्र निरतः श्रेयोऽखिलं प्राप्नुहि ॥ २२ ॥

अथवा ।

श्येनेनाभिचरन्यजस्व स यथा श्येनो निपत्य क्षणा-
दादत्ते भुवि कुक्कुटादिपृथुकानेवं द्विषो दुर्जयान् ।
आदत्ते स किलाध्वरोऽतिरभसादग्रे तवाकण्टकं
साम्राज्यं भविता तवोत्तरमितः किं नाम भाग्यं परम् ॥ २३ ॥

**राजसी**—(सासूयम् । जनान्तिकम् ।) किमेभिरिन्द्रजालैरिवातिफल्गुस्वभावैरतिचिरसाध्यैरीषदपचारेऽपि चित्तविभ्रमकारिभिः । इत आगम्यताम् । (इति राजानमन्यतोऽवकर्षति ।)

**राजा**—(स्वगतम् ।) अहो प्रकृतिगुणदोषादनयोरप्यसूया ।

**राजसी**—वत्स, दृश्यतामग्रेऽपि । पाशुपतं गाणपतं सौरं शाक्तं पाञ्चरात्रमिति पञ्च मतानि जयन्ति ह्येतानि स्कान्दषष्ठानि ।

तदेतेषु श्रेयः पशुपतिमतं तत्र नियतो
यदि त्वं दीक्षेथास्तदुपरि दुरापं न किमपि ।
स दत्ते सारूप्यं शतमखमुखामर्त्यमुकुटी-
मणिस्तोमज्योतिर्धगधगनकिंजल्कितपदम् ॥ २४ ॥

अथवा । मेरुमन्दरादय इव वाजपेयराजसूयपौण्डरीकादयो । महाक्रतव इतः सहस्रशो दृश्यन्ते । तदेतेषु येषुकेषुचिदभिलाषितमभिसंधाय पशुपतिराराधनीयः ।

प्रसीदन्नेतेन प्रतिभवति देवस्तव फले
पशुक्षेत्रापत्यादि च गुणफलत्वेन भवति ।
त्रिलोकीसाम्राज्यं त्रिचतुरदिनैः संभवति चे-
दमुष्यानुष्ठाने बत कथमभिज्ञो न रमताम् ॥ २५ ॥

यदि तावदमीषु बहुचित्तव्ययायाससाध्यतया मनसो न प्रवृत्तिः, तर्हि तिष्ठतु । परतो दृश्यताम् । इमाः किल शङ्खपद्मादिनिधिदेवता इव पञ्चाग्निविद्येति वैश्वानरविद्येति पर्यङ्कविद्येति च बहुधा महोपासनाः सहस्रमितो दृश्यन्ते ।

एतासु या काचन कल्पवल्ली भावालवाले भवतो निधेया ।
न भारलेशो न च दूरयानं फलन्त्यभीष्टानि भवन्मतानि ॥ २६ ॥

**चित्तशर्मा**—भगवति, का नाम सा महोपासना यत्र किल संकल्पत एव सर्वकामार्थसिद्धिः श्रूयते ।

**राजसी**—सा किल सर्वोत्तमा । (इति तदन्तिकमुपनीय राजानमियमसाविति दहरविद्यां दर्शयति ।)

**राजा**—(सहर्षम् । आत्मगतम् ।) दिष्ट्याहमद्य वेदारण्यपरभागसविधमुपगतोऽस्मि । (प्रकाशम् । सावहित्थम् ।) भगवति, निरुपधिवत्सलया भवत्या निकाममनुगृहीतोऽहम् । एतेषु येषुकेषुचित्कर्मसु यासुकासुचिदुपासनासु च विरचिताभिनिवेशो यथामति यथोपपत्ति च शिवमाराधयामि । (इति विधिष्वभिनिवेशं दर्शयति ।)

**प्रवृत्तिः**—सखि विषयवासने, दिष्ट्या फलित इव देव्या मनोरथः । यदेष काम्यक्रियोपासनास्वभिनिविष्टश्चिरेण मदनुरोधी दृश्यते ।

**विषयवासना**—विमर्शनीयम्, अधुनापि मम संदेह एव ।

**अविद्या**—मम तु न संदेहः । यथापुरमस्मासु विमुख एव । कुतोऽपि दाक्षिण्यादाभिमुख्यमभिमुख्यमभिनयति । परथायमस्मासु कथमेतावदुदासीत । धिक्प्रदग्धमेतन्मम जीवितम् ।

गते तादृक्प्रेमण्ययमहमिति द्वैतरहिते
चरत्यग्रे कस्मिन्नपि जन इव प्रेयसि निजे ।

शनैर्माने म्लाने गतगरिमणि प्राणधरणा-
त्परो नैव स्त्रीणां हृदयदहनः क्रूरदहनः ॥ २७ ॥

**राजा**—(सविषादम् ।) सखे चित्तशर्मन्, अतिचिरेण सूत्रनर्तितप्रतिमोपममनपेक्षितव्यापारैरात्मानमायासयामि ।

**चित्तशर्मा**—(स्वगतम् ।) अयमस्य विद्याभिरतिरसाभिनिवेशपरिणामः । (प्रकाशम् ।) वयस्य, कुत एवम् ।

**राजा**—सखे, श्रूयताम् ।

किमेभिर्व्यापारैर्ध्रुवमिह फलं किं न्विति मना-
ग्विमर्शप्रस्तावे मम हि विफलं भाति सकलम् ।

किं बहुना ।

कियत्कालानेवं लुठनमिति भक्त्या निगदितो
नियोगोऽपि व्यर्थश्रम इव हि निर्वेदयति माम् ॥ २८ ॥

**चित्तशर्मा**—हन्त, भगवत्याः प्रसादो सांप्रतमुदपद्यत । निवृत्तिहेतुविषयविद्वेषजनितो वयस्यस्य निर्वेदः । अयमेवावसरो योगपरिचयस्यापि ।

(ततः प्रविशति निवृत्तिरष्टाङ्गयोगश्च ।)

**निवृत्तिः**—ततस्ततः ।

**योगः**—तदनु भगवत्या शिवभक्त्या तदेवमभिहितम्—'अद्य खलु जीवराजमतिचिरेण विविधकर्मोपासनासु परिक्लिष्टं चित्तशर्मणा सह वेदारण्यपरभागमानेष्यति निवृत्तिः । तदत्र विरुद्धापरशुद्धवृत्तिनिरोधाय तत्प्रतिहारभूमिमधिगम्यताम् । अन्यच्च तस्य जीवराजस्य स्वप्ने साम्बदक्षिणामूर्तिरचिरादध्यक्षणीयः' इति ।

**निवृत्तिः**—अहमपि 'प्रत्यक्षनैष्ठुर्यकलहादिकमन्तरेण तापसानां स्वाश्रमपददर्शनप्रार्थनापदेशेन जीवराजः प्रवेशनीयः' इति तयैव प्रहितास्मि । (उभौ राजानमुपगच्छतः ।)

**निवृत्तिः**—(राजानं प्रति ।) वत्स, निरन्तरायमितो भवदानयनाय भगवत्यायमष्टाङ्गयोगोऽपि प्रहितः ।

---

१. 'जनै' क.

**योगः**—विजयतां देवः ।

**राजा**—किमयमेव स महात्मा योगः । (प्रणमति ।)

**निवृत्तिः**—(योगं निर्दिश्य ।)

निरुध्य प्राणादीन्नियमितपरिस्पन्दवशिता-
नतो बद्ध्वा गाढं करणपटलद्वारनिकरम् ।
शतच्छिद्रात्कुम्भादुदकमिव विष्वक्परिगल-
न्मनो रुद्ध्वात्मानं गमयितुमसावेव निपुणः ॥ २९ ॥

**अविद्या**—अयि विषयवासने, ननु प्रागेव मयाभिहितम्—'प्रतीप एवायम्' इति । संप्रति परतो जिगमिषुरिव निवृत्त्या सह किमपि मन्त्रयते । किमत्र करणीयम् ।

**विषयवासना**—समये साहसमवलम्ब्य पश्यामः ।

(निवृत्तिर्विवेकादीनां कर्णे 'एवमेवम्' इति कथयति ।)

**तापसाः**—(सशिरःकम्पम् ।) महाराज, तदितः पदान्तर एवास्माकमाश्रमपदम् । तदवलोकनेन वयमनुग्रहीतव्याः । (इति राजानं हस्ते गृहीत्वा परभागं प्रवेशयन्ति ।)

(विषयवासना चित्तशर्माणमवलम्ब्य सहैव प्रविविक्षति ।)

**योगः**—(दण्डमुद्यम्य ।) धिक्त्वां पिशाचि । (इति गलहस्तिकया निवर्तयति ।)

**चित्तशर्मा**—कियदत्र संविहितं भगवत्या । तथाहि ।

निवृत्तेरग्रे का प्रभवतु तयामी च घटिता
विवेकाद्या भक्त्या तदुपरि स योगोऽपि घटितः ।
प्रमादाशङ्का न प्रसजति कणीयस्यपि यथा
तथा संनह्यन्तः परिणतिषु मुह्यन्ति न बुधाः ॥ ३० ॥

वयस्य, दिष्ट्या योगप्रभावेण व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमित्वानवस्थितत्वादिभिर्विक्षेपैर्दुःखदौर्मनस्यादिभिस्तत्सहजाभिर्वृत्तिभिश्चोत्सृष्टतया सुनिर्मलमात्मानं पश्यामि । दिष्ट्यायमस्माकमेतदनुग्रहलाभः । अस्य तावन्महात्मनोऽवयवभूता यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय इत्यष्टाविमे महाभागाः । अत्र—अहिंसा

सत्यमस्तेयं ब्रह्मचर्यं परिग्रह इति पञ्चैते यमा नाम । शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानीत्येते तु पञ्च नियमाः । तदेतेषामेकैकस्य प्रभावो गिरामभूमिः । दिङ्मात्रमुदाहियते । श्रूयताम्—यत्रायमहिंसा नाम यमः प्रतिवसति, तत्र तनुभृतामन्योन्यवैरगन्धोऽपि न प्रसरति । दृश्यतामत्रेदमाश्चर्यम् ।

गोवत्सान्पिबतो निजस्तनमियं व्यालेढि शार्दूलिका
बर्ही बर्हसमीरणैः सुखयते वाताशिनः पोतकान् ।
गृह्णन्तो जरदग्धतापसगणं पाणाविमे वानरा-
स्तोयाधारगतागतेषु सुखयन्त्यव्याजमैत्रीभृतः ॥ ३१ ॥

**राजा**—(स्वगतम् ।) अतः किल भगवान्पतञ्जलिरसूत्रयत्—'अहिंसायां (साप्रतिष्ठाया तत्संनिधौ) वैरत्यागः' (साधनपादे उपसूत्रम्) इत्यादि ।

**चित्तशर्मा**—अथ सत्याभिधेयोऽयं द्वितीयो यमनुगृह्णाति, तेन यद्यथाभिधीयते तत्तथैव भवति । अत एव किल

सर्वेषां च मनुष्याणामर्थं वागनुवर्तते ।
यमिनां तु कृतार्थानां वाचमर्थोऽनुवर्तते ॥ ३२ ॥

**राजा**—ततः किल ते शापानुग्रहयोः प्रभवन्ति ।

**चित्तशर्मा**—तदेवमप्रमेयापरिमितप्रभावोऽयं योगः । (योगं प्रति ।) आर्य, भवदनुग्रहेण निरन्तरायमभिमतसिद्धिमभिलषति महाराजः ।

**योगः**—सखे चित्तशर्मन्, अपरिमितशक्तेः शिवभक्तेरनुग्रहभाजनस्य किमस्य परिहीयते । तदेतैः शमदमादिभिः स्वसमारब्धकार्यनिर्वाहजागरूकामत्रभवतीं शिवभक्तिं प्रतिपद्य तया निर्वर्त्यमानामिष्टसिद्धिमधिगच्छतु महाराजः ।

**चित्तशर्मा**—यदाज्ञापयत्यार्यः । (इति सर्वैः सह भक्तिं प्रति गमनं नाटयति ।)

**अविद्या**—(पुरो विलोक्य । सातङ्कम् ।) अयि विषयवासने, किमेतदापतितम् । यदयमवधूय नः परागत एव वेदारण्यपरभागम् । देव, किमितः करोमि मन्दभाग्या ।

**विषयवासना**—(सधैर्यावष्टम्भम् ।) देवि, मा भैषीः । नन्विमे जगज्जयिनः कामादयः सांप्रतमसुनिर्व्यपेक्षमेव पराक्रमाय संनह्यन्ति । तदेतैः सममहमेव तानवस्कन्द्य परावर्तयामि । (इति साटोपं कामादिभिः सह निष्क्रामति ।)

(नेपथ्ये कलकलः ।)

**विवेकादयः**—(श्रुत्वा । सामर्षम् ।) देव, कामादयोऽस्मदीयेषु किमप्योजायन्त इव, तत्किमिति विमृश्य परावर्तेमहि । (इति निष्क्रामन्ति ।)

**राजा**—(पुरो विलोक्य ।) हन्त समरसंनाहसमुद्बोधितसंस्कारेण मया स्मृतमात्राण्येव तानि दिव्यास्त्राणि संनिदधते । (सप्रश्रयं प्रणम्य ।) भवत्संनिधानमहिम्ना विवेकादितत्तत्प्रतिभटैरेव तत्तदरिनिवर्हणानि क्रियन्ते । तदनुगृह्यतामन्तर्धानेन ।

('तथा' इति दिव्यास्त्राणि तिरोदधते ।)

**निवृत्तिः**—यावदहमप्येतेषामायोधनवृत्तान्तमप्युपलभ्य सर्वमिदमावेदयितुं भगवत्याः प्रकाशं गच्छामि । (इति तैः सह निष्क्रामति ।)

**राजा**—(पुरो विलोक्य ।)

प्रासादेषु रतात्यये मृगदृशः शाटीति संमोहय-
न्विष्वक्शाखिशिखासु लोध्रकुतुकादिन्दिन्दिरान्धावयन् ।
उन्मीलन्नुडुराज एष किरणैरेभिः सुधामान्द्रितै-
र्मामानन्दयते महीध्रशिखरे कैलासमध्यक्षयन् ॥ ३३ ॥

**योगः**—(स्वगतम् ।) अचिरादेव तदपि संपत्स्यते । (प्रकाशम् ।) राजन्, अविरतपरितप्तसकलजीवमण्डलविश्रमसुखविधायिनी परिणमति भगवतीयं रजनी । तदिह नेदीयसी शमादीनामाश्रमपदे संविश्य तामतिवाहयामः ।

**राजा**—तथा ।

(इति निष्क्रान्ताः सर्वे ।)

इति षष्ठोऽङ्कः ।

---

## सप्तमोऽङ्कः ।

(ततः प्रविशति निवृत्तिर्विविदिषा च ।)

**विविदिषा**—ततस्ततः ।

**निवृत्तिः**—तदनु कामादिभिः स्मृतमात्र एव

गर्वोन्मादप्रहर्षा इति कति कति वा कामदूताः समेता
नैर्घृण्याक्षान्तितैक्ष्ण्यादय इति ,शतधा निःसृताः क्रोधयोधाः ।
कार्पण्यातृप्तिदैन्यादय इति कति वा निर्गता लोभवर्ग्याः
किंचैते मोहदूताः कति बत मिलिताः स्तम्भतर्कभ्रमाद्याः ॥ १ ॥

हन्त, विवेकादिभिरपि तत्तत्प्रतिभटतया निजनिजपरिवाराः संनिधापिता एव । अतएव

दिशि विदिशि प्रसर्पति बले परितस्तुमुले
बहलदुरन्तसंतमससंततिदन्तुरिते ।
बलपदरेणुभिर्घनघनाघनमेदुरितै-
र्बत हरिदन्तरं सकलमेव निरन्तरितम् ॥ २ ॥

अपि च । पूर्वपश्चिमसमुद्रयोरिव सरभससमरसाहसविनिद्रयोर्मोहविवेकसैन्ययोरन्योन्यसंकलनतः प्रस्तुत एवाभिमर्दः । तथाहि ।

शस्त्रास्त्रपरुषे मोहसैन्ये सति समागते ।
चिन्मुद्रयाभ्यपद्यन्त जेतुकामाः शमादयः ॥ ३ ॥

**विविदिषा**—(श्रुत्वा सहर्षम् । स्वगतम् ।) जयस्तु कस्य पक्षमवलम्बते वा द्रष्टव्यम् । (प्रकाशम् ।) ततस्ततः ।

**निवृत्तिः**—तदनु

पश्यन्नग्रे विवेकं तरणिमिव तमः कापि दुद्राव मोहः
कामः क्षामो विरागाद्द्रुतमभजत वा कां दिशं कांदिशीकः ।
क्रोधः प्रध्वस्तयोधः शमसविधगतः सद्य एव प्रलिल्ये
शेषा तूलाविशेषा कथमरिपृतनोपद्रुता विद्रुता वा ॥ ४ ॥

**विविदिषा**—(सपरितोषम् ।) तदनन्तरमविद्या किमाचारा ।

**निवृत्तिः**—सा तावदसूयाभिहितनिजबलपरिभवजनितदुःखसंवेगमोहिता तयैव साश्वासमित्थमभिहिता—'भट्टिनि, तदेवंविधे महति संकटे

भवतीमन्तरेण का प्रगल्भेत । तदिह भवत्यैव व्याप्रियताम् । भवदुपगममात्रेण यथापुरमेव सकलं परावर्तते ।' तदनु सा (दीर्घं निश्वस्य ।)

क्रोधागारमनुप्रविश्य दयितं व्याधूय पादानतं
संमत्यापि च तत्प्रतिश्रुततपःकान्तारयात्रामपि ।
भूयस्तस्य कथं व्रजानि पुरतः सिद्धिस्तथात्वेऽपि का
किं कुर्यामिह चित्तशर्मवचसो विस्रम्भतो वञ्चिताः ॥ ५ ॥

इति सविषादं परावृत्त्य गन्तुमैच्छत् । अथ प्रवृत्तिस्तामभिहितवती—'भट्टिनि, मन्युसंवेगजनितदुरध्यवसायैः पुरुषमेनमपहाय क्व गमिष्यसि । यत्र क्वापि तमन्तरेण स्वयमेव किं प्रभविष्यामि इति मन्यसे । किंच परभागगताः' इति किमस्माकमेते विप्रकृष्टाः पदान्तर एव तिष्ठन्ति । अतस्तदप्रहाणेनैव तदाचरितानि निरूपयिष्याम इति यथापुरं व्यवहिता एव तिष्ठन्ति[1] । त्वं पुनरिह क्व समागता ।

**विविदिषा**—अहं किल संदिष्टासि भगवता योगेन—वत्से विविदिषे, तत्रभवतीं शिवभक्तिमुपेत्य मन्मुखेन ब्रूहि—'भवन्नियोगमनुसंधता मया कामपि निद्रामुपकल्प्य तत्र साक्षात्कारितसाम्बदक्षिणामूर्तिर्जीवराजः प्रमोदातिशयतरलितो भवत्पादकमलमवलोकयितुमतिमात्रमुत्कण्ठते । तदयमविलम्बितमेव भवदनुग्रहभाजनीकरणीयः' इति ।

**निवृत्तिः**—(श्रुत्वा । सपरितोषम् ।) यावदिममर्थं भगवत्याः कर्णगोचरीकृत्य तामत्र सपदि संनिधापयावः ।

(इति निष्क्रान्ते ।)

**प्रवेशकः ।**

(ततः प्रविशति चित्तशर्मणा विवेकादिभिर्योगेन च सह यथानिर्दिष्टो जीवराजः ।)

**जीवराजः**—

मन्दस्मितस्नपितमञ्जुमुखारविन्दं
वामाङ्कसङ्गिवनितामुखलोलनेत्रम् ।
चिन्मुद्रिकाविधुतचित्तमलान्धकारं
ज्योतिर्मनो बत न जातु जहाति तन्मे ॥ ६ ॥

---

१. 'तिष्ठन्तीति' ख.

अपि च।

सा दृष्टिः सदया स च स्मितसुधाहृद्यः प्रसादो मुखे
तच्चोदारगभीरधीरमधुरं वीरासनाध्यासनम्।
चिन्मुद्रापि च सा चिरंतनतमःसंदोहविध्वंसिनी
सर्वं हन्त पुरःपुरो दिशि दिशि प्रत्यक्षमालक्ष्यते ॥ ७ ॥

(पुरो विलोक्य।) हन्त, विभातप्राया रजनी। यदिदानीम्

आयान्त्या दिवसश्रियेह भगवद्भक्त्येव विध्वंसिते
विश्वव्यामोहतमःप्ररोहनिकरे पुष्यत्प्रसादोत्तरम्।
आविर्भावयितुं जगत्प्रसवितुर्ज्योतिर्वरेण्यं पुर-
श्चित्ते शुद्धिरिवाविरस्ति कृतिनः प्राच्यां दिशि श्वेतिमा ॥ ८ ॥

(परतो विलोक्य।) अहो खलु सार्वत्रिकता विषयानुबन्धस्य।

मामन्विष्य समागमिष्यति वपुः स्पक्ष्यत्यथ प्रेमतः
संलापैरपि तोषयिष्यति ततो भुक्तावशेषं बिसम्।
मद्वक्त्रादुररीकरिष्यति वधूरित्थं सदा चिन्तय
प्रागागत्य विहारपुष्करसरः कोकोऽयमास्तेऽधुना ॥ ९ ॥

सखे, भवदीयसंविधानसुदृढप्रवहणेन निस्तीर्ण इवायमविद्यासंकटविषयसागरः।

**चित्तशर्मा**—वयस्य, ननु निस्तीर्य विश्रमसुखमप्यनुभूयते। किमुच्यते—'निस्तीर्ण इव' इति।

**राजा**—सखे चित्तशर्मन्, अपि नाम निष्प्रत्यूहमेव तामत्रभवतीं विद्यामुपलभेय।

(नेपथ्ये।)

इयमहमागतास्मि।

**राजा**—(श्रुत्वा। सहर्षम्।) सखे, प्रसन्नमधुरगम्भीरवृत्तिः 'इयमहमागतास्मि' इत्युपश्रुता वाचोयुक्तिः कर्णविवरमाप्याययति।

(पुनर्नेपथ्ये।)

वत्से निवृत्ते, कियच्चिरं विलम्बसे। सत्वरमुपगम्यताम्। अपि च सत्यमागतोऽत्र चित्तशर्मणा सह राजा।

---

१. 'प्रसादोन्मुखे' क-ख. २. 'द्भक्त्यैव' क. ३. 'अपि सत्य' ख.

**निवृत्तिः**—नन्वत्र संनिहित एवायम्। यावदेनमुपसरामः।

(ततः प्रविशति निवृत्त्या सह शिवभक्तिः।)

**शिवभक्तिः**—वत्से निवृत्ते, अपीदानीं सफलस्ते परिश्रमः। अपि दिष्ट्यायमविद्यादुर्ग्रहान्मोचितो महाराजः। अपि हतसंकल्पास्ते मोहादयः। अपि सफलमोजायितं शमादीनाम्। अपि निर्व्यूढप्रतिज्ञश्चित्तशर्मा। यदयमिममुद्देशमनुप्रापितश्चित्तशर्मणा महाराजः।

**निवृत्तिः**—अम्ब, भवदनुग्रहः किमिव हि श्रेयो न समग्रयिष्यति।

**राजा**—(सत्वरमुपसृत्य।)

भवविषसागरतरणे तरणे[1] तरणं[2] तमोविमोहस्य।
भगवति भावुकमूर्ते शतकृत्वस्ते नमोऽस्तु शिवभक्ते॥ १०॥

(इति चित्तशर्मणा सह साष्टाङ्गं प्रणमति।)

**शिवभक्तिः**—वत्सौ, अविलम्बितमेवाभिमतेन युज्येथाम्।

**चित्तशर्मा**—भगवति, भवदीयनिर्देशेन कथं कथमप्ययमुं देशमानीतो महाराजः। अनन्तरकरणीये तत्रभवती प्रमाणम्। परंतु विद्याविरहकातरः क्षणमपि विलम्बं न सहते देवः।

**शिवभक्तिः**—वत्से विरक्ते, मद्वचनादुपनिषद्देवीमुपेत्य ब्रूहि—'अत्र किल कुलमहत्तरासु त्वमेकिका परावरज्ञा सर्वस्य जनस्य विधेयार्थसंदर्शिनी दृष्टिरिव सर्वकार्येषु प्रभवसि। भवदसंनिधानेन सर्वैरितिकर्तव्यतामूढैः स्थीयते। तदविलम्बितमेव विवाहनेपथ्यविधिना प्रसाधितामत्र भगवतीं विद्यामानीय पुण्डरीकभवने संनिधापय' इति।

**विरक्तिः**—यदाज्ञापयति भगवती। (इति निष्क्रामति।)

**शिवभक्तिः**—वत्स, किमतीव संभ्रान्त इव दृश्यसे।

**राजा**—भगवति, तत्किं ब्रवीमि। हर्षातिशयगद्गदया वाचा निगदितुं न पारयामि। भवन्नियोगेन किंचिदिव विश्रान्तिसुखमनुभवन्नवशोपपन्नया विरचितसकलबाह्यकरणमुद्रया योगनिद्रया[3] परिगृहीतोऽस्मि। तत्र किल दिव्यमङ्गलसूचकं कमपि स्वप्नमालोकयम्।

---

१. नौकारूपे. २. भास्कररूपे. ३. 'निद्रया' ख.

**शिवभक्तिः**—वत्स, कथमिव ।

**राजा**—

वर्षानिशीथे गहनान्धकारे वनं किमप्युद्भटदुष्टसत्त्वम् ।
कुतोऽपि हेतोरवशात्प्रपन्नो दीनां दशां कामपि निर्विशामि ॥ ११ ॥

तथासति ।

विघटितसकलक्लेशं विपरीतविभाविताखिलावस्थम् ।
आनन्दकन्दलनमिव किमपि महोमण्डलं ममाविरभूत् ॥ १२ ॥

तदनु दुःस्वप्नतः प्रबुद्धोऽहमिति निकाममभिनन्दता सावधानप्रणिहितदृष्टिना मया तस्मिन्महोमण्डले निभृतं निरूप्यमाणे

श्यामामुत्पलशोभिनीमगसुतामङ्के दधानं मुदा
पुस्तं चामृतकुम्भमक्षसरमप्याबिभ्रतं पाणिभिः ।
अद्राक्षं भसितावदातवपुषं रुद्राक्षमालापुषं
चिन्मुद्राविशदीकृतात्मविभवं स्मेराननेन्दुं शिवम् ॥ १३ ॥

तदनु—

जय जगदेकनाथ जय सर्वसुराधिपते
जय निगमान्ततत्त्व जय सत्यसुखाम्बुनिधे ।
जय निरुपाधिवत्सल जयाश्रितकल्पतरो
जय जगदार्तिभञ्जन जयेश दयाजलधिधे ॥ १४ ॥

जय करुणानुषङ्गवदपाङ्गतरङ्ग कणा-
धिगततथाप्रभावबलजिन्मुखदेवतते ।
जय जलजासनादिविबुधव्रजमौलिमणि-
प्रकरमयूखकर्बुरितपादसरोजरुचे ॥ १५ ॥

दुर्वारोपनमद्भवार्तिदवथुप्रध्वंसिमन्दस्मित-
ज्योत्स्नाचारुमुखारविन्दपरमानन्दैकसान्द्राकृते ।
सानन्दाप्तसनन्दनादिशमवत्संघातचूडातटी-
हस्ताम्भोरुहकोरकीकृतिशरत्पर्वेन्दुबिम्बायित ॥ १६ ॥

संसारार्णवकर्णधार सकलक्लेशान्धकारच्छिटा-
चण्डांशो सकलेप्सितार्थघटनासंतानचिन्तामणे ।
सत्यज्ञाननिधे सकृत्प्रणमते सायुज्यलक्ष्मीप्रद
स्वामिन्दैवतसार्वभौम दयया मां पाहि साम्ब प्रभो ॥ १७ ॥

इति नितान्तमानन्दपरवशो भगवन्तमहमस्ताविषम् । तदनन्तरं च शिरसा निपीड्य चरणाम्बुजे गुरोरसकृत्प्रणम्य मयि किंचिदुत्थिते, उपहूय मामुपगतस्य दक्षिणे श्रवणे किमप्यकथयद्दयानिधिः ।

**शिवभक्तिः**—(श्रुत्वा सपरितोषम् । स्वगतम् ।) हन्त, अतिवत्सलेन भगवता महोपनिषदुपदेशेन परमनुगृहीतोऽसि । इतः करगतकल्पैव भवतो विद्या ।

(ततः प्रविशति निजपरिवारेण सममुपनिषद्देवी ।)

**उपनिषद्देवी**—

अजरमनादिमध्यमविनाशि चिदेकरसं
किमपि महो जगज्जनकमस्ति तदेव सुखम् ।
मरुषु मरीचिकाजलमिवासदिदं सकलं
तदवगमेन मृत्युमतितीर्य सुखीभवत ॥ १८ ॥

**विविदिषा**—अम्ब, कथमेतत् ।

**स्मृतिः**—

अभीशोरज्ञानादहिरुदयति त्रासयति च
प्रतीते तत्तत्त्वे न किमपि यथा संप्रति तथा ।
स्वरूपस्याज्ञानाच्चरमचरमित्येवमुदभू-
दिदं तस्य ज्ञाने सति फलति मिथ्यैव सकलम् ॥ १९ ॥

अत्र का नाम कथंता ।

(विविदिषा पुराणादीनां मुखं पश्यति ।)

**पुराणादयः**—वत्से, एवमेवैतत् ।

आनीतं न परेण केनचिदिदं स्वाज्ञानविस्तारितं
स्वस्मिन्नेव निषद्य तुच्छविषयक्लेशान्विधत्ते बहून् ।

---

१. 'च्छिदा' क.

सत्यं ज्ञानमनन्तमस्मि तदहं ब्रह्मेति जानाति चे-
त्तस्येदं तपनोदये तम इव स्फीतं जगल्लीयते ॥ २० ॥

**श्रद्धा**—उपपन्नमेवैतत् ।

**विविदिषा**—भवत्वेवम्, किमत्र मूलमिति विविदिषामि ।

**पुराणादयः**—वत्से, श्रूयताम् ।

माया नाम विचित्ररीतिरसती काचिन्मनोह्ला(ला)सिनी
सत्यं वस्तु निगूहति प्रकटयत्यत्यन्तमिथ्यायितम् ।
द्वे शक्ती प्रथिते चिरेण सहजे तस्यास्तथा तद्वशा-
दात्मा सन्नपि नेक्ष्यते जगदसत्सद्भूतमालोक्यते ॥ २१ ॥

(राजा सरभसमुत्थाय चित्तशर्मणा सह साष्टाङ्गं प्रणमति ।)

**उपनिषद्देवी**—वत्सौ, अचिरेण लिप्सितलाभहर्षितौ भूयास्तम् ॥

(शमादयः सर्वेऽपि ससंभ्रममुत्थाय यथोचितमुपचर्य यथायथमुपविशन्ति ।)

**शिवभक्तिः**—भगवति, महानुभावा ह्यसि ।

कपिलकणादजैमिनिपतञ्जलिसत्यवती-
तनुभवगौतमाभिमतमार्गविभिन्नतया ।
सुरतटिनी समुद्रमिव दीव्यदनेकमुखी
गमयसि वस्तुतत्त्वमखिलानपि भिन्नरुचीन् ॥ २२ ॥

तदत्र भगवत्या कियच्चिरमुदास्यते ।

**उपनिषद्देवी**—भगवति, मत्तो न किंचिदन्तरमास्ते । प्रागेव साम्बशिवानुग्रहेण सिद्धरूपतया प्रवणादयः सम्यक्प्रसाधितया विद्यया सह पुण्डरीकभवनोपकण्ठे निर्विकल्पसमाधिनामनि महेशितुरारामे युष्मदुपगमं महेश्वरसांनिध्यं च प्रतीक्षमाणास्तिष्ठन्ति ।

(नेपथ्ये)

बध्यन्तामुरुतोरणानि सरसैराशाश्च गीतामृतैः
पूर्यन्तामपि तन्यतां पुरमिदं संस्कारशुद्धान्तरम् ।

---

१. 'नित्यं' क. २. 'भूयास्ताम्' क.

आरूढो वृषराजमद्रिसुतया देवोऽयमागादितो
जीवस्यानितरत्वतो मम तया विद्याविवाहोत्सुकः ॥ २३ ॥

**शिवभक्तिः**—संनिहित एव परमेश्वरः । यदिदानीं
श्वेतन्ते हरितो दशापि परितश्चूडाविधुज्योतिषा
नृत्यच्छांकरघण्टिकाघणघणारावैः श्रवः पूर्यते ।
संमर्दोपनमत्सुपर्वमुकुटीकोटीरवाटीरसा-
वुद्दण्डप्रमथौघदण्डपटली साटोपमाटीकते ॥ २४ ॥

(ततः प्रविशति साम्बशिवः ।)

**साम्बशिवः**—प्रिये, सिद्धकल्पसंकल्पा भवती । यदयमुपनत एव जीवस्य विद्याविवाहोत्सवः ।

**देवी**—नाथ, भवदनुग्रहः किं न समग्रयिष्यति ।

(सर्वे सरभसमुत्थाय प्रणमन्ति ।)

**राजा**—(चित्तशर्मणा सह सप्रश्रयमसकृत्प्रणम्योत्थाय भक्तिसमुत्तेजिताभिर्वाक्प्रवृत्तिभिरभिष्टौति ।) जय जय विजयी भवापारसच्चिद्घनानन्दभूमन्नविद्यातमःसिन्धुनिर्मग्नदीनोद्दिधीर्षारसोपात्तकल्याणमूर्ते समस्ताभिनन्द्याद्भुतोदारचित्रापदानस्फुरच्चारुकीर्ते विखण्डं विखण्डं निजान्येव रुण्डानि तद्धोमतः प्रीणितत्वद्दयालेशलब्धप्रभावाधिकस्तब्धविश्वजगन्मण्डलीलुण्ठनाकुण्ठनाच्चण्डिमोद्दण्डदोर्दण्डकण्डूलतागेण्डुकक्रीडितान्दोलितत्रस्तचण्डीककैलासतत्कूटकिंचित्पदाङ्गुष्ठविन्यासपातालनिर्मग्नतन्मूललग्नाखुवक्रे ददत्यार्तरक्षःकुलाध्यक्षदाक्षिण्यभूयःप्रवृत्तानुकम्पार्द्रवच्चित्तवृत्तेतिमाद्यद्गणोद्यच्चपेटाहतोच्चण्डमार्तण्डगण्डत्रुटत्कीर्णदन्तौघनक्षत्रलोकीभवद्यज्ञवास्तुद्रुतानुद्रुतातिद्रुतानुद्रुताटोपसंक्षोभतः साध्वसध्वस्तधावत्पतत्क्रन्ददश्चद्धरिब्रह्मशक्रादितत्तत्सदस्यामरश्रेणिकं गाढशम्याहृषद्यूपदण्डाहतिप्रत्रुटन्निष्ठुरस्रुक्स्रुवादिच्छटापर्पटस्फोटवद्धापठापोद्भटं घोरठांकारिगम्भीरकुम्भीसहध्वस्तसर्पिर्घटौघस्रवद्भूरिसर्पिर्घनौघः(?)समिन्धानविष्वङ्गिरुन्धानवैतानवह्नयर्चिरालीढशालापिनद्धस्फुटद्वंशठात्कारघोरा-

१. महादण्डकाभिधमिदम्. २. 'कुण्ठताचण्डिमो' ख. ३. 'वत् क्रन्ददत्या' ख.

भटीभूमनिर्वृत्तसंवर्तमृद्धयुद्धतिस्तब्धदक्षाध्वरध्वंसकृद्वीरभद्रावताराविन्दाक्षवेधश्चिरान्विष्ट नोदृष्टसांदृष्टिकव्याधपश्चादिनिःश्रेयसैश्वर्यविश्राणनस्पष्टदृष्टाकृते

स्मरमदतिमिरोष्णधामन्मिथोदर्पभूयिष्ठ देवासुरव्रातसंक्षुभ्यमाणाब्धिगर्भोद्भव व्याप्तविध्यण्डचण्डज्वलज्ज्वालजालावलीढाखिलाशामुखाकालकालानलत्कालहालाहलार्चिःपरिप्लुष्टसाक्रन्दकोलाहलोद्धुष्टवेधोहरिप्रष्ठनष्टत्रिलोकीसमुज्जीवनायाशुतन्निग्रहारब्धनिर्यत्नजम्बूफलग्रासलीलायितव्यञ्जितापारमाहात्म्यभूमा.....म्भोनिधे देव साहन्तमावेधसो विष्टपादा च पातालतः क्षिप्रमेता जगन्मण्डलीः खण्डडिण्डीरपिण्डानिवावर्तकोटौ समाघूर्णयेयेति दर्पादनल्पार्भटीघोरमाविर्भवन्त्यभ्रकल्लोलिनीनाथ युष्मज्जटामण्डले क्वापि नीवारशूकाग्रसंसक्तनीहारलेशः किलालक्ष्यते पामरास्त्वाममेयप्रभावोच्छ्रितं प्राकृतैर्दैवतैरेकवन्मन्वतेऽहो भवान्नाम विश्राणने कोऽपि चिन्तामणिर्नाम संतानको नाम हन्तातिफल्गुप्रबोधानुरूपातिमूढस्तुतिप्रक्रिया सेयमत्यद्भुते विश्वविद्योतनोद्दामतेजोनिधौ भास्करे कीटखद्योततारोपवद्भाति मे कल्पकप्रष्ठतादृग्विभूत्युत्कटानेककोट्या सहावेक्षणेन क्षणेनैव लोकाननेकान्विधाय प्रणत्या प्रणुत्या प्रपत्यापि वा जातु यस्ते मतस्तस्य तत्स्वाम्यविश्राणनं ते कियच्चन्द्रचूडामणे ।

सकलविबुधदुर्जयैतज्जये जातु केनापि रूपेण किंचिद्यशोऽहं लभेयेति लोभाच्छताङ्गं तदङ्गं शरः सूत इत्यादि यत्किंचिदायोधनाङ्गत्वमालम्ब्य संनद्धहृष्टेषु विश्वंभरापुष्पवच्छौरिवेधःपुरोगेषु जाग्रत्सु देवेषु नैढालरोचिःसनाथेन मन्दस्मितेनैव तिस्रः पुरो भस्मसात्कृत्य दैत्यान्विनिर्जित्य दृप्तान्मनुष्यान्पशूकृत्य विष्वक्पशूनां पतित्वेन शश्वन्नमःस्वाम्यतः संभृतापारविश्वाधिपत्योन्नते संनिकृष्टं निजस्यायुषोऽन्तं विदित्वा विपद्विघ्नतः प्राग्झटित्यैव पूजासमाप्त्याशयारब्धपूजे मृकण्डोस्तनूजे, लुठत्स्वग्रतो दैन्यकारुण्यभूयिष्ठमाक्रन्दनैर्बन्धुषु, स्वाधिकारावलेपेन कालेऽथ काले तमाकर्षति क्रोधतो वामपादाभिहत्या स विध्वंसितो . मेषविध्वंसमेतत्प्रहारप्रणादोद्भवद्भक्तवात्सल्यकीर्तेर्दिगन्तप्रयाणोचितप्रोच्चलद्घण्टठात्कारितो

नाम तेनान्तकः सर्वतोऽद्यापि साशङ्कमाहिण्डते तत्समो भक्तवात्सल्यसिन्धुर्न कश्चिन्न भूतो न भावी च किं भूयसा जल्पितेन त्वमेकोऽसि सत्यस्वरूपः त्वदन्यन्मृषैवाखिलं सत्त्वमत्युत्कटार्कादितेजस्त्रयीकोटिकोट्यापि नो भास्यसे, भास्यते भानसिन्धो भवद्भानलेशेन कृत्स्नं जगत्, किंच लिप्सापदं वल्लभाद्वल्लभं वस्तु न त्वत्परं, किंचिदिष्टं भवेदात्मकामाय सर्वम्, ह्यतो वस्तु सत्यं त्वमेव प्रकाशः, त्वमेव प्रियं च त्वमेवासि तादृक्, त्वमात्मा पुरः पृष्ठतः पार्श्वतो भूतसद्भाविकालेषु वा सर्वतः सर्वदा वर्तसे हन्त तिष्ठन्निधावेव कार्पण्यभाग्मन्दभागीव तं त्वामनन्यापरोक्षातिनेदिष्ठमारादपश्यन्नविद्येन्द्रजालप्रसूते निमज्जामि संसारमिथ्यार्णवे

निगमशिखरिकूटकोटीसदोदित्वराप्राकृतोद्दामतेजोनिधे सच्चिदानन्दमूर्ते जगत्सर्गरक्षोपसंहारधौरेय तालीदलादिस्फुरद्वातचक्रातिवेगभ्रमद्भूरितेजस्त्रयद्योतिनानाविधैतज्जगन्मण्डलोन्मीननद्योतविध्वंसनध्वान्तशश्वत्परावर्तनालातचक्रक्रमालोकलीलाविनोदिन् प्रमाणौघसिद्धस्वसत्तासमसत्ताकसांकल्पिकस्वाप्निकव्यावहारादिनानार्थजालेन्द्रजालोदयावस्थितिध्वंसनानामधिष्ठान, तत्तत्र सर्वत्र सूत्रात्मनाधिष्ठितापारनैकप्रकारोन्मिषत्क्लेशभूयिष्ठजन्मादिकृन्मोहगाढान्धकारौघनिःशेषविध्वंसनोच्चण्डमध्याह्नमार्ताण्ड संसाररोगत्रसद्धन्ययोगीन्द्रसंसन्मनोमन्थनिर्मथ्यमानश्रुतिव्रातदुग्धाब्धिसिध्यत्सदानन्दचिच्चन्द्रिकासान्द्र तत्पूर्णचन्द्रोदयाद्वैतसाम्राज्यसिंहासनाध्यक्ष मन्नाथ केनापि सत्संततिर्जायताम् श्रेयसाम्, मामकप्राग्जनुःकोटिकोट्यार्जितेनापि पुण्येन दृष्टोऽसि दिष्ट्या न मामुज्झ दीनम्, त्वदन्यः शरण्यो न मे पारमस्याधुना त्वामपि प्राप्य तीर्णो न चेत्स्यामहं मे परा का गतिर्दीनबन्धो दयापारसिन्धो भवाम्भोधिनिस्तारधौरंधुरीकर्णधारातिदुर्वारतापत्रयप्लुष्टसंजीवनोदारधाराधरानादिमोहान्ध्यनष्टामितस्वार्थमादृग्दृगानन्दसिद्धाञ्जनात्मन्, नमस्ते नमस्ते समस्तेश्वरायाप्रधृष्यौजसे तेजसां तेजसे भूयसां भूयसे प्रेयसां प्रेयसे ॥ २९ ॥

**साम्बशिवः**—वत्से, किमितो विलम्ब्यते ।

**शिवभक्तिः**—नाथ, सर्वे वयमितः प्रस्थिता एव कल्याणमण्डपाधिगमाय ।

**तण्डुः**—इत इतो देवः ।

(सर्वे कल्याणमण्डपगमनं नाटयन्ति ।)

**शिषः**—हन्त, महासार्थगमनमहोत्साहेनाविदितविप्रकर्षः पदान्तरवदञ्जसैव महानतीतः पन्थाः । (पुरो विलोक्य ।)

शुकादिनानाद्विजघोषपोषितं फलोपनम्रागममण्डलोज्ज्वलम् ।
समाधिनामस्फुरदन्तरातपं प्रसन्नमुद्यानमिदं महेशितुः ॥ २६ ॥

यावदेतदुपसरामः ।

(इति कल्याणमण्डपमधिगम्य यथोचितमुपविशन्ति ।)

**शिवभक्तिः**—वत्स, भद्रपीठमिदमासनपरिग्रहेणालंक्रियताम् ।

(राजा तथा करोति ।)

**देवः**—प्रस्तूयतामनन्तरकरणीयम् ।

(नेपथ्ये)

कोणे यस्य जगन्त्यमूनि जलधेर्डिण्डीरजालोपमं
जन्मस्थेमलयान्भजन्ति सहरिब्रह्मादिमृग्योऽपि सन् ।
लोकस्यानुजिघृक्षया धृतवपुः शक्त्या स्वयानन्यया
स श्लिष्टो जगदम्बया पशुपतिः कुर्वीत वां मङ्गलम् ॥ २७ ॥

**शिवभक्तिः**—(श्रुत्वा । सहर्षम् ।) इदं प्रसादनाम्नो निदिध्यासनमहाराजपुरोहितस्य सुलग्नसांनिध्यसूचनमाशीर्वचनम् ।

(पुनर्नेपथ्ये)

इयं न लभ्या तपसा न धर्मैर्न मेधया नापि बहुश्रुतेन ।
शिवप्रसादेन तवोपनम्रा विद्या तदेनां भज सावधानः ॥ २८ ॥

**शिवभक्तिः**—(श्रुत्वा । सहर्षोल्लासम् ।) संनिहितो मुहूर्तः । प्रवर्ततामातोद्यम् ।

**राजा**—

यद्गर्भे जठरं हरेरिव जगन्त्यध्यासते वृत्तयस्तिस्त्रस्त्रय्यपि तादृगोमिति परब्रह्माभिधानं परम् ।
एतद्रूपतया निरन्तरमितस्तौर्यत्रिकोदञ्चिते
नादब्रह्मणि पूर्वरङ्गविधया कृत्स्नं जगल्लीयते ॥ २९ ॥

---

१ 'ऋग्यजुःसामान्यक्षरमेतदोमिति' ख.

(ततो निदिध्यासनमहाराजः सह विद्यया प्रविश्य।)

रहितारातिवितत्या राजन्नदसीय[1]........संतत्या।
भव परमानन्दघनो भवसागरपारविश्रान्तः॥ ३०॥

(इति विद्यां जीवराजाय प्रयच्छति।)

**जीवराजः**—(विद्यां पाणौ गृहीत्वा सपरितोषम्।)

दृष्टिर्ममासि दयिते सुकृतातिरेका-
　दिष्ट्याधुनापि[2] मिषिता मुषिता विमोहाः।
सुप्तप्रबुद्ध इव सुभ्रु तव प्रसादा-
　दात्मा किलायमहमित्यवधारयामि॥ ३१॥

**विद्या**—

ग्रस्तं विमुक्तमिव शारदचन्द्रबिम्बं
　शाणावलीढमिव शैवलितं च रत्नम्।
भूयः प्रपद्य पुरुषोत्तम वल्लभं त्वा-
　मात्मानमस्मि सुहिता परिपूरितेव॥ ३२॥

**चित्तशर्मा**—(पुरोऽवलोक्य। सविस्मयम्। राजानं प्रति।) अहो पारेगिराममुष्याः प्रभावः। यदधुना

शतकोटिकोटिजननेषु भूरिशः
　सुखदुःखभोगपरिपाकसाधनम्।
यदविद्ययातिचिरकालसंचितं
　तदियं प्रदीपयति कर्म वल्वजम्॥ ३३॥

(तदिदमवलोक्य नितान्तपरिक्लिष्टा यथागतमविद्या सपरिवारा परावृत्य गच्छति।)

**राजा**—(विलोक्य। सहर्षम्। चित्तशर्माणं प्रति।)

त्वयेदं निर्व्यूढं ननु परममीदृक्षम सुखं
　ब्रुवे किं कुर्वे किं भवदुचितमेवं व्यवसितम्।
अविद्याशक्त्याहं भवदनितरो ह्यस्मि सुचिरा-
　दितो विद्याशक्त्या मदनितरभूतो भव सुखी॥ ३४॥

---

१. आदर्शद्वयेऽपि च्छन्दोभङ्ग एव.　२. 'धुनास्मि' ख.

(पुरतो निर्दिश्य । सप्रश्रयम् ।)

विवेकाद्या एते विरतिरियमेषा विविदिषा
निवृत्तिः सा सर्वैरनितरतया साधितमिदम् ।
अहं कश्चित्ते केचिदिति सति भेदे खलु मिथो
भवेदायस्तानामुचितमुपचारोक्तिरचना ॥ ३५ ॥

(शिवभक्तिं प्रणम्य । सविनयादरम् ।)

क्वाहं मोहमहान्धकारजलधौ गाढं निमग्नश्चिरा-
दीदृक्शाश्वतचित्सुखाव्यवहिता क्वेयं भवत्संगतिः ।
मन्ये विश्वगुरोर्मृडस्य मुकुटालंकारमालायिता
गङ्गा कीकटकीटतापशमनी जाता किमन्यद्भुवे ॥ ३६ ॥

(ततः सहैव भक्त्या साम्बशिवमुपसृत्य ।)

दुग्धार्णवे दुग्धलवः प्रविष्टो यथा तथाहं त्वमभूवमेव ।
भेदावभासेन तथापि किंचिदौपाधिकेन प्रणमाम्यहं त्वाम् ॥ ३७ ॥

(प्रणम्योत्थाय बद्धाञ्जलिः शिवं प्रति ।)

विलीय स्वाविद्याघनयवनिकायामथ वह-
न्विचित्रं नैपथ्यं नटसि शिव नानात्मकतया ।
स्वयं जाग्रत्पश्यस्यपि च परमानन्दभरितो
जयत्यत्याश्चर्यं जगदिति भवन्नाटकमिदम् ॥ ३८ ॥

**शिवभक्तिः**—(परमेश्वरीं प्रति ।) भगवति, निरुपाधिकया भवदनुकम्पया तदेवमयं कृतार्थो जीवराजः ।

**देवी**—(सप्रसादस्मितम् ।) वत्स, किं ते भूयः प्रियमुपहरामि ।

**जीवः**—अम्ब, किमितोऽपि[2] परमवशिष्यते । तथापीदमस्तु ।

अस्तु स्वस्ति जगत्त्रयाय जगतीं रक्षन्तु भूमीभुजो
धर्मेणैव पथा भवन्तु सुखिनः सर्वेऽपि गोब्राह्मणाः ।
पर्जन्यान्नमखक्रमेण जगतश्चक्रं तदावर्ततां
विद्वांसो विजयीभवन्तु भगवद्भक्त्या त्रयी वर्धताम् ॥ ३९ ॥

इति ॥

(निष्क्रान्ताः सर्वे ।)

इति सप्तमोऽङ्कः ।

---

१. 'परतो' ख. २. 'किमितोऽपरमव' ख.

| | किं. | ट. ख. |
|---|---|---|
| वृत्तरत्नाकर—केदारभट्टकृत, नारायणपण्डितकृत टीकेसहित, श्रुतबोध–कालिदासकृत, व छन्दोमञ्जरी–गङ्गादासकृत ... | ।।। | ०/ |
| वैदिककोश—भट्टभास्करकृत, निघंटु व चार परिशिष्टें यांसहित | ।। | ०/ |
| वैराग्यशतक—भर्तृहरिकृत, कृष्णशास्त्री महाबलकृत टीकेसहित | ।·।। | ०॥ |
| शब्दरूपावली ... ... | ०/ | ०॥ |
| शिवसहस्रनामावली (साधी) ... | ०/॥ | ०॥ |
| ,, (रेशमी पुठ्ठा) | ०≡ | ०॥ |
| शिवकवच ... ... | ०।।। | ०॥ |
| शिवगीता (साधी) | ।·। | ०/ |
| ,, (रेश० पु०) | ।=। | ०/ |
| ,, लक्ष्मीनरहरिसूनुकृत बालानंदिनी टीका और शंकराचार्यकृत कालभैरवाष्टक यांसहित ... | १ | ०= |
| शिवतांडवस्तोत्र—दशकंठकृत, माधवानंदकृत टीकेसहित ... | ०/ | ०॥ |
| शिवमहिम्नस्तोत्र—पुष्पदंतकृत ... ... | ०।।। | ०॥ |
| शिवापराधक्षमापनस्तोत्र—शंकराचार्यकृत ... | ०।। | ०॥ |
| शिशुपालवध काव्य—माघकृत, मल्लिनाथकृत सर्वंकषटीकेसहित ... ... ... | ३ | ।/ |
| शृङ्गारशतक—भर्तृहरिकृत, कृष्णशास्त्री महाबलकृत टीकेसहित | ०≡॥ | ०॥ |
| सत्यनारायणपूजा व कथा ... ... ... | ०/ | ०॥ |

| | किं. | ट. ख. |
|---|---|---|
| सप्तशती (चंडीपाठ), देवीसूक्त व तीन रहस्यें यांसहित (स्थूलाक्षर रेशमी पुठ्ठा) | ।।। | ०=॥ |
| सप्तशती (रे. पु. म. अ.) | ।= | ०/ |
| ,, (साधी कागदी) | । | ०/ |
| (सूक्ष्माक्षर रे. पु.) | ।/ | ०॥ |
| ,, (स्थूलाक्षर खुला पत्रा) | ।।= | ०= |
| समासचक्र ... ... | ०।।। | ०॥ |
| सर्वपूजा ... ... ... | ०/ | ०॥ |
| सिद्धांतकौमुदी–भट्टोजीदीक्षितकृत, अष्टाध्यायीसूत्रपाठ, गणपाठ, धातुपाठ, लिंगानुशासन, शिक्षा आणि सूत्रानुक्रमणी यांसहित | २ | ।/ |
| सुभाषितरत्नभांडागार | ३॥ | ।= |
| सूर्यसहस्रनामावली ... | ०/॥ | ०॥ |
| ,, (रे. पुठ्ठा) | ०≡ | ०॥ |
| स्वानुभवाष्टक—गोपीनाथ दाधीचकृत, स्वकृतसारबोधिनीटीकासहित ... ... | ०/ | ०॥ |
| हर्षचरित—बाणभट्टकृत, शंकरकृत संकेतटीकेसहित ... ... | २ | ०= |
| हितोपदेश—नारायणपंडितकृत ... ... | ।। | ०/ |
| ,,(इंग्रजी टिपांसहित) | १ | ०/॥ |
| अभिधानसंग्रह—प्रथम भाग. यांत अमरसिंहकृत नामलिंगानुशासन, पुरुषोत्तमदेवकृत त्रिकांडशेष, हारावली, एकाक्षरकोश व द्विरूपकोश इतके कोश आले आहेत. ... ... | १ | ०/ |

## काव्यमाला.

या नांवाचें संस्कृत मासिक पुस्तक, सन १८८६ चे जान्युआरी महिन्यापासून प्रसिद्ध होत आहे. यांत उत्तम उत्तम प्राचीन संस्कृत काव्यें, नाटकें, चंपु, भाण, प्रहसनें, छंद, अलंकार इत्यादिकांचा यथावकाश संग्रह होत असतो. फार प्राचीन आणि अत्यंत सुरस असेच ग्रंथ निवडून ते या मालेंत गुंफले जातात. **महामहोपाध्याय पंडित दुर्गाप्रसाद** या नांवाचे विद्वान्, बहुश्रुत आणि शोधक गृहस्थ जयपूरच्या महाराजांचे आश्रयास होते. त्यांनीं काश्मीर, पंजाब, बंगाला, राजपुताना, मध्यदेश, तैलंगण, वगैरे सर्व प्रदेश फिरून नानाप्रकारचे काव्यग्रंथ संपादित केले होते. त्यांतील कित्येक ग्रंथ तर ८०० किंबहुना १००० वर्षांच्याही पूर्वीचे होते. ते सर्व ग्रंथ **रा०रा० काशिनाथ पांडुरंग परब** यांनीं आह्मांस तपासून दिलेले या मालेंत येत जातात. या मालेचे अंक प्रतिमासास एकदां प्रसिद्ध होतात. प्रत्येक अंकांत डेमी अष्टपत्री सांच्याचीं १०० पृष्ठें असतात. याची वर्षाची आगाऊ किंमत ६ रुपये, ट. ख. ·॥· फुटकळ अंकाची किंमत ·॥≈ ट. ख. ८⁄

यांत आजपर्यंत ग्रंथ छापून तयार झाले आहेत, त्यांचीं नांवें:—

**प्रथम गुच्छक**—यांत (१) राघवचैतन्यविरचित महागणपतिस्तोत्र (सटीक,) (२) लङ्केश्वरविरचित शिवस्तुति, (३) कालिदासकृत श्यामलादण्डक, (४) कुलशेखरनृपतिविरचित मुकुन्दमाला, (५) जगन्नाथपण्डितराजविरचित सुधालहरी, (६) शंभुमहाकविविरचित राजेन्द्रकर्णपूर, (७) क्षेमेन्द्रविरचित कलाविलास, (८) जगन्नाथपण्डितराजविरचित प्राणाभरण (सटीक), (९) अप्पयदीक्षितविरचित वैराग्यशतक, (१०) जगन्नाथपण्डितराजविरचित अमृतलहरी, (. ) रत्नाकरविरचित वक्रोक्तिपञ्चाशिका (सटीक), (१२) आणि क्षेमेन्द्रविरचित औचित्यविचारचर्चा, इतकीं काव्यें आलीं आहेत. किंमत १ रुपया. ट. ख. ८⁄॥

**द्वितीय गुच्छक**—यांत (१) शंकराचार्यकृत विष्णुपादादिकेशान्तवर्णनस्तोत्र (सटीक), (२) गुमानिकविप्रणीत उपदेशशतक, (३) क्षेमेन्द्रकृत सुवृत्ततिलक, (४) जगन्नाथपण्डितराजविरचित करुणालहरी, (५) शंभुमहाकविविरचित अन्योक्तिमुक्तालता, (६) क्षेमेन्द्रकृत सेव्यसेवकोपदेश, (७) विक्रमविरचित नेमिदूत (८) जगन्नाथपण्डितराजविरचित लक्ष्मीलहरी, (९) रुद्रकविकृत भावविलास, (१०) क्षेमेन्द्रकृत चारुचर्या, (११) मधुसूदनसरस्वतीविरचित आनन्दमन्दाकिनी, (१२) शंकराचार्यकृत अम्बाष्टक (सटीक) आणि (१३) मुकुन्दमुक्तावलि, इतकीं काव्यें आलीं आहेत. किंमत १ रुपया. ट. ख. ८⁄॥

**तृतीय गुच्छक**—यांत (१) गोकुलनाथविरचित शिवशतक, (२) पञ्चस्तवी, (३) दामोदरगुप्तप्रणीत कुट्टनीमत, (४) रुद्रभट्टकृत शृङ्गारतिलक और (५) माधवविरचित दानलीलाकाव्य, इतकीं काव्यें आलीं आहेत. किंमत १ रुपया. ट. ख. ८⁄॥

**चतुर्थ गुच्छक**—यांत (१) बाणभट्टविरचित चण्डीशतक (सटिप्पण), (२) नागराजप्रणीत भावशतक, (३) नारायणभट्टपादकृत स्वाहासुधाकर,

KÂVYAMÂLÂ. 36.



THE

# VRITTIVÂRTIKA

OF

## APPAYA DÎKSHITA

---

EDITED BY

PANDIT S'IVADATTA

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKARAM JAVAJI

PROPRIETOR OF "JAVAJI DADAJI'S NIRNAYA-SAGARA" PRESS.

BOMBAY.

---

1893.

---

*Price 3 annas.*

काव्यमाला ३६.

श्रीमदप्पयदीक्षितप्रणीतं

# वृत्तिवार्तिकम् ।

जयपुरवासिपण्डितशिवदत्तशर्मणा,
परबोपाह्वेन पाण्डुरङ्गतनूभुवा
काशीनाथशर्मणा च
संशोधितम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९३



मूल्यं ३ आणकाः ।

# काव्यमाला ।

श्रीमदप्पदीक्षितविरचितं

## वृत्तिवार्तिकम् ।

विश्वं प्रकाशयन्ती व्यापारैर्लक्षणाभिधाध्वननैः ।
नयनैरिव हरमूर्तिर्विबुधोपास्या सरस्वती जयति ॥

वृत्तयः काव्यसरणावलंकारप्रबन्धृभिः ।
अभिधा लक्षणा व्यक्तिरिति तिस्रो निरूपिताः ॥
तत्र क्वचित्क्वचिद्दृद्धैर्विशेषानस्फुटीकृतान् ।
निष्टङ्कयितुमल्पाभैः क्रियते वृत्तिवार्तिकम् ॥

तत्र—

**शक्त्या प्रतिपादकत्वमभिधा ।**

सा त्रिधा—रूढिर्योगो योगरूढिश्च । [तत्र—]

**अखण्डशक्तिमात्रेणैकार्थप्रतिपादकत्वं रूढिः ।**

तन्मात्रेण प्रतिपादकत्वं च—अवयवार्थाप्रतिभासाद्वा, तत्प्रतिभासेऽपि तस्य प्रतिपाद्ये बाधाद्वा । यथा—

'यत्ते पदाम्बुरुहमम्बुरुहासनेड्यं
धन्याः प्रपद्य सकृदीश भवन्ति मुक्ताः ।
नित्यं तदेव भजतामतिमुक्तलक्ष्मी-
र्युक्तैव देव मणिनूपुरमौक्तिकानाम् ॥',

अत्र मणिनूपुरादिशब्दानां नावयवार्थप्रतिभासः, अतिमुक्तशब्दस्याव-यवार्थप्रतिभासेऽपि वासन्तीलक्षणे प्रतिपाद्ये तस्य बाध इत्येषां रूढिः । य-

१. मोक्षभाजः. २. मोक्षभाजो मौक्तिकानि च. ३. 'रूढिर्योगापहारिणी' इत्युक्तेः.

द्यपि 'अतिमुक्तलक्ष्मीर्वासन्तीमुकुलशोभैव मुक्तातिशायिनी संपद्' इत्यभेदाध्यवसायार्थमतिमुक्तशब्दस्यावयवार्थोऽपि विवक्षितः, तथापि तस्य वासन्तीगतत्वेनाप्रतिपादनात्तत्र रूढिरेव । एतदव्याप्तिवारणेनैव लक्षणेऽप्येकपदमर्थवत् ।

**अवयवशक्तिमात्रसापेक्षं पदस्यैकार्थप्रतिपादकत्वं योगः ।**

यथा—

'ऊर्ध्वं विरिञ्चिभवनात्तव नाभिपद्मा-
द्रोमावलीपदजुषस्तमसः परस्तात् ।
मुक्तौघमण्डितमुरःस्थलमुन्मयूखं
पश्यामि देव परमं पदमेव साक्षात् ॥'

अत्र विरिञ्चिभवननाभिपद्मरोमावलीत्यादिशब्दानां योगः ।

अवयवशक्तिमात्रेण प्रतिपादकत्वमपि—समुदायार्थाप्रतिभासाद्वा, तत्प्रतिभासेऽपि तस्यावयवशक्तिप्रतिपाद्येऽ[न]न्वयाद्वेति द्वेधा । तत्राद्यमुदाहृतम् । द्वितीयं यथा—

'अस्तु त्रयीमय तनुस्तव लम्बनाली-
रत्नैस्तथापि परिभूयत एव भानुः ।
सोढः सतां बत निशान्तमुपागताना-
मेवं तिरस्कृतिकृदीश्वर कः सुवृत्तैः ॥'

अत्र निशान्तशब्दस्य निकेतनरूपसमुदायार्थप्रतिभासेऽपि 'निशान्तं त्रियामावसानमुपगतानां सतां नक्षत्राणां तिरस्कृतिकृदन्तर्हितिकृत्, एवं गृहं प्राप्तानां सत्पुरुषाणां पराभवकृत्' इत्यभेदाध्यवसायार्थं तस्य विवक्षितत्वेऽपि त्रियामावसाने योग एव

**अवयवसमुदायोभयशक्तिसापेक्षमेकार्थप्रतिपादकत्वं योगरूढिः ।**

यथा—

'पक्षद्वयक्रशिमपोषविभाव्यमान-
चान्द्रायणव्रतनिषेवण एव नित्यम् ।

१. मौक्तिकानि. २. रूढिलक्षणे.

कुर्वन्प्रदक्षिणमुपेन्द्र सुरालयं ते
लिप्सुर्मुखाब्जरुचिमेष तपस्यतीन्दुः ॥'

अत्र सुरालयशब्दस्य 'सुराणामालयः' इत्यवयवशक्त्या समुदायशक्त्या च कनकाचले योगरूढिः। न च अस्य शब्दस्य कनकाचले रूढिरेव केवलास्तु, मा भूद्योगरूढिः, उदाहृतश्लोके तपश्चर्योत्प्रेक्षायाः प्रदक्षिणीक्रियमाणस्य कनकाचलस्यावयवशक्त्युपस्थाप्यदेवालयाभेदाध्यवसायेनापि निर्वाहात् इति वाच्यम् । तत्रैवावयवार्थसंभवेऽन्याभेदाध्यवसायरूपपरमुखनिरीक्षणायोगात् । तत्रैव यौगिकार्थप्रतिभासस्य सर्वसाक्षिकत्वाच्च । न च एवं सति देवागारसाधारणक्लृप्तावयवशक्तिमात्रेण कनकाचलेऽपि प्रवृत्त्युपपत्तेर्न तत्र समुदायशक्तिः कल्पनीया इत्यपि शङ्क्यम् । 'रत्नसानुः सुरालयः' इत्याद्यभिधानकोशस्मृतिपरम्परया विशिष्य तस्य तत्र समुदायशक्तेरपि सिद्धेः । अन्यथा देवतागार इव तत्र विशिष्यानुशासनानपेक्षणे तद्वैयर्थ्यापत्तेः । अत एवैतादृशपदे सति पुनः समुदायार्थवाचकपदप्रयोगे पुनरुक्तदोषोल्लासः । यथा—

'भद्राय भवतु भवतां भगवान्भजमानदैन्यतिमिररविः ।
दिवसारम्भविकस्वरनीरजनलिनाभिरामतरनयनः ॥'

यत्र योगरूढिमतोऽपि पदस्यावयवार्थशक्तिमूलप्रतीयमानार्थगर्भीकारेण तत्रैव विश्रान्तिः, तत्र समुदायार्थवाचकपदान्तरप्रयोगेऽपि न पुनरुक्तदोषोल्लासः । यथा—

'उद्यन्मृगाङ्करुचिकन्दलकोमलाना-
मुन्निद्रशोणनलिनोदरसोदराणाम् ।
प्राप्तुं तवाधररुचामवलोकनेन
नालं सहस्रनयनः स वृषापि तृप्तिम् ॥'

अत्र सहस्रनयनशब्दस्यावयवार्थशक्त्यावलोकनप्रकर्षसंभवप्रतीतेस्तत्रैव विश्रान्तिरिति पुनरिन्द्रवाचिपदप्रयोगः । यथा वा—

---

१. 'समुदाहृत' ख-ग.

'तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये॥'

अत्र पिनाकपाणिशब्दस्य शिवनाम्नोऽवयवार्थशक्त्या तदायुधसारत्वप्रतीतेस्तत्रैव तस्य विश्रान्तिरिति पुनर्हरपदप्रयोगः। ननु—'कुसुमायुधोऽपि' इत्यत्रावयवार्थशक्त्या तदायुधा(ध)सारत्वप्रतीतावपि कामवाचिपदान्तरं नोपात्तम् इति चेत्, न। तत्राप्युत्तमपुरुषाक्षिप्ताहंपदस्य विशेष्यवाचिनः सत्त्वादिति साहित्यचिन्तामणिकारः। वस्तुतस्तु—नायं नियमः, यत् 'अवयवार्थशक्तिमूलप्रतीयमानार्थविवक्षायां समुदायार्थवाचिपदान्तरं प्रयोक्तव्यम्' इति, किंत्वयमपि प्रकारोऽस्तीत्युदाहृतम्। तदप्रयोगे यथा—

'मन्ये निजस्खलनदोषमवर्जनीय-
मन्यस्य मूर्ध्नि विनिवेश्य बहिर्बुभूषुः।
आविश्य देव रसनानि महाकवीनां
देवी गिरामपि तव स्तवमातनोति॥'

अत्र 'वागीश्वरीपदादवयवार्थशक्त्या प्रतीयमानस्य विद्याविषये स्खालित्यापवादमितरवत्सरस्वती न सहते' इत्यर्थस्य वाच्यस्योपस्कारकतया विवक्षितत्वेऽपि 'वाचामधिदेवतापि यत्र भगवतः स्तोत्रे न पर्याप्तं सामर्थ्यं बिभर्ति, तत्र कथमन्येऽधिकुर्युः' इत्यर्थापत्त्यलंकारध्वननसत्त्वेऽपि पृथक्सरस्वतीवाचकपदप्रयोगः। एकावलीकृतापि विशेष्यस्य साभिप्रायत्वं परिकरालंकारलक्षणमभिधाय

'नरसिंह महीपाल कीर्तिस्त्रिपथगा तव।
न कस्य भवति श्लाघ्या पुनाना भुवनत्रयम्॥'

इति तदुदाहरणे भुवनत्रयपवित्रीकरणोपपत्त्यभिप्रायगर्भं त्रिपथगापदं विशेष्यमेव प्रयुञ्जानेन तत्प्रयोगानियमो दर्शितः। तस्मात् योगरूढिमतः पदस्य यौगिकार्थशक्तिमूलप्रतीयमानार्थगर्भाकारेण समुदायार्थवाचिपदप्रयोगाप्रयोगाभ्यां द्वैविध्यमेवादृतम्, न पुनस्तत्प्रयोगेनियमः।

---

१. '-योगे नि-' ख.

क्वचिद्योगरूढिमतः पदस्य विषयविशेषेऽवयवार्थानन्वयात्समुदायार्थमात्रे विश्रान्तिः । यथा—

'उल्लासयत्युदरबन्धनिबद्धदिव्य-
शोणाश्मरश्मिकलिकावलिरच्युतैषा ।
आगाम्यनेकशतकल्पविधातृगर्भ-
नाभ्युद्गताम्बुरुहकुड्मलपङ्क्तिशोभाम् ॥'

अत्राम्बुरुहपदस्य भगवन्नाभिपद्मेऽवयवार्थानन्वयाद्रूढिरेव ।

क्वचित्तु समुदायार्थानन्वयादवयवार्थमात्रे तत्र विश्रान्तिः । यथा—

'कह्लारकैरवमुखेष्वपि पङ्कजेषु
लोकेश यत्कमलमेव तथा प्रसिद्धम् ।
मन्येऽभिजात भवदास्यतुलास्य नेति
मर्मप्रकाशनमिदं विधिनैव क्लृप्तम् ॥'

अत्र पङ्कजपदस्य कुमुदकह्लारादिषु समुदायार्थानन्वयाद्योग एव ।

नैयायिकास्तु—पङ्कजादिशब्दरूपैकपदोपादानरूपान्तरङ्गप्रत्यासत्त्या[1] नाभिकमलकुमुदाद्यन्वयात्प्रागेव पङ्कजनिकर्तृत्ववैशिष्ट्येनोपस्थितस्य पद्मत्वस्य, पद्माश्रयत्वेनोपस्थितस्य पङ्कजनिकर्तृत्वस्य च नाभिकमलकुमुदाद्यन्वये नाकाङ्क्षा; न चाविशिष्टस्य तदन्वयविषयिणी शाब्दधीः, इति तदन्वयार्थं स्वतन्त्रपद्मत्वपङ्कजनिकर्तृत्वोपस्थितये पङ्कजादिपदस्य लक्षणैवाभ्युपगन्तव्या, न तु रूढिर्योगो वा । न च—प्रथमं योगरूढिभ्यां स्वार्थोपस्थाने पश्चान्नाभिकमलाद्यन्वयार्थं विरुद्धवृत्तिमूकीभावे तदितरवृत्त्यैव स्वतन्त्रपद्मत्वाद्युपस्थितेराकाङ्क्षादिसंभवान्न तदर्थमिह लक्षणा—इति वाच्यम्, केवलरूढ्यादिना स्वतन्त्रपद्मत्वाद्युपस्थित्यर्थं शब्दस्य पुनरनुसंधानकल्पनागौरवापत्तेः । लक्षणापक्षे तु नायं दोषः, पङ्कजनिकर्तृत्वसंवलितपद्मत्वरूपविशिष्टोपस्थितेर्विशेषणविशेष्यान्यतरोपस्थितिलक्षणद्वारत्वेन द्वारे सति द्वारिणः पुनरनपेक्षणात् । न च—शक्योपस्थितिर्लक्षणायामिव शक्योपस्थि-

१ 'रूपयान्तर' ख-ग.

त्यन्तरेऽपि द्वारम्। येन रूढ्यादिना स्वतन्त्रपद्मत्वोपस्थितावपि पुनरनुसंधानं न कल्प्येत—इत्याहुः।

इत्थमभिधा त्रिविधा निरूपिता। सा चानेकशक्तिकस्य शब्दस्य संयोगाद्यैर्नियम्यते। तथाहुः—

'संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥' इति।

अर्थः—प्रयोजनम्। प्रकरणं च वक्तृश्रोतृबुद्धिस्थता। लिङ्गं प्रयुक्तनानार्थपदवाच्यान्तरव्यावृत्तो धर्मः। शब्दस्यान्यस्य संनिधिर्नानार्थपदैकवाच्यसंसर्ग्यर्थान्तरवाचिपदसमभिव्याहारः। सामर्थ्यं कारणत्वम्। औचित्यर्हता। व्यक्तिः स्त्रीपुंनपुंसकम्। शेषं प्रसिद्धम्। तत्र—'शङ्खचक्रधरो हरिः' इत्यत्र शङ्खचक्रसंयोगेन हरिशब्दस्य भगवत्यभिधा नियम्यते। 'अशङ्खचक्रो हरिः' इत्यत्र तद्विप्रयोगेन। 'रामलक्ष्मणौ' इत्यत्र रामपदस्य लक्ष्मणसाहचर्याद्रघुपुंगवे। 'छायातपौ' इत्यत्र च्छायाशब्दस्यातपेन सह सहानवस्थानविरोधादनातपे। 'रामरावणयोरिव' इत्यत्र रावणेन सह वध्यघातकभावविरोधाद्रामपदस्य रामचन्द्रे। यत्तु—'रामार्जुनपदयोर्वध्यघातकभावविरोधाद्भार्गवकार्तवीर्ययोरभिधा नियम्यते—इत्युदाहरणम्, तन्न। रामपदस्य भार्गवेऽभिधानियमने सति तद्विरोधप्रतिसंधानेनार्जुनपदस्य कार्तवीर्येऽभिधानियमनम्, तस्मिंश्च सति तद्विरोधप्रतिसंधानेन रामपदस्येति परस्पराश्रयापत्तेः। तस्मादन्यतरपदस्य व्यवस्थितार्थत्व एव स्मृततद्विरोधप्रतिसंधानान्नानार्थपदस्याभिधानियमनमिति प्रागुक्तमेवोदाहरणमनुसर्तव्यम्। इदं तु शब्दान्तरसंनिधेरुदाहरणं भविष्यति। 'हरिं मोक्षाय भजत' इत्यत्र मोक्षरूपेणार्थेन हरिशब्दस्य भगवत्यभिधा नियम्यते। 'विवेश रामो दुर्धर्षं तापसाश्रममण्डलम्' इत्यत्र रामपदस्य प्रकरणाद्रघुवीरे। 'कुपितो भूभृत्' इत्यत्र कोपलिङ्गेन पर्वतव्यावृत्तेन भूभृदित्यस्य राजनि। संयोगोदाहरणे प्रसिद्धिप्राचुर्यम्, शङ्खादेरिन्द्रादावर्थान्तरेऽपि सं-

योगाविरोधात् । लिङ्गोदाहरणे तु सर्वथार्थान्तरव्यावृत्तिरिति भेदः । 'निषधं पश्य भूभृतम्' इत्यत्र जनपदविशेषसाधारणस्य निषधपदस्य पर्वतवाचिभूभृत्पदसंनिधानात्पर्वतविशेषे नियम्यते। भूभृत्पदस्य च राजसाधारणस्य पर्वतविशेषवाचिनिषधपदसंनिधिना पर्वते । न चान्योन्याश्रयः । नह्यत्र समभिव्याहृतशब्देन तदर्थप्रतिपादनमभिधानियमनायापेक्ष्यते, किं तु स्वार्थेन गृहीतसंसर्गेऽर्थे व्युत्पन्नो यः शब्दः, तत्समभिव्याहारमात्रम् । तथा च यथा संबन्धिदर्शनात्संबन्ध्यन्तरस्मृतिस्थले गृहीतसंबन्धस्य संबन्धिनो दर्शनमात्रं संबन्ध्यन्तरस्मरणायापेक्ष्यते, न तु तद्दर्शनानन्तरं तत्संबन्धस्मरणमपीति नान्योन्याश्रयः, तथेहापि निषधभूभृत्पदयोरभिधानियमनाय गृहीतस्वस्वार्थव्युत्पत्तिकभूभृन्निषधशब्दसमभिव्याहारमात्रमपेक्ष्यत इति तत्तदर्थप्रतिपादनस्यानपेक्षणान्नान्योन्याश्रयः । नन्वेवं 'शङ्खचक्रधरो हरिः' इत्यादावपि शङ्खचक्रादिशब्दान्तरसंनिधिनैवाभिधानियमनं भविष्यतीति व्यर्थं पृथक्संयोगाद्युदाहरणम्—इति चेत्, मैवम् । तत्र शङ्खचक्रादिशब्दानां नियतार्थतया श्रवणमात्रादर्थप्रतिपादकत्वेन तत्प्रतिपादितार्थसंयोगादिभिरभिधानियमनसंभवात् । 'शब्दान्तरसंनिधिरपि तत्रास्ति' इति चेत् । अस्तु, तथापि हरिशब्दाद्यभिधानियमनसमर्थे तदर्थसंयोगादिरूपसंनिहितसंबन्धेनान्तरङ्गे शङ्खचक्रादावुपस्थिते तत्रापि वाचकतया व्यवहितसंबन्धेन बहिरङ्गशब्दान्तरसंनिधिर्नोदाहरणत्वमर्हति । अतो यत्र 'निषधं पश्य भूभृतम्' इत्यादावुभयस्य नानार्थतया न कस्याप्यर्थस्य प्रथममुपस्थितिः, तत्रैव बहिरङ्गस्यापि तस्य नियामकत्वेनोदाहरणमिति न कश्चित्संकरः । यत्तु—नियतार्थशब्दसामानाधिकरण्यं शब्दान्तरसंनिधिः, तेन च 'देवस्य त्रिपुराराते:' इत्यत्र देवशब्दस्य शंकरे नियमनम्, तत्र त्रिपुरारातिशब्दस्य नियतार्थत्वात् इति, तदयुक्तम् । समभिव्याहृतशब्दस्य नियतार्थत्वे तत्प्रतिपादितलिङ्गादिनैव तन्नियमनात् । अन्यथा लिङ्गाद्युदाहरणेऽपि शब्दान्तरसंनिधेरेव नियामकत्वापत्तेः । न च 'सामानाधिकरण्ये शब्दान्तरसंनिधिः, वैयधिकरण्ये 'भूभृतः कोपः' इत्यादिरूपे लिङ्गादिकम्' इति भेदकथनम् ।

उभयत्र शब्दप्रतिपादितलिङ्गादेरेव नियामकत्वेनास्य भेदकथनस्य परिभाषामात्रत्वात्। 'व्यालो दानेन राजते' इत्यत्र व्यालदानपदयोरुभयोरप्यनियतार्थेत्वेऽपि वैयधिकरण्येऽपि परस्परसमभिव्याहारेण दुष्टगजमदजलयोरभिधानियमनस्य सर्वानुभवसिद्धत्वेनावश्यसंग्राह्यत्वात्तदसंग्रहेण लक्षणकथनस्यात्यन्तायुक्तत्वाच्च। तस्मादस्मदुक्तैव शब्दान्तरसंनिधेः प्रक्रियादरणीया। 'मधुना मत्तः कोकिलः' इत्यत्र कोकिलमदकारणत्वरूपेण सामर्थ्येन वसन्ते मधुशब्दस्याभिधा नियम्यते। 'भजत हरिं भवतापखिन्नाः' इत्यत्र भवतापहरणौचित्येन हरिपदस्य लक्ष्मीरमणे। अर्थोदाहरणे चतुर्थ्या कार्यत्वनिर्देशः, सामर्थ्योदाहरणे तृतीयया करणत्वनिर्देशः, औचित्योदाहरणे तदुभयानिर्देशेऽपि योग्यतामात्रेण समभिव्याहारलभ्यकार्यकारणभावावगमः, इति भेदः। 'क्षीरार्णवे हरिः शेते' इत्यत्र देशेन, 'प्रलये तिष्ठति हरिः' इत्यत्र कालेन च गरुडध्वजे हरिपदस्य नियम्यते। 'मित्रो भाति' इत्यत्र पुंव्यक्त्या तपने सुहृद्वाचिनो नपुंसकत्वात्। 'तिस्र एव सायाह्नस्योपसदः, द्वादशाहीनस्य' इति श्रुतावहीनपदस्य मध्योदात्तस्वरेणाहर्गणसाध्यसुत्याके द्वादशाहाख्यक्रतुविशेषे, 'अह्नः खः क्रतौ' इत्यनुशासनात्। 'हीनो न भवति' इति नञ्समासे सत्यहीनपदस्याद्युदात्तत्वात्। आदिशब्देनाभिनयोपदेशौ गृह्येते। अभिनयो विवक्षितार्थाकृतिप्रदर्शको हस्तादिव्यापारः। उपदेशो विवक्षितार्थस्य शृङ्गग्राहिकया निर्देशः।

'परारिसंदर्शितसंनिवेशौ परुत्पराभूतसरोजकोशौ।
इमावियन्तौ पुनरेषमस्ते कुचौ कियन्तौ परतो भवेताम्॥'

इत्यत्र तत्कालस्तनपरिमाणप्रदर्शकहस्तव्यापारेणेयत्पदस्य परिमाणविशेषे,

'इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्॥'

इत्यत्र 'इतः' इति स्वात्मनिर्देशेन तस्य वक्तरि परमेष्ठिन्यभिधा नियम्यते।

यत्र त्वनेकशक्तस्य शब्दस्याभिधानियामकमनेकत्राविशिष्टमर्थे, तत्र नान्यतरस्मिन्नभिधा नियम्यते। यथा—

---

१. 'मनेकत्र प्रविष्ट' क.

'येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयोगङ्गां च योधारयत् ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥'

अत्र शिवकेशवयोरपि स्तुत्यतया प्रकरणमविशिष्टम् । अतः—'ध्वस्तमनोभवेन नाशितमन्मथेन बलिजित्कायो विष्णोर्विग्रहः पुरेष्वस्त्रतां नीतः, यश्चोद्वृत्तशेषवासुकिप्रभृतिनागराजसंपादितहारवलयकृत्यः, यश्च गङ्गामधारयत्, यस्य शिरः शशिमदाहुरमराः स्तुत्यं नाम च हर इत्याहुः, अन्धकासुरक्षयकरः, स उमाधवस्त्वां सर्वदा पायात्' इति, 'अभवेन निःसंसारेण येन अनः शकटं ध्वस्तम्, येन च बलिजित्स्वस्य कायः पुरामृतमथने स्त्रीत्वं नीतः, यश्चोद्वृत्तं भुजङ्गं कालीयं हतवान्, रवे शब्दब्रह्मणि लयस्तद्रूप्यापत्तिरस्येति रवलयः, उद्वृत्तभुजङ्गान्हतवदारवलयं चक्रमस्येत्येकं पदं वा, अगं गोवर्धनं गां वराहावतारेण भूमिं च योऽधारयत्, यस्य स्तुत्यं नाम शशिमच्छिरोहर इत्याहुः शशिनं मथ्नाति यो राहुस्तच्छिरोहर इति, अन्धकानां राज्ञां क्षयकरो निवासकृत्, सर्वदो माधवस्त्वां पायात्' इति चार्थद्वयेऽप्यभिधैव व्यापारः । अत एवात्र श्लेषोऽलंकारः ।

ननु च यत्रानेकत्र प्रकरणाद्यविशिष्टम्, तत्र भवत्वनेकत्राप्यभिधाव्यापारः । यत्र प्रकरणस्य क्वचिदर्थेऽवस्थितत्वेऽप्यप्राकरणिकं शक्यान्तरं प्रतीयते, तत्र का गतिः । यथा—

'असावुदयमारूढः कान्तिमात्रक्तमण्डलः ।
राजा हरति लोकस्य हृदयं मृदुभिः करैः ॥'

इति चन्द्रोदयवर्णनप्रस्तावे । अत्र ह्यप्राकरणिको भूपतिरभ्युदयादिविशिष्टः प्रतीयते ।

अत्र प्राञ्चः—'तत्र शब्दशक्तिमूलो व्यञ्जनाव्यापार एव शरणम्, गत्यन्तराभावात् । न हि तस्य तत्राभिधा संभवति तस्याः प्रकरणेन नियन्त्रितत्वात् । नापि लक्षणा मुख्यार्थबाधाद्यभावात् । न चाभिधाया इव व्यञ्जनस्यापि प्रकरणेन नियन्त्रणे तेनापि न तन्निर्वाह इति वा-

च्यम्, तस्य धर्मिग्राहकमानेन तदनियम्यतयैव सिद्धेः अत एव काव्यान्तर्निविष्टस्य प्राकरणिककिंचिदर्थनियताभिधाव्यापारस्याप्यसभ्यपदार्थान्तरप्रत्ययहेतोः पदस्य हेयत्वम् । अन्यथा तत्राभिधाया इव व्यञ्जनव्यापारस्यापि प्रकरणेन नियन्त्रणेऽसभ्यार्थान्तरप्रत्ययासंभवात् 'यस्याननं योनिरुदारवाचाम्' इत्यादावश्लीलदोषो न स्यात् । तस्मात्संयोगादिभिरभिधाशृङ्खलिता यत्र कुण्ठतामेति, अर्थान्तरावगमने व्यञ्जनमेव क्षमं तत्र–' इति ।

वयं तु ब्रूमः—'असावुदयमारूढः–' इत्यादौ प्राकरणिकेऽर्थे प्राकरणिकवदप्राकरणिकेऽपि राजकरमण्डलादिशब्दानां परस्परान्वययोग्यनृपतितद्ग्राह्यधनदेशादिवाचकानां समभिव्याहाररूपमभिधानियामकमस्तीत्यर्थद्वयस्यापि प्राकरणिकत्व इव प्राकरणिकाप्राकरणिकरूपत्वेऽप्युभयत्राभिधैव व्यापारः, यथोक्तसमभिव्याहारस्यापि शब्दान्तरसंनिधिरूपत्वेन प्रकरणवदभिधानियामकत्वात् । यैस्तु शब्दान्तरसंनिधिरन्यथा निरुच्यते, तैरपि यथोक्तसमभिव्याहारेण नानार्थशब्देभ्योऽर्थप्रत्ययस्य सर्वसिद्धत्वेन तस्य तद्भेदेनापि नियामकत्वमास्थेयमेव । वस्तुतोऽयमेव शब्दान्तरसंनिधिरित्यप्युक्तम् । न चाप्राकरणिके उक्तरूपशब्दान्तरसंनिधिमात्रम्, प्राकरणिके तच्च प्रकरणं चेति नियामकाधिक्यात्तत्रैवाभिधा स्यादिति वाच्यम्, प्रकरणादीनामभिधानियामकत्वं हि नानार्थशब्दजन्यशक्यस्मृतौ तेषामन्यतमकारणत्वम् । यथोक्तम्—'शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः' इति । तथा च तेषु कस्यचिदपि समवधाने स्मृतिसामग्री पुष्कलैवेति किं तद्बाहुल्येन ।

यत्रैकमेव पदं नानार्थमप्राकरणिकेऽपि तात्पर्यवत् । यथा—

'करोति कंसादिमहीभृतां वधाज्जनो मृगाणामिव यत्तव स्तुतिम्[१] ।
हरे[३] हिरण्याक्षपुरःसरासुरद्विपद्विषः प्रत्युत सा तिरस्क्रिया ॥'

इत्यत्र हरिपदम् । तत्रापि समभिव्याहृतद्विपपदप्रतीतगजविरोधादिकमप्राकरणिके सिंहेऽप्यभिधानियामकमस्त्येव ।

---

१. 'काव्यान्तरनिविष्टस्य' ख. २. 'स्तवम्' ख. ३. 'हरेर्हिर' क.

यत्र तु 'यस्याननं योनिरुदारवाचाम्–' इत्यादावश्लीले नैतादृशं नियामकम्, तत्रापि बुभुत्सितार्थव्यासक्तस्य मनसस्तमुल्लङ्घ्यासभ्ये दुर्गन्धादौ प्रवृत्तिवत्प्रकरणनियन्त्रितस्यापि शब्दस्य तदुल्लङ्घ्यविषयस्वाभाव्यादश्लीले प्रवृत्तिरिति न क्वापि शक्तिविषये व्यक्तिरङ्गीकरणीया । यदि चैवंविधानि नियामकानि नाद्रियेरन्, तदोदाहृतस्थलेषु व्यञ्जनव्यापारोऽपि दुर्ग्रहः । तथा हि । प्रकरणादिकमुल्लङ्घ्य व्यञ्जनव्यापारेणाप्यर्थान्तरप्रत्ययो न सर्वत्र वक्तुं शक्यते, प्रकरणादीनामभिधानियामकत्वकल्पनस्यैव व्यर्थत्वापत्तेः । तद्धि नादृष्टार्थम्, किंतु 'सैन्धवमानय' इत्यादावेकार्थमात्रपरनानार्थशब्दस्थले अर्थविशेषस्मृतिव्यवस्थार्थं तत् । यदि तत्रापि व्यञ्जनव्यापारेणार्थान्तरप्रत्ययः स्यात्, तदा कथमेषा सिध्येत् । नह्यभिमतानभिमतक्षेत्रसाधारणस्य जलाशयस्याभिमतक्षेत्रगामिनीमेकां कुल्यां विधायानभिमतक्षेत्रगामिनः कुल्यान्तरस्यापि कल्पने जलस्याभिमतक्षेत्रैकगामित्वव्यवस्था कृता भवति । तथा च यत्र कवयितुश्चमत्कारायाप्राकरणिकेऽप्यर्थे तात्पर्यम्, यत्र वाश्लीलदोषः, तत्रैव व्यञ्जनाव्यापारोन्मेषः, न सर्वत्रेति तद्व्यवस्थासिद्धये तत्र तत्र नियामकान्यस्मदुक्तानि अन्यादृशानि वावश्यमादर्तव्यानि तेषां चाभिधानियामकत्वमेव वक्तुं शक्यमिति व्यर्थस्तत्र व्यक्तिकल्पनापरिश्रमः, दुर्वारश्च तत्र व्यक्तिवादिमतेऽप्यभिधाव्यापारः । तथा हि । यदि शक्तिरभिधा, निर्विवादमस्त्येवाप्राकरणिकेऽपि सा । यदि च काव्यप्रकाशिकाद्युक्तरीत्या शक्यार्थप्रतिपादकत्वरूपः शब्दव्यापारः, सोऽप्यस्त्येव । नहि तत्राप्राकरणिकशक्यप्रतिपत्तेः शब्दादन्यज्जनकम् । शक्तिग्रहमपेक्ष्य तत्प्रतिपादकत्वमभिधा इति चेत् । अ(य)त्राप्राकरणिकोऽर्थः, तत्रागृहीतशक्तिकस्याभिधया किं न प्रतीयते, येन स तत्र न स्यात् । ननु शक्त्या साक्षात्प्रतिपादकत्वमभिधा । साक्षादित्यविशेषणे मुख्यार्थशक्तिग्रहमपेक्ष्य तत्प्रतिपादनव्यवधानेन तत्संबन्ध्यर्थान्तरप्रतिपादनरूपाया लक्षणाया अप्यभिधात्वप्रसङ्गात् । तथा च प्रागेवानुवर्तमानेन[1] प्रकरणेन तत्प्रमेयोपस्थापनं शीघ्रभावीति तद्व्यवधानेनार्थान्तरप्रतिपादनं नाभिधा

---

१. 'प्रागेवार्थमनुवर्त' ख-ग.

इति चेत्, न। 'तद्विषयशक्तिग्रहमपेक्ष्य तत्प्रतिपादनमभिधा' इति लक्षणं विनैव साक्षात्त्वविशेषणं साधु। अनतिप्रसङ्गात्। तत्पदरूपेण पदभङ्गकृतपदान्तररूपेण वार्थान्तरप्रतिपादनव्यवधानाभावरूपसाक्षात्त्वविशेषणस्य गुरुत्वात्। तथाविशेषणे 'येन ध्वस्तमनोभवेन-' इत्यादौ धूर्जटिपक्षे—स्फुटपदसंबन्धितया प्रसिद्धिप्राचुर्येण च झटित्यर्थप्रतिपत्तिः, वैकुण्ठपक्षे—'येन ध्वस्तमनोभवेन-' इत्यादावस्फुटपदसंनिधि(बन्धि)तया 'शशिमच्छिरोहरः, अन्धकक्षयकरः' इत्यनयोरप्रयुक्तनिहतार्थत्वेनाप्रसिद्धतया च विलम्बेन प्रतिपत्तिरिति सर्वसिद्धत्वेन तत्राभिधाविषयेऽपि तदभावापत्तेः। प्रकृताप्रकृतोभयपरे यत्राप्रकृते प्रसिद्धतरम्, प्रकृतेऽप्रसिद्धतरं पदम्, तत्र प्रसिद्धिप्राचुर्येणाप्रकृतार्थप्रतीतेरेव प्राथमिकत्वेनाप्रकृतेऽभिधा, प्रकृते व्यक्तिः' इति वैपरीत्यापत्तेश्च। प्रकरणमुल्लङ्घ्यापि प्रसिद्धतरार्थस्यैव प्रथमं स्मृतेः। अत एव—'द्व्यर्थमप्रसिद्धेऽर्थे प्रयुक्तं निहतार्थकम्' इत्युक्तलक्षणस्य निहतार्थस्य काव्यदोषत्वमुपगम्यते। प्रसिद्धतराप्रकृतार्थप्रतीत्या प्रकृतार्थप्रतीतेर्व्यवधानात्। न च निहतार्थस्य दोषत्वात्तत्प्रयोगोऽर्थद्वयविवक्षास्थलेऽपि काव्ये न संभवति इति वाच्यम्, श्लेषयमकादिषु तस्य वृद्धैर्दोषत्वाभावस्योपपादितत्वात्[1]। 'अन्धकक्षयकरः,' 'राजा हरति लोकस्य', 'राजा राजार्चिताङ्घ्रिरनुपचितकलो यस्य चूडामणित्वम्' इत्यादिदर्शनाच्च। तस्माच्छब्दस्यार्थप्रतिपादनोपयोगितत्प्रत्यासत्तिरूपधर्मभेद एव वृत्तिभेदप्रयोजको न तु तद्भेदाभावः। प्रतिपादनगतसाक्षात्त्वव्यवहितत्वभेदे सत्यपि शक्तिशक्यसंबन्धरूपप्रतिपाद्यप्रत्यासत्तिभेदेनैवाभिधालक्षणयोर्भेददर्शनात्, तद्भेदाभावे प्रसिद्धाप्रसिद्धार्थगोचरशब्दश्लेषस्थले लक्षितलक्षणास्थले व्यङ्ग्यस्थले चार्थद्वयप्रतीत्योः साक्षात्त्वव्यवहितत्वभेदे सत्यप्यभिधालक्षणाव्यत्ययतिरिक्तवृत्त्यदर्शनाच्च, इत्यप्रयोजकस्याव्यवस्थापादकस्य च साक्षात्त्वविशेषणस्यायोगात् 'तद्विषयशक्तिग्रहमपेक्ष्य तत्प्रतिपादकत्वमेवाभिधा' इत्यप्रकृतेप्यर्थेऽभिधाव्यापारो दुर्वारः।

---

१. 'दोषत्वस्यापोदितत्वात्' ख.

नैयायिकास्तु—प्रसिद्धिप्राचुर्ये सति प्रकरणादिशून्यस्याप्यर्थस्य स्मृतेः, प्रसिद्ध्यभावे प्रकरणादिमतोऽप्यस्मृतेश्च, प्रकरणादिकं नाभिधानियामकम् । शक्तिग्रहसंस्कारपाटवमात्रनियम्यत्वात्तस्याः । किंतु लिङ्गविधया तात्पर्यग्राहकम् । अत एव 'हरिरस्ति' इत्यनारम्यवादश्रवणेऽपि हरिशब्दस्यार्यमानिलेन्द्रचन्द्रादयोऽर्था इत्यवधार्यते एव वक्तुः क्व तात्पर्यमिति नावधार्यते—इत्याहुः ।

तद्रीत्या न कथंचिदपि प्रकरणाप्रकरणादिनाभिधानियमनं शक्यशङ्कम् । तस्मात् प्रस्तुताप्रस्तुतोभयपरेऽपि प्रस्तुताप्रस्तुतोभयवाच्यार्थेऽभिधैव वृत्तिः । तदुपस्थितेषु च पदार्थेष्वाकाङ्क्षादिसहकारिवशादुभयविधवाक्यार्थप्रत्ययः, इत्यप्रस्तुतविषये न पदार्थप्रतीतये नापि वाक्यार्थप्रतीतये व्यक्तिरुपगन्तव्या । यत्तु प्राचामप्रस्तुते शक्तिमूलव्यञ्जनवृत्त्यभिधानम्, तदप्रस्तुतार्थप्रतीतिमूलके यथा 'उदयमारूढः—' इत्यादिविशेषणविशिष्टः पृथिवीपतिः स्वल्पैर्ग्राह्यधनैर्लोकस्य हृदयं रञ्जयति, एवं तथाभूतश्चन्द्रमा मृदुलैः किरणैः । इत्यादिरूपेण प्रतीयमाने उपमाद्यर्थालंकारे तदवश्यंभावदृढीकरणाभिप्रायेण । न तु तत्रापि वस्तुतो व्यञ्जनव्यापारास्तित्वाभिप्रायेण ।

'आच्छादितायतदिगम्बरमुच्चकैर्गा-
माक्रम्य च स्थितमुदग्रविशालशृङ्गम् ।
मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेन-
मुद्वीक्ष्य को भुवि न विस्मयते नगेशम् ॥'

इत्यादिना शब्दशक्तिमूलस्यालंकारध्वनेरेवोदाहरणत्वेन तैरपि लिखितत्वात् ।

'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।'

इति श्लेषापादितविशेषणसाधारण्यनिमित्तसमासोक्त्यलंकारोदाहरणे रागादिशब्दानामप्रस्तुतेऽप्यभिधावृत्तेरेव श्लेषव्यवहारेण स्फुटीकरणाच्च ।

न च अत्र स्वतोऽप्रस्तुतयोरपि कामिनोः प्रस्तुतशशिनिशावच्छेदे-

---

१. 'प्राचां प्र' क; 'प्राग्वामप्र' ख; 'प्राच्यामप्र' ग. २ 'रागेण' ख-ग. ३ 'च्छेदकत्वेनानन्वयात्तत्र' क.

कत्वेनान्वयान्न तत्र तयोः सर्वथैव प्रकरणासंभवः—इति वाच्यम्, 'विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः' इति लक्षणानुरोधेनाप्रस्तुतप्रतिपत्तेर्विशेषणसाम्याधीनत्वेनाप्रस्तुतस्य प्रकरणसंबन्धावगमात्प्रागेव तद्विशेषणेष्वभिधाया वाच्यत्वात् । प्रस्तुतोपमानत्वादिना यथाकथंचिद्धाविप्रकरणसंबन्धस्येहापि सद्भावाच्च । सर्वथाप्रस्तुतासंबन्धस्याप्रस्तुतस्य क्वापि कविविवक्ष्यमाणगोचरत्वाभावात् ।

नन्वेवम्—शब्दशक्तिमूलस्यालंकारध्वनेः 'आच्छादितायतदिगम्बरम्—' इत्याद्युदाहरणसत्त्वेऽपि तन्मूलो वस्तुध्वनिर्लुप्येत, निरलंकारेऽप्रस्तुतार्थ एव वस्तुध्वनेरुदाहरणीयत्वात्, तत्र च त्वयाभिधाङ्गीकारात्—इति चेत्, न। यत्राप्रस्तुतेऽर्थेऽभिधयैव प्रतिपाद्यमाने तन्मूलमनभिधेयं वस्तु प्रतीयते तत्र तदङ्गीकारात् इति । यथा—

'शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम् ।'

इति । अत्र ह्यशनिशब्देन प्रस्तुताद्वज्रादन्यस्मिन्समभिव्याहृतशनिविरुद्धरूपेऽप्यर्थेऽभिधयैव प्रतिपाद्यमाने 'विरुद्धावपि त्वदनुवर्तनार्थमेकं कार्यं कुरुतः' इत्युपश्लोक्यस्य प्रभावातिशयः प्रतीयते । इत्थमेव प्राचीनैरपि शब्दशक्तिमूलो वस्तुध्वनिरुदाहृतः ।

ननु—

'भ्रमिमरतिमलसहृदयतां प्रलयं मूर्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥'

इत्यत्र विषपदेनाप्रस्तुतं गरलं व्यङ्ग्यं वाच्यस्य 'जलद एव भुजगः' इति रूपकस्य सिद्धिकृदिति वाच्यसिद्ध्यङ्गं गुणीभूतव्यङ्ग्यमुदाहरता मम्मटाचार्येणाप्रस्तुते शक्येऽपि शब्दशक्तिमूलो वस्तुध्वनिरुक्तः । सत्यम् । अप्रस्तुतार्थप्रतीतिमूलतया प्रतीयमानयोर्वस्त्वलंकारयोर्व्यक्त्यवश्यंभावदार्ढ्यायाश्रितम् 'अप्रस्तुतार्थेऽपि व्यक्तिः' इति प्रौढिवादमात्रमवलम्ब्य तत्प्रवृत्तमिति नात्राभिनिवेशः कार्यः ।

---

१. 'प्रक्र[त]भावा' ख; 'प्रस्तुतभावा' ग. २. 'तत्सत्यम्' ग.

ननु—एवं प्रस्तुतार्थपर्यालोचनालभ्ययोरेव वस्त्वलंकारयोर्व्यक्त्युपगमे तत्रार्थशक्तिमूलैव व्यक्तिर्भवेदिति पृथगर्थशक्तिमूलध्वनेः शब्दशक्तिमूलो न स्यात्—इति चेत्, मैवम्। तथात्वेऽपि प्रस्तुताप्रस्तुतोभयसाधारणशब्दसापेक्षतया प्रस्तुतमात्रापरपर्यायशब्दान्तपरिवृत्त्यसहिष्णुत्वेन ततस्तस्य पृथग्व्यवस्थितेः एवमन्येऽप्यप्रस्तुतशक्ये व्यक्त्यनुपगमे संभाविताः क्षुद्रोपद्रवा निरसनीयाः॥

इत्यप्पदीक्षितविरचिते वृत्तिवार्तिके मुख्यवृत्तिनिर्णयो नाम प्रथमः परिच्छेदः।

---

अथ लक्षणा निर्णीयते।

सा च मुख्यार्थसंबन्धेन शब्दस्य प्रतिपादकत्वम्।

तत्सादृश्येन प्रतिपादकत्वरूपा गौण्यपि लक्षणाप्रभेद एव, तत्सदृशेऽपि तन्निरूपितसादृश्याधिकरणत्वपरम्परासंबन्धसत्त्वात्। नहि 'साक्षात्संबन्धे विशिष्टबुद्धियोग्यसंबन्धे वा सत्येव लक्षणा' इति नियमः, चक्षुरादेर्घटनैत्यादिषु संयुक्तसमवायादिवद्विशिष्टबुद्ध्ययोग्यस्य परम्परासंबन्धस्यापि प्रत्यासत्तित्वोपपत्तेः, व्यतिरेकलक्षणास्थले तन्निरूपितविरोधाधिकरणत्वादिपरम्परासंबन्धमात्रेण तादृशेन लक्षणाक्लृप्तेश्च। एतेन—सादृश्यं न संबन्ध इति गौणी लक्षणातो भिन्ना, विशिष्टधीयोग्यस्यैव संबन्धत्वात्। संयोगे सति 'दण्डी देवदत्तः' इतिवत्सत्यपि सादृश्ये 'सिंहवान्देवदत्तः' इति विशिष्टबुद्धेरदर्शनान्—इति निरस्तम्। विशिष्टबुद्ध्यनियामकपरम्परासंबन्धमात्रस्य प्रत्यासत्तित्वोपपत्तेस्तावता लक्षणाक्लृप्तेश्च दर्शितत्वात्।

तस्मात्—सादृश्यगर्भतदन्यसंबन्धनिमित्ततया गौणी शुद्धा चेति लक्षणाया एव द्वैविध्यम्।

इयं च द्विविधापि लक्षणा प्रत्येकं द्विविधा—निरूढलक्षणा फललक्षणा च। रूढितुल्यतया निरूढलक्षणा। विवक्षितार्थान्तरद्योतनफला फललक्षणा। आद्या यथा—

'लावण्यसागरभुवि प्रणयं विशेषा-
दुग्धाम्बुराशिदुहितुस्तव तर्कयामि।

---

१. 'एवमप्रस्तु' ग. २ 'शब्दमूलो' ख-ग. ३. 'मात्रपर' ख. ४ 'इति वृत्ति' ख-ग.

यत्तां बिभर्षि वपुषा निखिलैः प्रतीकै-
रन्यां तु केवलमधोक्षज वक्षसैव ॥'

अत्र लावण्यशब्दस्य लवणत्ववाचिनो हृदयंगमत्वसादृश्यात्सुषमाविशेषे रूढिलक्षणा । एवमालेख्यगजादौ गजादिशब्दस्यापि रूढिलक्षणानुसंधेया । इदं गौण्या उदाहरणम् । शुद्धा यथा—

'क्वणद्द्विरेफावलिनीलकङ्कणं प्रसार्य शाखाभुजमाम्रवल्लरीम् ।
कृतोपगूढा कलकण्ठकूजितैरनामयं पृच्छति दक्षिणानिलम् ॥'

अत्र द्विरेफशब्दस्य 'द्वौ रेफौ यस्य' इति व्युत्पत्त्या भ्रमरशब्दवृत्तेस्तद्वाच्ये रूढिलक्षणा । एवं त्वगादिशब्दानां त्वगिन्द्रियादिष्वपि शुद्धा रूढिलक्षणा द्रष्टव्या ।

(फललक्षणा यथा—) जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा । सारोपा साध्यवसाना च । शुद्धा च गौणी च । इत्येवं सप्तविधा फललक्षणा ।

जहल्लक्षणा यथा—

'त्वत्पादपद्मसुषमानुकृतिक्षमाणि
प्राप्तं प्रवालपदभाञ्जि विभूषणानि ।
वल्कावृता धृतजटाः सुरदीर्घिकायां
कल्पद्रुमाः कति गिरीश तपश्चरन्ति ॥'

अत्र सुरदीर्घिकापदस्य कल्पद्रुमाधिकरणत्वयोग्ये तत्तीरे लक्षणा । मुख्यार्थस्य तदधिकरणत्वेनान्वयाभावाज्जहल्लक्षणा । कल्पद्रुमाणां तपश्चर्योत्प्रेक्षोपस्कारकं तीरस्यातिशयितपावनत्वद्योतनं फलम् ।

एवं 'गङ्गायां घोषः' इति प्रसिद्धोदाहरणमप्यनुसंधेयम् । तत्र गोस्वामिनः प्रीतये तीरस्याधिकशैत्यद्योतनं फलम् ।

व्यतिरेकलक्षणापि जहल्लक्षणाप्रभेद एव । यथा—

'उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे सुखितमास्स्व ततः शरदां शतम् ॥'

---

१. 'तत्राद्या त्रिविधा—शुद्धैव सारोपा साध्यवसाना च । फललक्षणा यथा—' क.
२. 'यथा मास्ति' ग.

अत्रापकारिण्यन्वयायोग्ये उपकृतादिपदैः स्वार्थविरुद्धं लक्ष्यते । 'त्वयापकारे क्रियमाणेऽपि मयैवं प्रियमेवोच्यते' इति स्वसाधुत्वद्योतनं फलम्।

अजहल्लक्षणा यथा—'कुन्ताः प्रविशन्ति, यष्टयश्च' इति । अत्र कु[१]न्तादिपदस्य तद्वत्सु पुरुषेषु लक्षणा । कुन्तादेरपि पुरुषसाहित्येन प्रवेशक्रियान्वयादजहल्लक्षणा । तेषां निर्दयप्रहर्तृत्वादिद्योतनं फलम् ।

ग्रामैकदेशदाहादौ सति 'ग्रामो दग्धः, पुष्पितं वनम्' इत्यादिप्रयोगे ग्रामादिपदस्य स्वार्थैकदेशपरित्यागेन तदेकदेशे वृत्तेर्जहदजहल्लक्षणा । दग्धभूयस्त्वादिद्योतनं फलम् ।

सारोपा यथा—

'नाथ त्वदीयमकलङ्कमिमं मुखेन्दु-
मापीय तृप्यति सदा वसुधा यतस्ते ।
तेनैव[२] किं नैवसुधारसगोचरोऽभू-
दिन्दुः कलङ्कमलिनीकृतमध्यभागः ॥'

अत्रेन्दुशब्दस्य मुखे लावण्यादिसादृश्याद्गौणसारोपलक्षणा । ताद्रूप्यप्रतीतिः फलम् । एवं 'गौर्वाहीकः, मुखं कमलम्' इत्यादिव्यासेऽपि गौणसारोपलक्षणा द्रष्टव्या ।

गौणसाध्यवसानलक्षणा यथा—

'नाभेरभूत्तव चतुर्भुज नान्तरिक्षं
यन्नाभिरेव यदुनेतरियं ततोऽभूत् ।
अन्योन्यसंश्रयपराहतिदूषितं य-
दाह श्रुतिस्तदविमृश्य किमर्थतत्त्वम् ॥'

अत्रान्तरिक्षपदस्य भगवदवलग्ने सूक्ष्मत्वसादृश्याद्गौणसाध्यवसानलक्षणा। सर्वथैवाभेदप्रतिपत्तिः फलम् । विषयस्य[३] विषयिभेदेनानपह्नुतेन[४] तद्रूपोपरक्तताप्रतीतिस्ताद्रूप्यप्रतिपत्तिः, विषयस्य विषयिणैवाभेदप्रतीतिः सर्वथैवाभेदप्रतिपत्तिः, इति सारोपसाध्यवसायलक्षणाफलयोर्भेदः । विषयविष-

१. 'अत्र भीतिपलायनवाक्ये कुन्ता' ख-ग. २. 'तव' क. ३. 'विषयस्य' न, ख-ग. ४. 'पह्नवेन' ख-ग.

यिवाचकयोर्द्वयोरपि निर्देशे आरोपः, विषयिपदमात्रस्य विषयलाक्षणिकतया निर्देशोऽध्यवसायः, इत्यारोपाध्यवसाययोर्भेदः।

ननु—सारोपलक्षणोदाहरणे 'मुखेन्दुः' इत्यादाविन्द्वादिपदस्य मुखादौ न मुखत्वादिना लक्षणा, मुखपदस्यापि सत्त्वेन पौनरुक्त्यापत्तेः। नापीन्दुगतलावण्यादिगुणेन अन्यगुणस्यान्यत्र प्रवृत्तिनिमित्तत्वायोगात्। नापि मुखगतलावण्यादिगुणेन, मुख्यार्थसंबन्धरहितगुणमुखेन लक्षणायोगात्। मैवम्। मुखचन्द्रोभयानुगतलावण्यसामान्यादिमुखेन लक्षणोपगमे दोषद्वयस्याप्यसंस्पर्शात्। इदमेवाभिसंधायोक्तं वृद्धैः—'लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता' इति।

शुद्धसारोपलक्षणा यथा—

'आपादमाचिकुरभारमशेषमङ्ग-
मानन्दसारमरविन्ददृशामसीमम्।
अन्तर्मम स्फुरतु संततमन्तरात्म-
न्नम्भोजलोचन तव श्रितहस्तिशैलम्॥'

अत्र भगवदङ्गेष्वानन्दकारित्वेनानन्दपदस्य सारोपलक्षणा। आनन्दकरणे इतरवैलक्षण्यद्योतनं फलम्। आनन्दकारिणि विषयनिगरणेन 'आनन्दोऽयम्' इति प्रयोगे साध्यवसायलक्षणा। आनन्दव्यभिचारद्योतनं फलम्। एवं शुद्धा पञ्चविधा, गौणी द्विविधा, इति सप्तविधा फललक्षणा।

ननु—गौण्यामपि जहदजहल्लक्षणाभेदौ संभवतः 'मुखं कमलम्, गौर्वाहीकः' इत्यादौ जहल्लक्षणा तावत्स्फुटैव। अजहल्लक्षणापि गोबाहीकोभयविषये 'गाव एते समानीयन्ताम्' इत्यादौ दृश्यते। अतः कथं द्विविधैव गौणी। उच्यते—मुख्यार्थसादृश्येन लक्षणा गौणी। न च तत्रैव तत्सादृश्यमस्ति। येन मुखेऽपि गौणी वृत्तिः स्यात्। शुद्धा त्वजहल्लक्षणा 'कुन्ताः प्रविशन्ति' इत्यादौ विशेषणवाचिनो विशिष्टे संभवति विशिष्टविशेषणयोरेकदेश्येकदेशभावरूपसंबन्धसत्त्वात्। अतो 'गाव एते समानीयन्ताम्' इत्यादावभिधालक्षणाभ्यामेवार्थद्वयप्रतिपादनं 'गङ्गायां जलं घोषश्च तिष्ठति'

त्यत्रेवेति न गौण्या जहदजहल्लक्षणाभेदसंभवः । तस्मात्सैव लक्षणाभेदा इति । इत्थमयं चिरंतनैः प्रदर्शितो लक्षणाविभाग इति ।

अत्रेदं प्रतिभाति—शुद्धासु साध्यवसायलक्षणाभेदैकथनमयुक्तम्, परार्थे स्वसमर्पणस्याविशेषेण तस्य जहल्लक्षणानतिरेकात् । नहि तदविशेषेऽपि सारोपलक्षणायां विषयवाचकसामानाधिकरण्यकृतवैचित्र्यान्तरमस्ति येन तद्वदेव जहल्लक्षणातः पृथगुदाह्रियेत ।

ननु—'कार्यकारणभावसंबन्धेन वृत्तिः इत्यत एव पृथक्त्वमस्तु, कार्यकारणभावातिरिक्तेन गङ्गातीरादिगतसंयोगादिसंबन्धेन वृत्तौ जहल्लक्षणा' इत्यसंकरोपपत्तेः । मैवम् । 'राजकीयः पुरुषो राजा, इन्द्रार्था स्थूणा इन्द्रः, अतक्षायं तक्षा, अग्रहस्तोऽयं हस्तः' इति स्वस्वामिभावतादर्थ्यतात्कर्म्यावयवावयविभावेष्वपि कार्यकारणभाव इव सारोपाध्यवसायलक्षणयोराकरग्रन्थेषूदाहरणादाश्रयाश्रयिभावसंबन्धेऽप्यलंकारसुधानिधावुदाहरणाच्च वैचित्र्यान्तराभावेऽपि संबन्धभेदमात्रेण विधान्तरोपगमे संबन्धभेदान्तरमवलम्ब्यापि विधान्तरोपवर्णनस्य प्रत्याख्यातुमशक्यतया सप्तविधत्वनियमासामञ्जस्यप्रसङ्गाच्च ।

ननु—साध्यवसायलक्षणोदाहरणेष्वभेदाभिव्यक्तिरस्ति, 'अयमानन्दः, अयं राजा' इत्यादावानन्दराजाद्यभेदाभिव्यक्तिपूर्वकमेवानन्दाव्यभिचारित्वानुल्लङ्घ्यशासनत्वादिफलप्रतीतेः, अतो व्यङ्ग्यवैचित्र्येण भेदोऽस्तु इति चेत्, न । जहल्लक्षणोदाहरणेऽपि तीरे प्रवाहाभेदाभिव्यक्तिपूर्वकमेव तत्र तद्गतातिशायितशैत्यपावनत्वादिफलप्रतीतेः । तीरे प्रवाहतादात्म्यप्रतीत्यभावे तत्र प्रवाहगतातिशयितशैत्यादेः प्रत्ययासंभवात् । नहि तीरे गङ्गासंबन्धप्रयुक्तं तद्गतस्वाभाविकशैत्यादिद्योतनमेव लक्षणाफलम्, येन गङ्गादिसंबन्धितीरत्वेन लक्षणयैव तल्लभ्यते इति नाभेदाभिव्यक्तिरङ्गीक्रियते सत्यपि मुख्ये गङ्गातीरादिपदे स्वायत्ते च शब्दप्रयोगे मुख्यप्रयोगादपि

---

१. 'इत्यत्रान्वेति' ख-ग. २. 'प्रभेद' ख-ग. ३. 'संबन्धे' क. ४. 'वर्णनस्यापि' ख-ग. ५. 'शैत्यपावनत्वा(दे): प्र' ख; 'शैत्यपावनत्वप्रत्य' ग.

लम्भ्यस्य लक्षणाफलत्वायोगात्। काव्यसरणौ—'लक्षणायां काव्यशोभातिशयाधायकतयाप्यधिकं स्रोतुकामस्तस्य प्रवाहतादात्म्यप्रतिपत्त्या तद्गतातिशयितपावनत्वद्योतनाय तस्मिन्गङ्गापदं प्रयुङ्क्ते' इति दर्शनाच्च। अतो जहल्लक्षणायामप्यभेदाभिव्यक्तिरविशिष्टा। उक्तं च काव्यप्रकाशिकायाम्—'तटादीनां गङ्गादिशब्दप्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसंप्रत्ययः' इति। रत्नाकरेणाप्युक्तम्—'स्रोतस्तीरयोरेकशब्दबोध्यत्वेन तादात्म्यप्रतीतेः स्रोतोधर्माः शैत्यपावनत्वादयस्तीरे प्रतीयन्त इति प्रयोजनसिद्धिः' इति। अतः साध्यवसायलक्षणायाः फलकृतोऽन्यकृतो वा न जहल्लक्षणातो भेदः संभवति इति न तदुदाहरणपार्थक्यं[1] युक्तम्। तथा सारोपलक्षणोदाहरणे उपमानोपमेयानुगतसाधारणधर्ममुखेन लक्षणा इत्ययुक्तम्। तथासति तत्र साधारणधर्मस्यापि पदान्तरेणोपादानं तत्र पौनरुक्त्यापत्तेः। यथा—

'ताराभिरामपरिणाहलसत्सिताभ्रं
तापिच्छमेचकमुरःशरदन्तरिक्षम्।
प्राप्यैव देव तव कौस्तुभपूर्णचन्द्रः
पूर्णां बिभर्ति पुरुषोत्तम कान्तिरेखाम्॥'

अत्र हि वक्षोन्तरिक्षयोः साधारणः परिणाहित्वमेचकत्वादिधर्मोऽपि पृथगुपात्त एव। 'उपात्तधर्मातिरिक्तधर्ममुखेन लक्षणास्तु' इति चेत्, न। उपात्तमेचकत्वादिव्यक्त्यतिरिक्तसामान्यधर्मास्फुरणेऽपि सहृदयानां परिपूर्णवाक्यार्थप्रतीतिदर्शनाद्व्यत्वादिसामान्यधर्मस्य कवितानङ्गत्वात्। अन्ततः कवयितुरप्येतादृशस्थलेषूपात्तधर्मातिरिक्तधर्मगर्भीकाराभावाच्च।

ननु—इह मा भूत्सारोपलक्षणा। 'उर एव शरदन्तरिक्षम्' इति मयूरव्यंसकादिसमासोपगमे हि सा भवति। किंतु—'उरः शरदन्तरिक्षमिव' इत्युपमितसमासोऽस्तु। तत्र च विग्रहवाक्यस्थो लुप्त इवकारः सादृश्यं प्रतिपादयतीति नोपमानवाचकस्योपमेये लक्षणा' इत्यालंकारिकाणामभ्युपगमः। तत्र तैर्लुप्तोपमाङ्गीकारात्। इति न कश्चिद्दोषः इति

1. 'पार्थक्ययुक्तम्' ख-ग.

चेत्, न । मेचकत्वादिसामान्यस्य शब्दोपात्ततयोपमितसमासासंभवात् । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति सामान्याप्रयोगे एव तत्समासानुशासनात् । आलंकारिकैरपि—'सामान्यप्रयोगे सत्युपमाबाधकसत्त्वात्सारोपलक्षणामूलको रूपकालंकारः । नतूपमालंकारः' इत्यभ्युपगमात् । उपमितसमासे धर्मवाचकलुप्तोपमालंकारस्यैव तैरुदाहरणाच्च । सामान्यधर्मप्रयोगेऽप्युपमितसमासाङ्गीकारे हि केवलवाचकलुप्तापि तत्रोदाह्रियेत ।

नन्वेवं साधारणधर्मप्रयोगे सादृश्यमुखेन लक्षणास्तु तद्वाचकस्य यथेववादेरप्रयोगेण पौनरुक्त्याप्रसङ्गात् । तत्प्रयोगे उपमानवाचकस्य सादृश्यप्रतियोगिभूतस्ववाच्यपरतयोपमेयलक्षणाया अवाच्यत्वात्—इति चेत्, न । तथासति सादृश्यस्य शब्दोपात्तत्वेनोपमालंकारस्य प्राप्त्या 'सारोपलक्षणायां रूपकादिरलंकारः, नोपमा' इत्यलंकारविभागासामञ्जस्यप्रसङ्गात् । न हि सादृश्यस्य वाच्यत्व एवोपमा, 'कमलसुहृन्मुखम्' इत्यादौ सुहृदादिपदेन लक्षणायामप्युपमासंप्रतिपत्तेः । अपि च—'पादाम्बुजम्' इत्यादौ व्याघ्रादेः समासेनोपमायाः, मयूरव्यंसकादिसमासेन रूपकस्य च संभवेन सर्वत्रानवधारणे प्राप्ते यत्र

'पादाम्बुजं भवतु वो विजयाय मञ्जु
मञ्जीरशिञ्जितमनोहरमम्बिकायाः ।'

इत्यादौ पादे संभवन्मञ्जीरयोगादिकं निबध्यते, तत्र तदानुगुण्यात्पूर्वपदार्थप्रधानेन व्याघ्रादिसमासेनोपमालंकारः । यत्र तु

'यस्यानिशं दिविषदश्चरणारविन्द-
मुत्तंसयन्त्यमितभक्तिभरावनम्राः ॥'

इत्यादावरविन्दकार्यमुत्तंसनादिकं निबध्यते, तत्र तदानुगुण्यादुत्तरपदार्थप्रधानेन मयूरव्यंसकादिसमासेन रूपकालंकारः, इति व्यवस्था सर्वैरपि प्रतिपाद्यते । न च—इयं व्यवस्था 'चरणारविन्दम्' इत्यादिरूपकस्थलेष्वरविन्दादिपदानामरविन्दत्वाद्याकारमपहायारुणिमादिसाधारणधर्ममुखेन तन्नि-

१. 'वाचकासत्त्वा' ख-ग. २. 'सामान्यधर्म' क. ३ 'तत्तत्प्रयोगे' ख-ग. ४. 'सादृश्यश' क. ५. 'सादृश्यवाच्यत्व' क.

बन्धनसादृश्यमुखेन वा चरणादिलक्षकत्वे युज्यते। तथा सत्युत्तरपदार्थस्यारुण्यसादृश्यगुणस्य प्राधान्यादियोगेन मयूरव्यंसकादिसमासाश्रयणेऽपि व्याघ्रादिसमासाश्रयण इव पूर्वपदार्थचरणस्यैव प्राधान्यापत्त्योत्तंसनानुगुण्यस्य विरहतौल्यापत्तेः। गुणजात्योर्जातिप्राधान्यस्य नीलोत्पलादौ व्यवस्थितेः। उत्तरपदार्थस्य प्राधान्येऽप्यरविन्दजातेरिवारुण्यसादृश्यादिगुणस्योत्तंसनानुगुणत्वाभावाच्च। तस्मात्—'सारोपलक्षणोदाहरणेषु साधारणधर्मादिमुखेन लक्षणा—' इत्ययुक्तम्। तथा—'ताद्रूप्यप्रतीतिरत्र फलम्—' इत्यप्ययुक्तम्। सामान्यधर्ममुखेन सादृश्यमुखेन वा लक्षणोपगमे ताद्रूप्याभिव्यक्त्ययोगात्। तथा हि 'कान्तिमन्मुखम्,' 'चन्द्रसदृशं मुखम्' इत्यादिरर्थः संपद्यते। न चैतावता ताद्रूप्याभिव्यक्तिः, 'कान्तिमन्मुखम्' इत्यादिप्रयोगेऽपि तत्प्रसङ्गात्। न च—'गङ्गायां घोषः' इत्यादौ स्रोतस्तीरयोरभेदाध्यवसायवन्मुखचन्द्रयोरेकशब्दबोध्यतया केवलशब्दशक्तिमूलव्यञ्जनव्यापारेण ताद्रूप्याध्यवसाय इति नातिप्रसङ्गः—इति वाच्यम्, तदा मुखकान्तिमतोरेव ताद्रूप्याभिव्यक्तेः संभवेन 'वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरुज्जृम्भते' इत्यादावानुभाविकस्य मुखत्वोपरक्तचन्द्रताद्रूप्यप्रत्ययस्याक्लिष्टसमर्थनासंभवात्। तथा—'मुखं कमलम्' इत्यादिव्यासेऽपि सर्वत्र विषयविषयिपदयोः सामानाधिकरण्ये सारोपलक्षणा इत्यप्ययुक्तम्।

'विद्वन्मानसहंस वैरिकमलासंकोचदीप्तद्युते
दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वानर।
सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो
साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः॥'

इत्यत्र हंसादिशब्दानां वर्ण्ये राजनि प्रत्यासत्तिरूपमुख्यसादृश्याप्रतीत्या लक्षणासंभवात्। तथा हि—विदुषां मानसं हृदयमेव मानसं सर इत्यादि श्लेषभित्तिकाभेदाध्यवसायलभ्यमानसवासित्वादिसाधारणधर्मनिबन्धनमेव तत्र सादृश्यं वाच्यम्। तदन्यमुखकमलादिवत्प्रसिद्धसादृश्यस्याभावात्। न च—

१. 'सादृश्यादिगुणस्य' ख-ग. २. 'प्राधान्यायोगेन' ख-ग. ३. 'नुगुणस्य' क. ४. 'सादृश्यप्रतीत्या' ख-ग.

तेन सादृश्येन लक्षणा संभवति, तल्लम्भकस्य श्लेषस्य रूपकोत्थाप्यतया रूपकापेक्षलक्षणादशायां तस्य बुद्धिपथानारोहात् । न च—श्लेषस्यैव प्राथम्यं किं न स्यात्—इति वाच्यम्, रूपकं विना कवेरर्थद्वयविवक्षाया-मिह गमकाभावेन श्लेषानिवृत्तेः । अभिधायाः प्रकरणनियम्यत्वपक्षे प्राचीनाभिमते रूपकात्प्राक्प्रकरणसंबन्धरहितसारोपलक्षणार्थान्तराभिधानस्यैवासंभवात् ।

'रूपकं पूर्वसंसिद्धं श्लेषं तज्ज्ञापयेद्यदि ।
तदा रूपकमेव स्यादन्यथा श्लेष इष्यते ॥'

इति श्लेषरूपकयोर्विभागं व्यवस्थापितवता चक्रवर्तिनाप्यस्मिन्नुदाहरणे रूपकोपवर्णनेनात्र श्लेषपाश्चात्यत्वस्यास्फुटीकरणाच्चेति । अत्रेदं तत्त्वम्—'विद्वन्मानसहंस—' इत्यादौ हंसादिपदानां वर्ण्ये राजनि लक्षणा नाङ्गीकर्तव्या सामानाधिकरण्येन वर्ण्यस्य राज्ञः प्रसिद्धहंसजातीयादिभिरभेदस्य वाक्यार्थविधयैव[1] प्रतीत्युपपत्तेः। न च—एवमभेदप्रत्ययसंभवेऽपि ताद्रूप्यप्रत्ययो न लक्षणां विना सिध्येत्। स एव च विषयविषयिपदसामानाधिकरण्यस्थले सर्वत्र विवक्षितः इति वाच्यम्, तत्र मानाभावात् । 'ऊर्ध्वं विरञ्चिभवनात्तव नाभिपद्मात्' इत्यादौ विषयविषयिपदसामानाधिकरण्येऽप्येवकारसाक्षात्पदाभ्यामुरःस्थले प्रसिद्धपद्मपदाभेदविवक्षाया एव स्फुटीकरणाच्च। न च—एवं 'विद्वन्मानसहंस' इत्यादावतिशयोक्तिरेव स्यात् 'विषयस्य विषयिताद्रूप्ये रूपकम्, विषय्यभेदेऽतिशयोक्तिः' इति व्यवस्थितेः । तथा च—'विषयविषयिसामानाधिकरण्यस्थले रूपकम्, विषय्यभेदमात्रनिर्देशस्थलेऽतिशयोक्तिः' इति व्यवस्थाविभागः इति वाच्यम् ।

'हृत्पङ्कजानि भजतां प्रतिबोधयन्ती
संसारसागरमपि प्रविशोषयन्ती ।
ज्योत्स्ना त्वदङ्घ्रिनखचन्द्रसमुद्गतेय-
मन्यादृशीमभयदां प्रकृतिं बिभर्ति ॥'

---

1. 'विरोधयैव' क.

इत्यत्र नखकान्तिरूपविषयनिगरणेन 'ज्योत्स्ना' इति विषयिपदमात्रनिर्देशेऽपि पङ्कजविकासकत्वादिना प्रसिद्धज्योत्स्नातो व्यतिरेकेण तत्तादृूप्यमात्रप्रतीतेर्दर्शनेन व्यवस्थाद्वयस्याप्यशक्याङ्गीकारत्वात् । तथा च यदि 'ताद्रूप्ये रूपकम्, अभेदेऽतिशयोक्तिः' इति व्यवस्थां परित्यज्य 'विषयविषयिपदसामानाधिकरण्ये रूपकम्, विषयिपदमात्रनिर्देशेऽतिशयोक्तिः' इति व्यवस्थाद्रियते, तदा 'विद्वन्मानसहंस' इत्यादावभेदप्रतीतौ सत्यामपि रूपकं संभवतीति न काचिदनुपपत्तिः। यदि च तथा सति रूपकातिशयोक्त्योः शब्दवैचित्र्यमात्रभेदप्राप्त्या परस्परमर्थालंकाररूपत्वं न स्यादित्याद्या व्यवस्थाद्रियते, तदा 'ज्योत्स्ना त्वदङ्घ्रिनख—' इत्यादौ विषयिपदमात्रनिर्देशेऽपि प्राचीनमर्यादायामतिशयोक्तिमपहाय रूपकमेवाङ्गीकर्तव्यम् । तद्वत् 'विद्वन्मानसहंस—' इत्यादौ विषयविषयिपदसामानाधिकरण्येऽप्यतिशयोक्तिरङ्गीक्रियताम् । किमनुपपन्नम् । तस्मात्—एतादृशस्थले समभिव्याहारादभेदप्रतीत्युपगमे न कश्चिद्दोषः इति व्यर्थो लक्षणोपपादनप्रयासः । न च एवं सर्वत्र विषयविषयिसामानाधिकरण्यस्थले समभिव्याहारादभेदप्रतीतेर्वक्तुं शक्यत्वात्क्वचिदपि सारोपलक्षणा न स्यात्—इति वाच्यम्, इष्टापत्तेः ॥

इति श्रीअप्पदीक्षितविरचिते वृत्तिवार्तिके लक्षणावृत्तिनिर्णयो नाम द्वितीयः परिच्छेदः ।

**समाप्तश्चायं समुपलभ्यमानो ग्रन्थः ।**

---

१. 'इति वृत्तिवार्तिके' ख-ग.

# वैयाकरणसिद्धान्तमञ्जूषास्थो व्यञ्जनानिर्णयः ।



(अस्मिन्वृत्तिवार्तिकग्रन्थे व्यञ्जनावृत्तिनिर्णयस्य प्रारम्भप्रतिज्ञातस्यापि सकलादर्शेष्वदर्शनात्तन्निरूपणस्यात्यावश्यकत्वाच्च नैयायिकप्रबन्धेषु तदनादरेण वैयाकरणग्रन्थेषु तदादरेण नागेशभट्टविरचितवैयाकरणसिद्धान्तमञ्जूषास्थ एव व्यञ्जनानिर्णयो लिख्यते—)

मुख्यार्थसंबद्धासंबद्धसाधारणमुख्यार्थबाधग्रहाद्यप्रयोज्यप्रसिद्धाप्रसिद्धार्थविषयकधीजनकत्वं व्यञ्जना । सा चेयं शब्दतदर्थपदपदैकदेशवर्णरचनाचेष्टादिषु सर्वत्र, तथैवानुभवात् । 'अनया कटाक्षेणाभिलाषो व्यञ्जितः' इति सर्वजनप्रसिद्धेस्तस्यां चेष्टावृत्तित्वस्याप्यावश्यकत्वाच्च । एतेन—'अर्थादीनां न व्यञ्जकत्वम् । किंतु पदस्यैव' इत्यपास्तम् ।

'रतिकाले विलोक्य श्रीर्नाभिपद्मे पितामहम् ।
रसाकुलाच्छादयते दक्षिणं नयनं हरेः ॥'

इत्यादौ हरिपदेन 'दक्षिणनयनस्य सूर्यात्मकत्वम्, तन्निमीलनेन सूर्यास्तः, तेन पद्मसंकोचः, तेन पितामहस्थगनम्, तेनाप्रतिबद्धं रतिविलसितम्' इति क्रमेण व्यङ्ग्येषु प्रतीयमानेषु तत्तदर्थप्रतीत्युत्तरमेव व्यङ्ग्यप्रतीतेरर्थस्यापि व्यञ्जकत्वावश्यकत्वात् ।

'पश्यात्र नलिनीपत्रे बलाका दृश्यतेऽचला ।
रम्ये मारकते पात्रे शुक्तिकेव च निर्मला ॥'

इत्यत्रापि निश्चलत्वेन शुक्त्युपमया चाश्वस्तत्वम्, तेन निर्जनत्वम्, तेन 'तदेवावयोः संकेतस्थानम्' इत्यादिषु क्रमेण प्रतीयमानेषु तत्तदर्थव्यङ्ग्येष्वपि बोध्यम् । पदस्य च तत्तत्स्वार्थबोधने उपरतत्वात्पुनःपुनरनुसंधानकल्पने गौरवम्, तदननुभवाच्च । अनया चार्थबोधे जननीये वक्तृबोद्धव्यवाच्यादिवैशिष्ट्यज्ञानं प्रतिभा च सहकारि तद्धीजनकज्ञानंजनकमेव वा । अतो नातिप्रसङ्गः । प्रतिभा च नवनवोन्मेषशालिनी बुद्धिः । तदुक्तम्—

'प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता ।'

इति । नवनवोन्मेषो जन्मान्तरीयतद्धीजनकत्वज्ञानजन्यसंस्कारोद्बोधः ।

'वक्त्रादिवैशिष्ट्यसहकारेण तज्जनिका बुद्धिः प्रतिभा' इति फलितम् । एवं च शक्तिरेतज्जन्मगृहीतैवार्थबोधिका, व्यञ्जना तु जन्मान्तरगृहीतापि, इत्यपि शक्तेरस्या भेदकम् । इदमेवाभिप्रेत्य 'व्यञ्जना स्वरूपसती हेतुः' इति प्रवादः । यद्यपि प्रागुक्तरीत्या लक्षणातोऽपि भेदः सिद्धः, तथापि प्रकारान्तरेणापि भेदं वक्तुं 'मुख्यार्थे—'इत्याद्युक्तम् । 'पश्यात्र नलिनीपत्रे—' इत्यादौ वक्तृतात्पर्यविषयीभूतवाच्यार्थबाधाभावेऽपि तज्ज्ञानाभावेऽपि प्राग्दर्शितव्यङ्ग्यप्रतीतेः, मुख्यार्थबाधज्ञानसत्त्वे तदप्रतीतेश्च न व्या(वैय)-ञ्जनिकबोधे तस्य सहकारित्वम् । एवं 'गतोऽस्तमर्कः' इत्यादेः शिष्येण संध्यावन्दनादेः कर्तव्यत्वाभिप्रायेण गुरुं प्रति प्रयुक्ताद्वक्तृतात्पर्याभावेऽपि प्रतिवेश्यादीनामभिसरणीयक्रमादिबोधस्य वाच्यार्थप्रतीतिपूर्वकस्य वाच्यार्थबाधज्ञानेऽजायमानस्य लक्षणयोपपादयितुमशक्यत्वाच्च । यत्तु—'गतोऽस्तमर्कः' इत्यादौ न व्यञ्जना, एकसंबन्धिदर्शनादपरसंबन्धिस्मरणवदुपपत्तेः, इति, तन्न । असंबद्धव्यङ्ग्यप्रतीतावस्यासंभवात् । किं च 'गतोऽस्तमर्कः' इत्यादिश्रवणोत्तरं 'संध्यावन्दनकर्तव्यत्वं मया स्मृतम्' इत्यनुव्यवसायाभावात्, तत्तानुल्लेखाच्च । 'इदं पदमेतदर्थस्य न वाचकम्, नापि लक्षकम्, नापि स्मारकम् । अपि तु व्यञ्जनया बोधकम्' इति प्रामाणिकव्यवहारेणाप्यतिरिक्ततत्सिद्धेश्च । एतेन—तत्तदर्थानां वक्त्रादिवैशिष्ट्यप्रतिभादिसहकृतमनसैव विशिष्टधीसंभवात् । चमत्कारं प्रति शाब्दस्येव मानसस्यापि चेष्टानुरोधेन हेतुतायाः क्लृप्तत्वाच्च व्यञ्जनासत्त्वे न मानम् । प्रतिभा च तत्तत्पदपदार्थविषयकसंस्कारोद्बोधको बुद्धिविशेषः । तत्र च तत्तदर्थज्ञानं वक्त्रादिवैशिष्ट्यं ज्ञानं च सहकारि—इति परास्तम् ॥

'व्यङ्ग्योऽर्थोऽनुमेयः' इति त्वयुक्तमेव, विरुद्धानैकान्तिकेभ्यो व्याप्तिपक्षधर्मतादिनिर्णयाभावेऽपि व्यङ्ग्यार्थप्रतीतेः । किं च—सिद्धिसत्त्वेऽपि व्यङ्ग्यार्थबोधदर्शनेन तत्प्रतिबध्यतावच्छेदककोटौ तत्तद्भेदनिवेशेऽतिगौरवापत्त्याव्या(वैय)ञ्जनिकबोधस्यातिरिक्तत्व एव लाघवम् । अन्यथा शब्दप्रामाण्यस्याप्युच्छेदापत्तिरित्यन्यत्र विस्तरः । बोधकत्वस्य चेष्टायां सत्त्वेऽपि तन्नि-

ष्टबोधकत्वं न शक्तिः, 'चेष्टा शक्ता' इति प्रामाणिकव्यवहाराभावात् । किं तु तज्जन्यबोधे तज्ज्ञानस्य कारणत्वं बोध्यम् । तत्तद्वाचकशब्दस्मरणद्वारा चेष्टया बोधः—इत्यपि कश्चित् । तन्न । चेष्टयैडमूकादिव्यवहारानापत्तेः । तस्यापि जन्मान्तरीयशब्दस्मरणम्' इत्यन्ये ॥

अत एव निपातानां द्योतकत्वमाकर उक्तम् । स्फोटस्य च व्यङ्ग्यता हर्यादिभिरुक्तैव । द्योतकत्वं च समभिव्याहृतपदशक्तिव्यञ्जकत्वमेव—इति वैयाकरणानामप्येतत्स्वीकार आवश्यकः ॥

इति श्रीनागेशभट्टविरचितायां वैयाकरणसिद्धान्तमञ्जूषायां व्यञ्जनानिरूपणम् ।

**KAVYAMALA 29.**



THE

# BHARTRIHARINIRVEDA

OF

# HARIHAROPÂDHYÂYA.

---

EDITED BY

PAṆDIT DURGÂPRASÂD

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.



PRINTED AND PUBLISHED

BY

**THE PROPRIETORS**

OF

THE "NIRṆAYA-SÂGARA" PRESS.

BOMBAY.

---

1892.

---

*Price 2½ Annas.*

काव्यमाला २९.

श्रीहरिहरोपाध्यायनिर्मितं

# भर्तृहरिनिर्वेदम् ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना पण्डित-
दुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च
संशोधितम् ।

तच्च
मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिभ्यां मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतम् ।

१८९२



मूल्य २॥ आणकाः ।

# श्रीहरिहरोपाध्यायनिर्मितं

# भर्तृहरिनिर्वेदम् ।

प्रथमोऽङ्कः ।

शैत्यायाहृत्य मूर्ध्ना रजनिकरकला जाह्नवी चोपनीता
यत्राङ्गोत्तापभीता पदमपि न जटाजूटतोऽधः प्रपेदे ।
प्राणान्हातुं निपीतं विषमपि हृदयं नाविशद्दाहभीत्या
शंभोः सत्या वियोगं तमपि शमितवत्यस्तु शान्तिः शिवाय ॥ १ ॥

(नान्द्यन्ते)

**सूत्रधारः**—अलमतिविस्तरेण । भोभोस्त्रिभुवनतरु[प्रभृति]बीजभूतस्य भगवतो भूतपतेर्भैरवेश्वरस्य यात्रायां सुलभाः सामाजिकाः । श्रीहरिहरप्रणीतेन भर्तृहरिनिर्वेदनाम्ना शान्तरसप्रधानेन नाटकेन तानुपासितुमीहामहे । तत्रभवन्तः सावधाना भवन्तु । यतः ।

शृङ्गारादिरनेकजन्ममरणश्रेणीसमासादितै-
रेणीदृक्प्रमुखैः स्वदीपकसखैरालम्बनैरर्जितः ।
अस्त्येव क्षणिको रसः प्रतिपलं पर्यन्तवैरस्यभू-
र्ब्रह्माद्वैतसुखात्मकः परमविश्रान्तो हि शान्तो रसः ॥ २ ॥

तद्यावद्गृहिणीमाहूय प्रवर्तयामि प्रयोगम् । (नेपथ्याभिमुखमवलोक्य ।) आर्ये, इत इतः ।

१. अयं हरिहरोपाध्यायो मिथिलादेशे कदा समुत्पन्न इति न निश्चीयते. एतत्प्रणीतस्यास्य भर्तृहरिनिर्वेदनाम्नो नाटकस्यैकं शुद्धं पुस्तकं मिथिलाक्षरसमुल्लसितस्य कस्यचन पुस्तकस्य प्रतिरूपकं बाबूश्रीदेकरदेश्वरसिंहाज्ञया मैथिलपण्डितश्रीचेतनाथशर्मभिः प्रहितमस्मि, तदाश्रयेणैतन्मुद्रणमकारि. हरिहरोपाध्यायप्रणीतमेकं सुभाषितमपि मिथिलायां समुपलभ्यते.

(प्रविश्य)

**नटी**—अज्ज, इअह्मि । (क)

**सूत्रधारः**—(विलोक्य ।) आर्ये, किमुद्विग्नेव लक्ष्यसे ।

**नटी**—महन्तं खु कालं तुमं अन्तरिदोसि त्ति उव्विग्गह्मि । (ख)

**सूत्रधारः**—आर्ये, ज्योतिर्विदा केनापि श्रावितं किमपि प्रतिकूलं शमयितुं शान्तिजापकाननुकूलयितुं गतः । ततोऽहं विलम्बितः ।

**नटी**—अह तं संवुत्तम् । (ग)

**सूत्रधारः**—अथ किम् ।

कर्मणः शान्तिकस्यान्ते कान्ते त्वामहमागतः ।
एष भर्तृहरी राजा भार्यां भानुमतीमिव ॥ ३ ॥

(इति निष्क्रान्तौ ।)

**प्रस्तावना ।**

---

(ततः प्रविशति सद्यः समागतो राजा सोद्वेगा भानुमती विभवतश्च परीवारः ।)

**राजा**—(निर्वर्ण्य ।) नूनमियमेवं चिन्तयन्त्यासीत् ।

न द्यूते रमते मनोऽस्य मृगयाकालोऽपि नालोक्यते
विश्लिष्टस्य चिरान्मया च सुहृदां गोष्ठीरसः कीदृशः ।
कस्याश्चित्तदरालपक्ष्मलदृशः प्रायोऽनवद्याकृते-
र्व्याहारि परेण चारिमचमत्कारेण तस्यान्तरम् ॥ ४ ॥

(सापवादमिव ।)

चिरविस्मृतमधुरस्मितमुन्नमितभ्रूलतं वदनमस्याः ।
निगदति निरवधिचिन्तासंतापितमान्तरं तन्व्याः ॥ ५ ॥

(उपसृत्य ।) प्रिये, किं विमनस्केव लक्ष्यसे ।

तावकीनैर्गुणैः प्रीतश्चिरक्रीत इव प्रिये ।
यद्यस्म्यनुचरश्चिन्ता किं तापयति मे(ते) मनः ॥ ६ ॥

(इत्यालिङ्गितुमीहते ।)

---

(क) आर्य, इयमस्मि ।

(ख) महान्तं खलु कालं त्वमन्तरितोऽसीत्युद्विग्नास्मि ।

(ग) अथ तत्संवृत्तम् ।

**भानुमती**—ण क्खु अज्जउत्तस्स अम्हे अणुवत्तणिज्जा । (क)

**राजा**— किमिदमुदीर्यते ।

तन्वि त्वं निधिरेव सद्मनि कुले कल्याणकल्लोलिनी
काचिल्लोचनयोर्नवामृतलवासारावसेकक्रिया ।
अङ्गे चन्दनपङ्कसंकरतरत्कर्पूरपूरप्लव-
स्तल्पे सौरतशिल्पकल्पलतिका तन्नाम किं नासि नः ॥ ७ ॥

अपि च ।

त्वत्कान्त्या मम कौमुदीसमुदयस्यारोचने लोचने
प्रस्यन्दः पृषतामथेन्दुदृषदामङ्गप्रसङ्गस्तव ।
पीयूषस्य घटीमपि श्रुतिपुटी वाचा तवाचामति
प्राप्यं पुण्यशतैरितः किमधिकं सद्मापि पद्मापतेः ॥ ८ ॥

**भानुमती**—अज्जउत्त, अलिअं क्खु एदम् । अण्णधा कहं एत्तिअं कालं णिरणुक्कोसो भविअ अण्णत्थ गमेसि । ण क्खु जाणादि अज्जउत्तो जं खणं पि असहणं मम जीविअं तुह विओअस्स । (इति रोदिति ।) (ख)

**राजा**—देवि, समाश्वसिहि समाश्वसिहि । गतोऽहमितो भागीरथीतीरं ज्योतिर्विदा केनचिदुपदर्शितं प्रतिकूलं शमयितुम् । तत्र च ब्राह्मणपरतन्त्रतया स्थितोऽस्मि, न पुनर्निरनुक्रोशतया । पश्य ।

निजकरपरिरम्भप्रीतिदायोपचारं
परिहरति किमिन्दुः पारयन्कैरविण्याः ।
यदि न मदिरनेत्रे कश्चिदस्यान्तरा स्या-
द्विधुरविधिनियोगादभ्युपेयो वियोगः ॥ ९ ॥

---

(क) न खल्वार्यपुत्रस्य वयमनुवर्तनीयाः ।

(ख) आर्यपुत्र, अलीकं खल्वेतत् । अन्यथा कथमेतावन्तं कालं निरनुक्रोशो भूत्वान्यत्र गमयेः । न खलु जानात्यार्यपुत्रो यत्क्षणमप्यसहनं मम जीवितं तव वियोगस्य ।

**भानुमती**—अज्जउत्त, अण्णारिसो सो सिणेहो जस्सिं पिअविरहिदा केरविणी णिमीलिअ वासराइं गमेदि । अह वा अहं विअ पुणो वि पिअदंसणस्स पच्चासाए जीआवीअदि । (क)

**राजा**—एवमेतत् ।

प्रायः प्रेयोविरहविधुरान्बन्धुरान्गन्तुमेव
प्राणानाशाप्रणयपरवन्मानसानां रुणद्धि ।
नो चेदेवं किमु कमलिनी भानुभासा विना स्या-
त्किं स्यादस्या हिमकरकरानन्तरा कैरविण्याः ॥ १० ॥

(नेपथ्ये सकलकलो वादित्रनादः । उभौ जालमार्गेण विलोकयतः ।)

**राजा**—(सविस्मयम् ।) देवि, जितं भवत्या यदियमनुमरणाय भर्तारमनुगच्छन्ती विरहदहनं सोढुमपारयन्ती विविक्षुर्दहनं पुरंध्रीणां प्रणयं कमपि महिमानमारोहयति । साधु ।

सतीनां वः पत्यौ प्रणयपरिपाकस्य महिमा
किमाख्येयो यस्मिन्मृदुकुसुमतल्पीयति चितिः ।
अपि ज्वाला वह्नेर्मलयजरसीयन्ति विधुताः
कृतान्तोऽपि क्रूरः कुसुमविशिखीयन्विलसति ॥ ११ ॥

**भानुमती**—अज्जउत्त, एदं पि एदाणं ववसिदं असरिसं जेव्व पणअस्स, जं झत्ति पज्जलिअं विरहाणलं परिहरिअ चिदाणलं अवेक्खन्ति । (ख)

**राजा**—(आत्मगतम् ।) अहो, दूरमारूढोऽयमस्या निश्चयः । अथवा अहो विप्रलम्भः ।

एता एव स्तुताः स्त्रीणां विप्रलम्भनवागुराः ।
बद्धा यास्ववसीदन्ति तरुणा हरिणा इव ॥ १२ ॥

---

(क) आर्यपुत्र, अन्यादृशः स स्नेहो यस्मिन्प्रियविरहिता कैरविणी निमील्य वासराणि गमयति । अथवाहमिव पुनरपि प्रियदर्शनस्य प्रत्याशया जीव्यते ।

(ख) आर्यपुत्र, एतदप्येतासां व्यवसितमसदृशमेव प्रणयस्य, यज्झटिति प्रज्वलितं विरहानलं परिहृत्य चितानलमपेक्षन्ते ।

(प्रकाशम् ।) देवि, कीदृशोऽयं ते निश्चयः ।

**भानुमती**—णिच्चओ जेव्व तुह्म विरहं असहमाणस्स मे हिअअस्स।(क)

**राजा**—(आत्मगतम् ।) तदिदमस्ति ज्ञातव्यम् । अस्त्वेवम् ।. अस्त्वेव प्रस्तुता मृगया । (प्रकाशम् ।) चिराय मृगयोत्सुकाः सैनिका मामपेक्षन्ते । तदनुजानातु मृगयायै देवी । ततो निवृत्त्याचिरेणैव संभावयिष्यामि भवतीम् ।

**भानुमती**—(सबाष्पोपरोधम् ।) ण क्खु अम्हे एत्थ पहवामो । (ख)

(राजा निष्क्रामति ।)

**भानुमती**—(अश्रूणि विमुञ्चन्ती राजानमनुगम्य ।) जाव अहं दुआरत्थम्भावलम्बिआ भविअ पलोएमि अज्जउत्तस्स मग्गम् । (ग)

(इति निष्क्रान्ताः सर्वे ।)

इति प्रथमोऽङ्कः ।

---

द्वितीयोऽङ्कः ।

(प्रविश्यापटीक्षेपेण विलपन्ती)

**चेटी**—(सोरस्ताडम् ।) हा, हदम्हि मन्दभाइणी । (घ)

(प्रविश्य)

**अपरा**—सहि, को क्खु एसो अन्तेउरम्मि कलअलो । (ङ)

**प्रथमा**—(विलप्य ।) सहि, सा क्खु अह्माणं सअलसमीहिदसंवादणअरी णअरीए सीमन्तमणी मणीसिदकप्पलदा बन्धुहिअआणं हिअआणन्दो

(क) निश्चय एव तव विरहमसहमानस्य मम हृदयस्य ।

(ख) न खलु वयमत्र प्रभवामः ।

(ग) यावदहं द्वारस्तम्भावलम्बिता भूत्वा प्रलोकयाम्यार्यपुत्रस्य मार्गम् ।

(घ) हा, हतास्मि मन्दभागिनी ।

(ङ) सखि, कः खल्वेषोऽन्तःपुरे कलकलः ।

ज्जेव्व रण्णो रण्णो अलीअं सावदेण वावादणं सुणिअ उवरदा । (क)

**अपरा**—(वेपमाना सास्रम् ।) हा, केण उण हदासेण एदं अलिअं पआसिदम् । (ख)

**प्रथमा**—देवस्स सआसादो ज्जेव्व आअदेण दुरक्खाइणा पच्छाऊण अलिअं क्खु एदं त्ति बोधिता वि ण पडिबुद्धा । (ग)

**उभे**—(सकरुणबहुमानम् ।)

अवि अलिअं पिअमरणं सुणिअ मुअन्तीएँ तुज्झ कित्तीए ।
कज्जगुरुओ त्ति अज्ज प्पणअस्स पणासिदं अजसो ॥ १ ॥ (घ)

(नेपथ्ये कलकलः ।)

**उभे**—कहं दाणिं देवी णअरीए बाहिरं णिज्जइ । एसो अ दुरक्खाई मिअआपडिणिउत्तस्स रण्णो ज्जेव्व समीवं गच्छदि । ता अम्हेवि अपच्छिमं देवीए अणुगमणं कदुअ अप्पाणं अणवरज्झं करेह्म । (इति निष्क्रान्ते ।) (ङ)

**प्रवेशकः ।**

(ततः प्रविशति मृगयानिवृत्तः सपरिजनो राजा ।)

**राजा**—(वामाक्षिस्पन्दनं सूचयित्वा ।)

नैव स्वकीयानि हिताहितानि ज्ञातुं जनो यानि कथंचिदीष्टे ।
आश्चर्यमङ्गानि जडान्यपि प्राग्विज्ञाय तानि स्फुरितैर्वदन्ति ॥ २ ॥

(क) सखि, सा खल्वस्माकं सकलसमीहितसंपादनकरी नगर्याः सीमन्तमणिर्मनीषितकल्पलता बन्धुहृदयानां हृदयानन्द एव राज्ञो राज्ञोऽलीकं श्वापदेन व्यापादनं श्रुत्वोपरता ।

(ख) हा, केन पुनर्हताशेनेदमलीकं प्रकाशितम् ।

(ग) देवस्य सकाशादेवागतेन दुराख्यायिना पश्चादलीकं खल्वेतदिति बोधितापि न प्रतिबुद्धा ।

(घ) अप्यलीकं प्रियमरणं श्रुत्वा मृतायास्तव कीर्त्या ।
कार्यगुरुरित्यद्य प्रणयस्य प्रणाशितमयशः ॥

(ङ) कथमिदानीं देवी नगर्या बहिर्नीयते । एष च दुराख्यायी मृगयाप्रतिनिवृत्तस्य राज्ञ एव समीपं गच्छति । तदावामप्यपश्चिमं देव्या अनुगमनं कृत्वात्मानमनपराद्धं कुर्वः ।

(सचिन्तोद्वेगम् ।) नूनमिदमस्मदीयस्य दुर्मन्त्रितस्य दुर्विपाकि फलं सूचयति । तथाहि ।

प्रियविरहितान्हातुं प्राणानयं प्रणयाकुले
हृदि मृदुतनोरासीदेव ध्रुवो बत निश्चयः ।
इह यदि मृषा दोषारोपो गुणेऽपि कृतस्ततः
फलमपि मया जाल्मेनास्मिन्यथोचितमाप्स्यते ॥ ३ ॥

(प्रविश्य वेपमान.)

दुराख्यायी पुरुषः—देव, देवीए–(क) (इत्यर्धोक्ते वाक्स्तम्भं नाटयति ।)

राजा—(सोद्वेगम् ।) दुराख्यायिन्, किं देव्याः ।

पुरुषः—देव्वेण पआसिदुमाणत्तं देव्वस्स सावदेण वावादणं अह्म-मुहादो सुणन्तीए–(ख)

राजा—(सखेदवितर्कम् ।)

किं देव्याः समभून्मनो निपतितं मूर्छातमिस्रान्तरे

पुरुषः—मग्गावलोअणत्थं दुआरत्थम्भावलम्बिआए जेव्व–(ग)

राजा—(सबाष्पगद्गदम् ) किं वक्तुमध्यवसितोऽसि ।

जातं वाथ जगत्रयं मम हतस्यैवान्धकारायितम् ।

पुरुषः—अह इं । विणिग्गआ अणिवत्तिणो णीसासा । (घ)

(राजा मुह्यन्भूमौ निपतति ।)

पुरुषः—(धारयित्वा ।) समाससदु देव्वो । (ङ)

---

(क) देव, देव्याः–।

(ख) देवेन प्रकाशयितुमाज्ञप्तं देवस्य श्वापदेन व्यापादनमस्मन्मु-खाच्छृण्वन्त्या– ।

(ग) मार्गावलोकनार्थं द्वारस्तम्भावलम्बिन्या एव–।

(घ) अथ किम् । विनिर्गता अनिवर्तिनो निःश्वासाः ।

(ङ) समाश्वसितु देवः ।

**राजा**—(ईषदाश्वस्य।)

श्वासा एव परं न पङ्कजदृशो देहाद्बहिर्निर्गता
गेहाद्भर्तृहरेर्गता विधिहता हा जीवलोकोत्सवाः॥ ४॥

(इति भूयोऽपि मूर्छितः पतति।)

(परिजना धारयन्ति।)

**राजा**—(चिरेण संज्ञां लब्ध्वा।) कथं व्यतिक्रान्तान्येव तानि तानि ललितानि विलसितानि। हन्त।

कथमहह तथाविधेन तादृक्परिह्वतमेव निरीक्षितेन चक्षुः।
बत वदनमपि व्यमोचि तस्याः स्मितमधुरेण किमीरितेन तेन॥ ५॥

(सोत्कण्ठम्।) कथय क्वेदानीं देवी।

**पुरुषः**—णअरादो बाहिरं णिज्जन्ती मए दिट्ठा। (क)

**राजा**—(सखेदम्।) कथं चितायां देवी दाह्येति बन्धूनां व्यवसायः। (सोन्मादं च परिक्रामन्। सक्रोधम्।) हन्त हन्त। मैवम्।

अस्याः स्निग्धशिरीषकेसरशिखामृद्वङ्गमालिङ्गितुं
प्रोद्धूमज्वलनाञ्चिता बत चिता काष्ठाचिता नोचिता।
मद्दोर्भ्यां पिहिता मदङ्गनिहिता मत्कामवह्नावसा-
वह्नायावयवानहो वरतनुः स्नेहोद्धते होष्यति॥ ६॥

(परिक्रम्यावलोक्य च।) इयमत्र श्मशाने प्राणेश्वरी। हा धिक् कष्टम्।

एषां चित्यर्धदग्धावयवशवसमाकर्षणे हर्षभाजां
फेत्कारैः फेरवाणां क्षणजनितभयोद्भ्रान्तगृध्रावरुद्धम्।
नेत्रान्धीकारि नासापुटकषणपटूद्गन्धिधूमान्धकारं
मद्गेहश्रीशरीराश्रयणमिदममूद्भसधानं श्मशानम्॥ ७॥

(इति मूर्छितो निपतति।)

(नेपथ्ये कलकलः।)

**परिजनाः**—(राजानं धारयित्वा।) एदे दे णिअबान्धवा सोअविअला देवस्स अवत्थन्तरं पेक्खिअ रुअन्ति। (ख)

---

(क) नगराद्बहिर्नीयमाना मया दृष्टा।

(ख) एते ते निजबान्धवाः शोकाविकला देवस्यावस्थान्तरं प्रेक्ष्य रुदन्ति।

**राजा**—कथमद्यापि जीवति भर्तृहरिरिति जानन्ति बान्धवाः । भो भोः,

श्रुत्वैव या मम विनाशमलीकमेव
प्राणांस्तृणादपि लघूनिव निर्मुमोच ।
तां तथ्यमप्युपरतामवलोक्य जीव-
ञ्जानीत जीवति न भर्तृहरिर्निराशः ॥ ८ ॥

(उपसृत्य नेपथ्यावलोकितकेन सकरुणम् ।) देवि, किमेतत् ।

कान्तिः क्लाम्यति कुङ्कुमादपि परिश्रान्तिः स्रजाप्यूढया
दृष्टा ताम्यति शैशिरादपि रवेर्यस्यास्तवेयं तनुः ।
सैव त्वं भसिताचिता बत चितादुर्दारुभिर्दारुणै-
राक्रान्ता गहनोत्तरङ्गिदहनोन्मादे कथं स्थास्यसि ॥ ९ ॥

**परिजनाः**—(नेपथ्याभिमुखमवलोक्य ।) कधं एस महत्तओ देव्वतिलओ । (क)

(प्रविश्य ।)

**देवतिलकः**—देव, समाश्वसिहि ।

**राजा**—कथमाश्वासितव्यम् ।

हित्वा मां विधिहतमेष जीवलोका-
दाश्वासः सुखमनया सह प्रयातः ।
धिक्प्राणांस्तदनुसृतानितो बतैवं
दुर्दैवं समवरुणद्धि कः प्रकारः ॥ १० ॥

अपि च मया स्वयमेव प्रियतमामभिसंधाय स्वस्मिन्नियमुपनिपातिता विपत् । तथा हि ।

स्वयं निर्मायान्धुं बत हतधियास्मिन्निपतितं
मया व्यादायास्यं स्वयमहिपतेश्चुम्बितमिदम् ।
कृपाणेन स्वेन प्रहतमिदमात्मन्यकरुणं
स्वयं सुप्त्वा सद्मन्यहह निहितो द्वारि दहनः ॥ ११ ॥

---

(क) कथमेष महत्तरको देवतिलकः ।

देवतिलकः—राजन्, अतिमहत्येव दुःखहेतौ मनः श्लथीकृत्याश्वसन्ति महान्तः।

राजा—

वैगुण्यमण्वपि सरोजदृशो यदि स्या-
दस्यामिदं बत कथं न मनः श्लथं स्यात्।
तादृक्पुनः कणमितोऽपि गुणः कुतोऽपि
प्राप्येत चेन्न कथमाः क्षणमाश्वसामि[1] ॥ १२ ॥

देवतिलकः—राजन्, तथाप्यापदि धैर्यमेवावलम्बनम्।

राजा—

किं तादृशेन धैर्येण धिक्कृतस्य ममाधुना।
ईदृशो विप्रयोगस्य यत्प्रतीपं व्यवस्यति ॥ १३ ॥

(शवदोलालोकनं नाटयित्वा सोन्मादम्।) देवि देवि,

स्नेहाम्भोनिधिरयमावयोरगाधः साधु त्वं सुमुखि गतासि पारमस्मिन्।
संजातो मम पुनरन्तरा निपातो निर्मग्नः परमिह मोहमेकमूहे ॥ १४ ॥

हा देवि,

अद्यैव त्वमनङ्गमङ्गलकलासंभारभूरप्यभू-
रद्यैवावसितेदृशी मम हृदो निर्दारणा दारुणा।
अद्यैवासमुदारमेदुरमदः सौभाग्यसौख्यैकभा-
गद्यैवासि बहिर्गतः प्रतिहतश्रीर्जीवलोकादपि ॥ १५ ॥

(नेपथ्ये।)

देव, दिज्जउ देवीए हुअवहादेसो। (क)

राजा—(आकर्ण्य।) हन्त, नैवं व्यवसितव्यम्। (सक्रोधं च।) कथमस्मत्प्रतिषिद्धमाचरितुमुद्यता बान्धवाः।

देवतिलकः—राजन्, अलमेतादृशेन निर्बन्धेन।

---

(क) देव, दीयतां देव्या हुतवहादेशः।

---

१. 'कथमाश्वसिमि क्षणार्धम्' इति पाठः.

**राजा**—निर्बन्ध एवायम्।

मामेवं विधिहतमित्यपोह्य यूयं चेद्दग्धौ वपुरथ दित्सथ प्रियायाः।
संरोद्धुं हृदयमपारयन्निदानीं जानीत ध्रुवमहमत्र संप्रविष्टः॥ १६ ॥

(इति सोन्मादं चिताभिमुखं धावति।)

**देवतिलकः**—हन्त, वयमपि गत्वा राजानं धारयामः।

(इति निष्क्रान्ताः सर्वे।)

इति द्वितीयोऽङ्कः।

---

तृतीयोऽङ्कः।

(प्रविश्य।)

**कञ्चुकी**—(स्खलनं नाटयित्वा।) हन्त, जराशोकाभ्यामभिभूतस्य मे दण्डकाष्ठमपि नालम्बनाय। यतः।

सहजेन जरापराहता विधुता स्वामिशुचा पुनस्तनुः।
अथ तत्प्रविकारसंभ्रमाद्विकला केन किलावलम्ब्यताम्॥ १ ॥

(कृच्छ्रेणोत्थाय।) यावद्योगिनोऽस्य प्रतिज्ञातं राजशोकापनयनममात्याय विज्ञापयामि। (परिक्रम्यावलोक्य।) कथमयममात्यः।

(प्रविश्य।)

**देवतिलकः**—(सचिन्तम्।)

कथमहह परस्परप्ररूढप्रणयगुणग्रथनस्थिरोऽयमन्तः।
बत बहिरपनीयतामिदानीं मरणसुखैकरतेरमुष्य शोकः॥ २ ॥

**कञ्चुकी**—(उपसृत्य।) अमात्य, योगीश्वरोऽयं 'राज्ञः शोकमपनेष्यामि' इति प्रतिजानीते।

**देवतिलकः**—(सानन्दम्।) एवमस्तु। तदस्त्वत्र राजा योगिनं गत्वावलोकयामि।

(इति निष्क्रान्तौ।)

**विष्कम्भकः।**

---

(ततः प्रविशति सोन्मादो राजा।)

**राजा**—अयि कान्ते काशिराजनन्दिनि,

त्वया त्यक्ताः प्राणाः प्रणयिमरणाकर्णनवशा-
द्यशः स्त्रीणां त्रीनप्युपरि बत लोकानिदमभूत्।
अतो देहः शोच्यो बत बत न मोच्यो यदि मया
कथं वार्यो यूनां गुरुरपयशोदुन्दुभिरयम्॥ ३॥

इयं च मे साधीयसी प्रत्याशा यदेनामङ्के निधाय मृतस्यैतदनुध्यानवशाज्जन्मान्तरेऽप्यनया सनाथत्वं भविष्यतीति।

(नेपथ्ये।)

हा डिब्भिए, कहिं सि गदा। हा देव्व, अइपडिऊलदाए मं परिहरिअ णासिआ मे डिब्भिआ। (क) (इति विकलं रोदिति।)

**राजा**—(आकर्ण्य।) कामं ममेवातिशोकोपहतस्यायमार्तनादः। तद्भवतु। गत्वा विलोकयामि। (इति परिक्रामति।)

(परिजना अनुसरन्ति।)

**राजा**—(विलोक्य।) कथमयं योगी भग्नां स्थालीमनुशोचमानो निपतति। तद्भवतु। एनमाश्वासयामि।

(ततः प्रविशति यथानिर्दिष्टो योगी।)

**योगी**—हा डिब्भिए—(इत्यादि पूर्वोक्तं पठित्वा रोदिति।)

**राजा**—योगिन्, समाश्वसिहि।

**योगी**—(निःश्वस्य।) हन्त, केरिसो आसासो जस्स मह दूरदेसपरिब्भमणसहअरी अणेअगुणप्पणइणी डिब्भिआ भग्गा। (ख)

**राजा**—(सकरुणम्।)

अल्पस्यापि व्यपायेन प्रेयसो विषयस्य कः।
न शोचते पुनः किं स्यान्मादृशामीदृशापदि॥ ४॥

---

(क) हा डिब्भिके, कुत्रासि गता। हा दैव, अतिप्रतिकूलतया मां परिहृत्य नाशिता मे डिब्भिका।

(ख) हन्त, कीदृश आश्वासो यस्य मम दूरदेशपरिभ्रमणसहचरी अनेकगुणप्रणयिनी डिब्भिका भग्ना।

तथापि बोधयामि योगिनम्। योगिन्, किमनया नष्टया एवं परितप्यसे।

**योगी**—(सास्रम्।) के तुम्हे णिट्ठुरा एव्वं भणध। अह वा अणहिण्णा एदाए गुणाणं। (क)

**राजा**—के नामास्या गुणाः।

**योगी**—हन्त, केत्तिआ गणिज्जन्तु। तहवि के वि गणिज्जन्ति। (ख) (संस्कृतमाश्रित्य।)

करीषानुच्चेतुं दहनमुपनेतुं मुहुरपः
समाहर्तुं भिक्षामटितुमथ तां रक्षितुमपि।
पिधातुं पक्तुं चाशितुमथ च पातुं क्वचिदथो-
पधातुं नः पात्री चिरमहह चिन्तामणिरभूत्॥ ५॥

**राजा**—एवमेतत्।

प्रियस्य वस्तुनो नाम गुणान्को गणयिष्यति।
स्नेहेनोपहृताः सर्वे तत्रैव सुखहेतवः॥ ६॥

तथाप्यशक्यप्रतीकारे विनष्टे वस्तुन्यलमनुतापेन।

**योगी**—मए जेव्व एदाए दिढत्तणं परिक्खिदुं पउत्तेण पाडिआ भग्गेति महन्तो संतावो। (ग)

**राजा**—(सखेदम्।) स्वयं नाशिते प्रिये वस्तुन्यविश्रान्तिः संतापस्य। यतः।

कथमपि यत्र क्लिष्टे वस्तुनि दृष्टे प्रमोहमेति मनः।
स्वयमेव नाशितेऽस्मिन्क्षणमपि कः प्राणिति हताशः॥ ७॥

(इत्यश्रूणि विमुच्य सधैर्यम्।) तथापि योगिन्,

भवितव्यता भगवती वस्तु प्रियमप्रियं वापि।
घटयितुमथ विघटयितुं प्रभवति पुरुषस्य को दोषः॥ ८॥

---

(क) के यूयं निष्ठुरा एवं भणथ। अथवा अनभिज्ञा अस्या गुणानाम्।

(ख) हन्त, कियन्तो गण्यन्ताम्। तथापि केऽपि गण्यन्ते।

(ग) मयैवैतस्या दृढत्वं परीक्षितुं प्रवृत्तेन पातिता भग्नेति महान्संतापः।

(योगी अनाकर्णयंस्तत्कर्परोत्करं हृदये निधाय रोदिति ।)

**राजा**—योगिन्, अलं रुदितेन । दीयते मया इतोऽप्यधिकतरा मृन्मयी रजतमयी सुवर्णमयी वा स्थाली ।

**योगी**—(कर्णौ पिधाय ।) सन्तं पावं । अलं सुवण्णादिमइआए डिब्भिआए । जदो मट्टिआमइआ जेव्व डिब्भिआ एआरिसं अणत्थं परिणइए उप्पादेइ, किं उण सुवण्णादिमई । अवि अ । (क) (संस्कृतमाश्रित्य ।)

मदग्राहोद्भ्रान्तिर्भयमकरकोटिव्यतिकरः
स्फुरद्द्वेषावर्तस्तरलिमतरङ्गोपचयभूः ।
तनीयानप्यर्थो मम यदि दुरर्थोदधिरभू-
त्प्रभूतायामापद्यहमिह निमग्नो निपतितः ॥ ९ ॥

अवि अ, इदो वि अहिअअरे त्ति अलिअं आवेदेसि । इअं क्खु तह सुप्फंसा सुरमणीआकिदी सुगहिरवित्थरा सुदिढप्पइदी कुदो अण्णा संभावीअदि । (ख)

**राजा**—(सनिर्वेदम् ।)

अधिकाधिकानि गुणतो नितरामितराणि सन्तु सुलभानि शतम् ।
प्रणयेन वस्तु मनसस्तु परं परितापकारि किमपि क्रियते ॥ १० ॥

योगिन्,

अधिक[तर]प्रियमेतन्ममेति बुद्धिर्न वस्तुसौन्दर्यात् ।
नूनमनपेक्षितगुणो मोहघनः स्नेह एवेह ॥ ११ ॥

**योगी**—भो मुद्ध, ण क्खु णवरं सिणेहो ज्जेव्व । सरीरसंवद्धणं पि एदाए ठिदाए भवे । (ग)

---

(क) शान्तं पापम् । अलं सुवर्णादिमय्या डिब्भिकया । यतो मृत्तिकामय्येव डिब्भिका एतादृशमनर्थं परिणतावुत्पादयति, किं पुनः सुवर्णादिमयी । अपि च ।

(ख) अपि च, इतोऽप्यधिकतरेत्यलीकमावेदयसि । इयं खलु तथा सुस्पर्शा सुरमणीयाकृतिः सुगभीरविस्तारा सुदृढप्रकृतिः कुतोऽन्या संभाव्यते ।

(ग) भो मुग्ध, न खलु केवलं स्नेह एव । शरीरसंवर्धनमप्येतया स्थितया भवेत् ।

**राजा**—अथ कियन्तं कालमिदमिदानीमनष्टमपि पात्रं स्थितं स्यात् ।

चेत्कल्पकोटिमथ कल्पशतानि कल्पं
कल्पार्धमप्यथ यदि स्थिरतास्य भूयात् ।
युक्ता भवेदिह मनागपि शोचना ते
द्वित्रैर्दिनैर्यदि विनङ्क्ष्यति कोऽत्र शोकः ॥ १२ ॥

अलं च शरीरसंवर्धकविनाशानुतापेन । यतः ।

देहस्यास्य हितानि यद्विरहितान्येतानि वस्तूनि वः
संतापाय भवन्ति हन्त सकलः सोऽयं मनोविभ्रमः ।
देहेनैव यदेवमादिविपदां गेहेन दुर्जन्मना
द्वित्राण्येव पलानि पाणिपयसोराश्लेष एव भ्रमः ॥ १३ ॥

**योगी**—तह वि विप्पिअं परिहरिअ किंत्ति पिअं अणुवट्टेदि लोओ । (क)

**राजा**—विभ्रमात् । पश्य ।

यद्वन्माद्यति सौष्ठवेन विषयस्यापाततः प्रेयस-
स्तद्वत्ताम्यति तत्र तत्र विपदा तस्यैव पर्यन्ततः ।
व्यत्यासेन च वस्तु विप्रियमपि स्वे संपदापद्द्वये
तापायाथ मुदे तदेष कुरुते मोहः प्रियं चाप्रियम् ॥ १४ ॥

**योगी**—सुट्ठु एदं जाणीअदि तह वि अप्पदीआरं तम्मइ मह हिअअम् । (ख)

**राजा**—यदि सन्नपि नालमपि वस्तुविचारस्तदा कः प्रतीकारः ।

**योगी**—एत्थ मरणं जेव्व पडीआरो । जदो एदं हिअए काऊण मरन्तो जम्मन्तरे वि एदाए सणाहो हुविस्सम् । (ग)

---

(क) तथापि विप्रियं परिहृत्य किमिति प्रियमनुवर्तते लोकः ।

(ख) सुष्ठु एतज्ज्ञायते तथाप्यप्रतीकारं ताम्यति मम हृदयम् ।

(ग) अत्र मरणमेव प्रतीकारः । यत एतां हृदये कृत्वा म्रियमाणो जन्मान्तरेऽप्येतया सनाथो भविष्यामि ।

**देवतिलकः**—देव, दीयतां प्रतिवचनम्।

**राजा**—(विहस्य।) व्यतिक्रान्तोऽवसरः।

यस्मादासीत्तन्ममत्वं मम त्वं मन्त्री राजा चाहमेतद्यतश्च।
श्रीगुर्वाज्ञालब्धसर्वार्थसिद्धेः स व्यामोहो मे समूलो विनष्टः॥ २॥

तदतः परं भवत एवास्त्वाज्ञापनभारो भवद्राजपुत्रस्य वा।

**देवतिलकः**—(योगिनं प्रति।) योगिन्, न युक्तमेतत्कालसर्पदंशेन वृश्चिकदंशदोषापनयनम्।

**गोरक्षः**—मन्त्रिमहत्तक(र), अलमुपालम्भेन। परावर्तय राजानं शोकसुलभान्निर्वेदात्। अहमपि तवानुवर्ती भविष्यामि।

**देवतिलकः**—राजन्, किमेतत्।

संविधाय नवनीतसंविदश्चारुपाकमपि दारुणौजसा।
सूपसंवलनसाधु भूपते राज्यमाज्यमिव किं न रोचते॥ ३॥

**राजा**—उक्तम्। व्यतिक्रान्तोऽवसरः। संप्रति हि

अन्तर्दाहिमहाहिदुःसहविषप्रायप्रदोषज्वर-
ज्वालोद्रेकविकारवान्तिजनितातिक्लान्तिमूर्छस्य मे।
भुक्ताजीर्णरसप्रयुक्तविरतेर्युक्ताभियुक्तात्मनः
प्राज्यं मध्वभिघारिताज्यमिव तत्त्याज्यं न राज्यं कुतः॥ ४॥

**देवतिलकः**—राजन्, कथमेतावत्संचितं वित्तमपि न ते चित्तमाहरति।

**राजा**—

प्राप्यं प्राणान्पीडयित्वा परेषां रक्ष्यं प्राणैः पीड्यमानैः स्वकीयैः।
अप्युत्पन्नाल्पव्ययं प्राणकष्टं नष्टं प्राणग्राहि वित्तं विपन्नः॥ ५॥

**देवतिलकः**—हा धिक्, अनन्यप्रार्थितमधन्यं नैर्धन्यमपि बहु मन्यसे।

**राजा**—

च्युताशङ्कं चौरादपगतभयं भूपतिकुला-
त्खलादस्तद्वेषं क्षरदपरितोषं परिजनात्।
अधन्यं नैर्धन्यं मम भवतु धन्या तु धनिता
तडित्प्रख्ये सौख्ये बहुमतिमतामस्तु भवताम्॥ ६॥

**देवतिलकः**—राजन्, सुखोपनता सर्वाकारेण हृदयामोदिनी मेदिनी किमवमन्यते ।

**राजा**—कथमवमन्यते यद्यहमप्यस्या बहुमतः स्याम् । पश्य ।

लावण्यौदार्यवीर्यार्जवजनितरतीन्दीर्घकालानुरक्ता-
नीषद्भक्तापरक्तानिव सपदि पतीन्विसरन्ती व्यतीतान् ।
अप्यङ्कारूढमञ्चत्वयमिति दयितं गर्हयन्ती जनेभ्यो
वारस्त्रीवैष्यदेष्यन्नवनवरमणामोदिनी मेदिनीयम् ॥ ७ ॥

अपि च ।

न प्रीणात्यवनान्मनागपि हतप्रज्ञावनी किं त्वसौ
वल्गद्वाजिखुरावदारणकृते वीराय वैरायते ।
सद्यः संयति मुञ्चतोऽप्यभिमतान्प्राणानमुष्याः कृते
यन्निष्कृत्ततनोर्धिनोति रुधिरैर्निर्गत्वरैरान्तरम् ॥ ८ ॥

**देवतिलकः**—राजन्, अनेकजन्मोपार्जितपुण्यप्राप्तं राजपदं कः परित्यजति ।

**राजा**—(विहस्य ।)

किं राजेति रुजो भिया न सविधं सर्पन्ति दर्पोष्मणः
संतापेन शुचोऽपयान्ति विपदो नायान्ति वा शङ्किताः ।
कीनाशोऽपि मनाङ्महेश्वर इति क्षोभादथाकर्षणे
शैथिल्यं समुपैति केन कुरुते भूभृत्पदं दुर्मदम् ॥ ९ ॥

**देवतिलकः**—हा कष्टम् । कथमेते रुदन्तो बान्धवाः परित्यज्यन्ते ।

**राजा**—साधवो हि बान्धवाः परलोकपरायणे परिणामतः प्रीयन्त एव । इतरे तु

नाशे रुदन्ति मनसा मुहुरुल्लसन्तो
गायन्ति वृद्धिषु भृशं विमनायमानाः ।
संपत्सुखेन विहरन्ति विगर्हयन्त-
स्ते बान्धवा यदि भवन्त्वथ के द्विषन्तः ॥ १० ॥

देवतिलकः—राजन्, यद्येवं तदा तैरेव परैर्वा यदीयमाक्रम्येतावनी तदा कथं सोढव्यं स्यात् ।

राजा—

ममामी चामीषामहमिति भृशं मूढमनसां
सुतो मित्रं ज्ञातिः पर इति परिभ्राम्यति मतिः ।
अथायं व्यामोहो व्यगमदनुपेयां वसुमती-
मुपेयाद्यः कश्चिन्ननु किमिव न छिन्नमभवत् ॥ ११ ॥

देवतिलकः—(सखेदम् ।) हा राजलक्ष्मि, हतासि ।

राजा—हतैवेयं दुरर्थानुबन्धिनी । पश्य ।

उद्भूता किमु कालकूटकटुतामम्भः क्षरद्रूपता-
मौर्वस्योष्मलतां तरङ्गचलनामादाय वारांनिधेः ।
नास्प्राक्षीदपि किं सुधामधुरतां न स्वस्तरोस्त्यागितां
नापीन्दोः परलोचनप्रणयितां पापीयसी श्रीरियम् ॥ १२ ॥

अपि च ।

स्वाराज्यान्नहुषः पपात चकमे चन्द्रोऽपि गुर्वङ्गना-
मिन्द्रो गोतमगेहिनीमपि गतः पातालमूलं बलिः ।
मग्ना एव चिरं महोर्मिषु परं संसारवारांनिधे-
रेनामङ्कचरीं विधाय कमलां के नाम पारं गताः ॥ १३ ॥

देवतिलकः—तदस्तु परलोकहितानां देवतानामाराधनपरतया सदर्थानुबन्धित्वं राजलक्ष्म्याः ।

राजा—सच्चिद्बोधमात्रेणार्चनीये भगवति नारायणे किमितरदेवतानामाराधनेन । किंबहुना ।

स्वाधीनस्वामिकायाः किमितरपुरुषैः किं महाग्नौ स्फुलिङ्गैः
खद्योतैः किं सुधांशौ समुदयिनि कणैर्भक्षितैर्भूभुजः किम् ।
किं कूपैर्नाकनद्यामममृतरसभुजां भेषजैः किं विधेयं
स्वात्मा नारायणोऽन्तः स्फुरति यदि रतिर्दैवतैः कैव तैर्नः ॥ १४ ॥

देवतिलकः—राजन्, अस्त्वेवम् । तथापि यौवन उपभुक्तविषयस्य चरमे वयसि वितृष्णस्य ते विज्ञानमीषत्करं भविष्यति ।

**राजा**—(विहस्य ।) उपभुक्तविषयस्य वैपरीत्येन वक्तव्यम् । पश्य ।

भुज्यन्ते विषया मयेति भवति भ्रान्तां मतिर्देहिन-
स्तत्सिद्धौ कथमन्यथास्य विषयेष्विच्छा न विच्छिद्यते ।
भुज्यन्ते पुरुषाः परं तु विषयैरेवेक्षुवन्मन्मते
यत्तृप्ता इव संत्यजन्ति विरसान्निष्पीड्य वृद्धानमी ॥ १९ ॥

अपि च ।

जनो मृषाकरोद्भेदं विषस्य विषयस्य च ।
अजामजं च तन्नूनमाकारो भेदयत्ययम् ॥ १६ ॥

किं च ।

यदि यौवने न तृष्णा कृत्स्नापि विनिर्गता हताशेयम् ।
निर्यास्यति सहचर्या जरसा श्लिष्टा न कष्टकृष्टापि ॥ १७ ॥

पश्य ।

दन्तानां दृढतां कचस्य च तमोमालिन्यमक्ष्णोः पुन-
स्तत्तद्ग्राहकतां तनोस्तरुणतामप्यायुषो दीर्घताम् ।
एवं नाम जराज्वरादतिपराभूतस्य जन्तोरियं
तृष्णा निःशरणान्य(णांस्त)वर्गविभवानाच्छिद्य संमाद्यति ॥ १८ ॥

**देवतिलकः**—हा कष्टम् । महायोगिन्, कः प्रकारः ।

**गोरक्षः**—राजन्, एहि वैराग्यबीजभूतां ते प्रेयसीं योगबलेन जीवयित्वा रहसि तया त्वां संगमय्य तवापनयामि निर्वेदम् । (इति राजानं हस्ते गृहीत्वा परिक्रामति ।)

**देवतिलकः**—(सानन्दम् ।) अहमपि रहःस्थानमिहैव संपादयामि ।

(इति निष्क्रान्ताः सर्वे ।)

चतुर्थोऽङ्कः ।

---

पञ्चमोऽङ्कः ।

(ततः प्रविशत्येकान्ते मृतोज्जीविता भानुमती राजा च ।)

**भानुमती**—अज्जउत्त, णीसहणित्थामाइं मे अंङ्गाइं । ता अवलम्बसु मं । (क) (इत्यालिङ्गितुमीहते ।)

(राजा वारयति ।)

---

(क) आर्यपुत्र, निःसहनिस्थामानि मेऽङ्गानि । तदवलम्बस्व माम् ।

**भानुमती**—(सवैलक्ष्यम् ।) अज्जउत्त, किं सि परम्मुहो । (क)

**राजा**—पराङ्मुखो वा न पराङ्मुखः ।

**भानुमती**—मह देहप्फंसं पि परिहरन्तो किं ण परम्मुहोसि । (ख)

**राजा**—

म्रियमाणे मयि भवती प्राणेन वियुज्यते नियतमेव ।
प्रतिकारमत्र योगादजरामरभावमहमीहे ॥ १ ॥

**भानुमती**—(सत्रासमात्मगतम् ।) णूणं मं परिच्चइदुकामेण एदं भणिदं । ता हन्त कधं एस णिवत्तीअदु । भोदु । एव्वं दाव । (ग) (इति कोपोत्तरलभङ्गुरं राजानं विलोकयति ।)

**राजा**—(आत्मगतम् ।)

किं न्वेत एव तरलाम्बुरुहायताक्ष्या-
स्ते कालकूटकटव कुटिलाः कटाक्षाः ।
येषु क्षणं निपतितेषु निमग्नमासी-
न्मोहान्धकारकुहरे मुहुरेव चेतः ॥ २ ॥

किं च ।

कष्ट एष तरलस्तरुणीनां भावभङ्गुरदृगन्तनिपातः ।
एष चेन्मनसि लब्धविपाकः किं करिष्यति विवेकवराकः ॥ ३ ॥

**भानुमती**—(सानन्दमात्मगतम् ।) अणुऊलो विअ अज्जउत्तो लक्खीअदि । (घ) (इति भूयोऽपि स्मितभङ्गुरं निरीक्षते ।)

**राजा**—(नयनं वारयन् ।) अलमतः परं दृग्भङ्ग्या ।

तामसी सा मसीवृष्टिर्यावदावरणं हृदः ।
दृग्भङ्गी तावदानङ्गी हारिणी हरिणीदृशः ॥ ४ ॥

---

(क) आर्यपुत्र, किमसि पराङ्मुखः ।

(ख) मम देहस्पर्शमपि परिहरन्किं न पराङ्मुखोऽसि ।

(ग) नूनं मां परित्यक्तुकामेनैतद्भणितम् । तद्धन्त कथमेष निवर्त्यताम् । भवतु । एवं तावत् ।

(घ) अनुकूल इवार्यपुत्रो लक्ष्यते ।

**भानुमती**—(सास्रम् ।) हा देव्व, केरिसो दे एस परिणामो । (क)

**राजा**—

सितैश्चित्रे नेत्रे किमिति कुरुषे किं नु परुषे
कृतं स्निग्धालापैः कृतमथ विलापैरपि कृतैः ।
मयि त्यक्तास्वादे सभयमवसादेन गुरुणा
व्यतिक्रान्ते कामे विफलमिह वामे व्यवसितम् ॥ ५ ॥

अपि च ।

सा रम्भा यदि बुद्धिरात्मदमने रम्भापि किं भावभू-
स्त्यक्तं चेन्मन एव कुण्ठधनुषा कामेन का मेनका ।
हेयत्वेन तनोर्वशीकृतहृदः किं न्यकृता नोर्वशी
चेन्मायैव जिता मनस्यभिमता किं भाविनी भाविनी ॥ ६ ॥

**भानुमती**—अज्जउत्त, जइ एव्वं ता जणअस्स व दे घरे वि ठिदस्स सुलहं विण्णाणम् । (ख)

**राजा**—ते ह्यनेकजन्मसंसिद्धा जीवन्मुक्तावस्थया स्थिता जनकादयः। अपक्वकषायाणां तु मादृशां नायं प्रकारः । तेन हि

चित्तं गृहादद्य महान्धकूपरूपादुरूपासनयोद्धृतं नः ।
भूयो नु भूयो भववर्त्मनीदं तत्रैव तत्रैव निपातयिष्ये ॥ ७ ।

गृहे सत्ता तु जानतापि मया न सम्यगाचरितुं पारितम् । तथाहि ।

नष्टं नष्टं पश्यदेवेष्टमिष्टं शेषे शेषे नद्धमाशाभिरन्तः ।
तत्तच्चक्रे कर्म यन्मर्मसंधीन्दारंदारं दुःखभारं बभार ॥ ८ ॥

हा धिक्कष्टम् ।

तप्तं नैव तपो मया हतधिया मत्तः प्रतप्ताः परे
कोषा एव धनैर्भृता न च दरीकोषाः पुनः संश्रिताः ।
दोषा एव बतार्जिताः शमवता नीता न दोषा सुखं
व्यामोहोऽभवदच्युतः परमसावाराधितो माच्युतः ॥ ९ ॥

(इति पराङ्मुखः प्रचलति ।)

---

(क) हा दैव, कीदृशस्त एष परिणामः ।

(ख) आर्यपुत्र, यद्येवं तज्जनकस्येव ते गृहेऽपि स्थितस्य सुलभं विज्ञानम् ।

भानुमती—किदव, कहिं परिच्चइअ गमिस्ससि । (क) (इत्युत्तरीयाञ्चले
ारयति ।

(राजा उत्तरीयं परित्यज्य परिक्रामति । भानुमती धावित्वा पाणौ गृह्णाति ।)

राजा—(स्थित्वा सक्रोधम् ।) अयि दुरर्थबहुले,

स्नाय्वावनद्धघनवालकरालचर्म-
कन्थान्तरस्थितमलान्तरसास्थिमज्ज्ना(ज्ज्ञा)म् ।
स्तोमस्त्वमस्यथ दुरन्तशतानि यानि
त्वय्यापतन्ति कथयामि कियन्ति तानि ॥ १० ॥

कें च ।

गण्डाख्यां न रुजं जिघृक्षति करः किं स्थूलमांसं कुचं
गर्ते चेन्न कफास्थिचर्मनिचिते वक्रे कुतश्चुम्बनम् ।
भस्त्रा न श्वसनोद्गमागमवती कायः किमालिङ्ग्यते
कुत्सा चेन्मलमूत्रभाजि नरके नार्यां न कार्या कुतः ॥ ११ ॥

इति हस्तमाच्छिनत्ति ।) .

(भानुमती रुदती राज्ञः पादयोः पतति ।)

राजा—(सखेदमात्मगतम् ।) अहो दुरतिक्रमणीयता विषयाणाम् ।

इन्द्रियाण्युपलग्रन्थीन्वज्रसारमयं मनः ।
अकृत्वा विषयाञ्जेतुमेतु को नाम पौरुषम् ॥ १२ ॥

(प्रविश्य ।)

देवतिलकः—अस्ति किंचिन्मन्थर इव राजा । तदयमवसरः । (इत्युप-
सृत्य ।) अतः परमस्तु देव्यै प्रसादः । हन्त कथमिदमस्याः प्रणयसुखं
परिह्रियते ।

राजा—(चरणौ मोचयित्वा ।)

मनागेवाज्ञानापहृतहृदयाह्लादनकरी
परीपाके मोहं वहति बहुवैरस्यविधुरा ।
भयं बाला हालाहलबहलमाध्वीकमधुरा
चिराद्दत्ते यादृक्सुखमथ न तादृक्कथमपि ॥ १३ ॥

---

(क) कितव, कुत्र परित्यज्य गमिष्यसि ।

अपि च ।

धैर्यं ध्वंसयति श्रियं कवलयत्युन्मादयत्यान्तरं
　पादे पातयति प्रयच्छति रतस्यान्ते च कुत्सामलम् ।
औन्निद्र्यं कुरुते विभाजयति च प्राणोपमैर्बन्धुभिः
　संधत्ते जरसा युवानमपि तन्नारी क्व नारीयति ॥ १४ ॥

**भानुमती**—हा, कहिं गताइं ताइं ताइं परप्परपरवसदाए विलसिदाइं । (क)

**राजा**—

प्रेयानेष ममागतः प्रियतमेयं मे पुरो वर्तते
　दृष्टिः पङ्कजवृष्टिरस्य विसरत्यस्याः सितं चामृतम् ।
प्रेमैतद्दृढमावयोरिह दवप्रायो वियोगो मना-
　गेते नाशविपाकिनस्तरुणिमव्याधेर्महोपद्रवाः ॥ १५ ॥

**देवतिलकः**—राजन्, कथं यौवनं व्याधिरिति युज्यते ।

**राजा**—श्रूयताम् ।

कामं दुर्विषहज्वरं जनयति व्याघूर्णयत्यक्षिणी
　गात्राण्यूरुनितम्बगण्डहृदयान्युच्छूनयत्युल्बणम् ।
तां तां दुर्विकृतिं करोति सुहृदो गाढं व्यथन्ते यया
　व्याधिर्यौवनमात्मनाशनियतः के ते ग्रहण्यादयः ॥ १६ ॥

**भानुमती**—(संवरणमभिनीय नेपथ्याभिमुखम् ।) हञ्जे वासन्तिए, उआणेहि कुमारं तं अग्गदो कदुअ अज्जउत्तस्स मोहं अवणइस्सम् । (ख)

**राजा**—(आत्मगतम् ।) इदमपि दुस्तरमापतिष्यति ।

---

(क) हा, कुत्र गतानि तानि तानि परस्परपरवशताया विलसितानि !

(ख) हञ्जे वासन्तिके, उपानय कुमारं तमग्रतः कृत्वार्यपुत्रस्य मोहमपनेष्यामि ।

(प्रविश्य कुमारो मातुः समीपे तिष्ठति ।)

**भानुमती**—(बालं राज्ञः पुरो धारयित्वा सबाष्पोपरोधम् ।) अज्जउत्त, केण उण एस बालो रक्खणिज्जो । (क)

**राजा**—(वैराग्यशोकशबलमात्मगतम् ।)

भावाः सन्त्येवापरे जागरूका यैर्जीयन्ते वावदूका विवेकाः ।
पुत्रादेव त्राणमेषां कृतं चेत्किं कोऽप्यञ्चेदान्तराञ्जेतुमेतान् ॥ १७ ॥

**देवतिलकः**—(विलोक्य सानन्दमिव ।) देव, दीयतामत्र प्रतिवचनम् ।

**राजा**—पारक्यस्य रक्षणे को भारः ।

जन्तोः प्रत्यय एष यन्मम सुतः संपद्यते तत्कुतः
साक्षिण्यात्मनि तत्परेण जनितं देहेन देहान्तरम् ।
प्राक्कालेऽपि सतो भवेदपि कुतो जन्यत्वमप्यात्मनः
कस्मान्नित्यनिवृत्त एष जनको जायेत कायेतरः ॥ १८ ॥

अस्तु वात्मनिष्ठ एवायं जन्यजनकभावः, तथापि

विश्वं शश्वद्दैवरक्ष्यं न रक्ष्यं दैवारक्ष्यं वस्तु केनापि किंचित् ।
विष्णुं हित्वा सर्वसत्त्वावितारं येनानीता विप्रपुत्राः प्रमीताः ॥ १९ ॥

**देवतिलकः**—(बालं निर्दिश्य ।) हा, कष्टमेतस्य ।

आहूयान्तर्विस्मरसुखस्नेहसंदोहलोलं
चञ्चच्चोलं द्रुतमुपगतस्याङ्कमारोपितस्य ।
केलीलम्बामलकपटलीं पाणिनोन्नीय धूली-
लिप्तं हृष्यन्वसनदशया वक्त्रमुन्मार्जयेत्कः ॥ २० ॥

**राजा**—(आत्मगतम् ।) कस्य नामैतादृशानि ललितान्यङ्कुशीभवन्ति हृदयस्य । (प्रकाशम् ।) मन्त्रिन्,

क्षणिकादाविलीभावाद्भावादेवंविधादपि ।
निर्मलस्यात्मनः किं स्याद्दर्पणस्येव फूत्कृतात् ॥ २१ ॥

अपि च ।

स्त्रीव्रणान्नश्वरे रक्तरेतःक्लेदोद्गते च्युते ।
क्रिमावनाहितश्रद्धाः पुत्रे बद्धादराः कुतः ॥ २२ ॥

---

(क) आर्यपुत्र, केन पुनरेष बालो रक्षणीयः ।

देवतिलकः—राजन्, प्राधान्यतः स्वर्गसुखहेतवः पुत्रा इति तानाद्रियन्ते महान्तः ।

**राजा—**

चिराचीर्णैर्दुःखैः समुदयति यन्नाशनियतं
तदाशङ्कादुःखैः स्थितमपि चिरं यद्व्यथयति ।
विनाशे दुःखानां विधिरहह यत्तत्र विदुषां
सुखे स्वर्गादौ चेद्रतिरतितरां नापदि कुतः ॥ २३ ॥

अत एव कियन्ति दुःखदुर्दिनानि कियती सुखखद्योतिकेत्युदाहरन्ति महान्तः । अपि च ।

ब्रह्मानन्दघनाम्भोधेः कणाः स्वःप्रमुखं सुखम् ।
क्षुद्रायास्मै न किं तस्मै हा स्पृहामावहाम्यहम् ॥ २४ ॥

**देवतिलकः**—हा कष्टम् । राजाश्रितानां संपदादीनां कः प्रकारः ।

**राजा—**

अन्यं कंचिदुपाश्रयन्तु पुरुषं भोगोन्मुखं संपदः
कामक्रोधमदापदानि भवतां भूयांसि मामुज्झतः ।

(अञ्जलिं बद्ध्वा ।)

क्षन्तव्यं गुरुदैवतद्विजगणैः श्रौतान्निदेशादहं
विज्ञानेन विकृष्य निष्ठुरतरं नीये परब्रह्मणि ॥ २५ ॥

**देवतिलकः**—राजन्, एवमकिंचनस्य ते शरीरभरणमपि दुर्घटम् ।

**राजा—**

स्वच्छन्दाटनमात्रतः परगृहान्नानारसान्नादनं
कन्थाकोमलसंस्तरस्तरुघनच्छायासु वासक्रिया ।
अश्रान्तिः सुखसंचरेण रुचितः शीतातपोपासनं
देहे यत्सुखमस्ति शान्तिसुलभं गेहे सतस्तत्कुतः ॥ २६ ॥

अपि च, अलमस्य भरणायासेन । पश्य ।

आयुः कोऽपि कणो महारयवहानेहोमयस्रोतस-
स्तत्संबन्धमिदं वपुर्बत गतप्रायं मया लक्ष्यते ।

एतत्तिष्ठति नाम तिष्ठतु फलं गच्छत्यलं गच्छतु
स्वात्मा केवलमेष निर्भरसुखाश्लेषः स्फुरन्नस्तु नः ॥ २७ ॥

तथापि

यामीमाज्ञां हा वयं भावयन्तो भोगैस्त्याज्या एव राज्यादिभिश्चेत् ।
न त्यज्यन्ते वञ्चयन्तः स्वयं ते कस्मादेवं तावदस्माभिरेव ॥ २८ ॥

साभिनिवेशं चाकलय ।

चित्रं चित्रमरङ्गवर्तिकमिदं निर्भित्तिकं शिल्पिनः
संकल्पस्य विकल्पनैर्विरचितं चिद्व्योमपट्टे जगत् ।
दीर्घस्वप्नमिदं वदन्ति सुधियः केऽपीन्द्रजालं पुनः
प्रोचुः केचिदथान्तरिक्षनगरीमेवापरे मेनिरे ॥ २९ ॥

**गोरक्षः**—साधु वत्स, साधु । सर्वानपि निर्वाणशालिनो जीवानतिशय्य वर्तसे । मन्त्रिन्, अलमनेनानिवर्तनीयनिवर्तनेन । अभिषिच्यतामयं राज्ये राजपुत्रः । मयापि राज्ञा सह एतद्रक्षापक्षपातिनैव स्थेयम् ।

**देवतिलकः**—(निःश्वस्य ।) यदादिशति भगवान् ।

(भानुमती शोकविकलं परिदेवते ।)

**गोरक्षः**—देवि, अस्ति ते भूयः स्वामिनोऽमृतीकरणसमये समागमः (राजानं प्रति ।) राजन्, किं ते भूयः प्रियमुपकरोमि ।

**राजा**—भगवन्, अतः परमपि प्रियमस्ति ।

**गोरक्षः**—तथापीदमस्तु ।

साधोः सिध्यतु कार्यमृध्यतु चिरं राजा प्रजारञ्जना-
ल्लक्ष्मीरक्षतपक्षपातमधुरा भूयादुदारात्मनाम् ।
त्वद्बोधापगमागतादथ सुहृत्सार्थात्सदर्थार्पणै-
रस्मिन्हारिहरी परीक्षितगुणा प्रीणातु गीर्गौरवम् ॥ ३० ॥

(इति निष्क्रान्ताः सर्वे ।)

पञ्चमोऽङ्कः ।

**समाप्तमिदं श्रीहरिहरोपाध्यायकृतं भर्तृहरिनिर्वेदं नाम नाटकम् ।**